सार्थं तु सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति। शब्दादिषु च सुखाद्यात्मताव्यवहार एकार्थसमवायात्। अस्तु वा शब्दादिषु साक्षादेव सुखमुक्तप्रमाणेभ्यः, विषयगतसुखादेश्च बुद्धिमात्रग्राह्यत्वं फलबलात्। यत् तु विषयासम्प्रयोगकाले शान्तिसुखं सात्त्विकं सुषुप्त्यादौ व्यज्यते, तदेव बुद्धिधर्म आत्मसुखमुच्यते इति।

यद्यपि वैशेषिकाद्या अपि तार्किकाः प्रपञ्चेऽन्यथापि कार्यकारणव्यवस्थामनुमिमते तथापि बहुलश्रुतिस्मृत्युपोद्बलनेनास्माभिरनुमितैव व्यवस्था मुमुक्षुभिरुपादेया, मूलशैथिल्यदोषेण परानुमानानां दुर्बलत्वात्। अतएव तर्काप्रतिष्ठानादिति[1] वेदान्तसूत्रेणाप्रतिष्ठादोषतः केवलतर्कोऽपास्तः। तथा मनुनापि[2]—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

इति वेदाविरुद्धतर्कस्यैवार्थनिश्चायकत्वमुक्तम्। तस्मात्— '—श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः'[3] इत्यादिवाक्येभ्यः श्रवणसमानार्थकमेव मननं बलवत्। अन्याकारं मननं तु परेषां दुर्बलम्। एवं पुरुषेऽपि सुखदुःखादिमत्त्वेन तेषामनुमानं बहुलश्रुत्यादिविरोधाद् दुर्बलमिति दिक्। प्रकृतिगतविशेषं च पश्चाद्वक्ष्यामः॥६५॥

महत्तत्त्व रूप कार्य को देखकर उसका प्रकृतिरूप उपादान कारण अनुमित होता है। (६२–६५ सूत्रों में जिस अनुमान की चर्चा की गई है, वह षष्टितन्त्र में विस्तार से प्रतिपादित था; इस विषय की कई युक्तियाँ शान्तिपर्वगत सांख्यप्रकरण में आज भी मिलती हैं; भूमिका द्र०)।

नन्वखिलजडेभ्यः पुरुषविवेक एव मुक्तौ हेतुस्तत् किमर्थं जडानामन्योऽन्यविवेकोऽत्र दर्शित इति चेत्; प्रकृत्यादितत्त्वोपासनया सत्त्वशुद्ध्यर्थं विवेकस्याप्यपेक्षितत्वादिति। कार्यकारणमुद्रया प्रकृतिपर्यन्तस्यानुमानेन विवेकतः सिद्धिमुक्त्वा यथोक्तकार्यकारणभावशून्यस्य पुरुषस्य प्रकारान्तरेणानुमानतस्तथा सिद्धिमाह—

**संहतपरार्थत्वात् पुरुषस्य ॥६६॥**

---

१. ब्रह्मसूत्रम् २।१।११

२. मनु० १२।१०६

३. तु० बृहदारण्यक-भाष्यवर्त्तिकम् १०८३।

संहननमारम्भकसंयोगः, स चावयवावयव्यभेदात् प्रकृतिकार्यसाधारणः। तथा च संहतानां प्रकृतितत्कार्याणां परार्थत्वानुमानेन पुरुषस्य बोध इत्यर्थः। तद्यथा विवादास्पदं प्रकृतिमहदादिकं परार्थं स्वेतरस्य भोगापवर्गफलकं संहतत्वात् शय्यासनादिवदित्यनुमानेन प्रकृतेः परोऽसंहत एव पुरुषः सिध्यति तस्यापि संहतत्वेऽनवस्थापत्तेः।

पातञ्जले चं परार्थं संहत्यकारित्वादिति[1] सूत्रकारेणानुमानं कृतं तत् तु यथाश्रुतमेवान्त्यावयवसाधारणम्। इतरसाहित्येनार्थक्रियाकारित्वस्यैव संहत्यकारिताशब्दार्थत्वात्। पुरुषस्तु विषयप्रकाशरूपायां स्वार्थक्रियायां नान्यदपेक्षते नित्यप्रकाशरूपत्वात्। पुरुषस्यार्थक्रियायां नान्यदपेक्षतेनित्यप्रकाशरूपत्वात्। पुरुषस्यार्थसम्बन्धमात्रे बुद्धिवृत्त्यपेक्षणात्। सम्बन्धस्तु नासाधारण्यर्थक्रियेति। अत्र च 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवतीत्यादि'[2]श्रुतिस्मृतयोऽनुकूलतर्काः। अन्यच्च सुखादिमत् प्रधानादिकं यदि स्वस्य सुखादिभोगार्थं स्यात् तदा तस्य साक्षात् स्वज्ञेयत्वे कर्मकर्तृविरोधः, न हि धर्मिभानं विना सुखस्य भानं सम्भवति। अहं सुखीत्येवं सुखानुभवादिति। अपि च संहन्यमानानां बहूनां गुणानां तत्कार्याणां चानेकविकाराणामनेकचैतन्यगुणकल्पनायां गौरवेण लाघवादेक एव चित्प्रकाशरूपः पुरुषः सर्वसंहतेभ्यः परः कल्पयितुं युज्यत इति।

अनेन सूत्रेण निमित्तकारणतया पुरुषानुमानमुक्तं पुरुषार्थस्याखिलवस्तुसंहननिमित्तत्ववचनात्। अत एव सर्गाद्युत्पन्नं पुरुषं प्रकृत्य विष्णुपुराणादौ स्मर्यते—

निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः।[3]
गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने।
गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम॥[4]

इत्यादिक्षेत्रज्ञाधिष्ठानं चासमाप्तपुरुषार्थस्य संयोगमात्रं गुणव्यञ्जनं महत्तत्वं कारणतया त्रिगुणात्मप्रधानव्यञ्जकत्वादिति। तदेवमचाक्षुषाणामनुमानेन[5] सिद्धिरुक्ता॥६६॥

---

१. योगसूत्रम् ४।२४

२. बृहदा० २।४।५

३. विष्णुपु० १।४।५१;

४. विष्णुपु० १।२।३३;

५. १।६० सूत्रं द्र०।

'संहत्यकारी वस्तु परार्थ होती है' इस नियम से पुरुष की सत्ता का ज्ञान होता है (चित्तादि की संहत्यकारिता से चित्ताधिष्ठाता पुरुष अनुमित होता है; चैत्तिक क्रिया अङ्गभूत अनेक अवयवों की समञ्जस क्रियाओं की समष्टि है, अतः चित्त संहत्यकारि है) [द्र० भूमिका]।

इदानीं सर्वकारणत्वोपपत्तये प्रकृतिनित्यत्वमुपपाद्यते पुरुषकौटस्थ्य-सिद्ध्यर्थम्—

**मूले मूलाभावादमूलं मूलम् ॥६७॥**

त्रयोविंशतितत्त्वानां मूलमुपादानं प्रधानं मूलशून्यम् अनवस्थापत्त्या तत्र मूलान्तरासम्भवादित्यर्थः ॥६७॥

तेईस तत्त्वों (भूत से महत् पर्यन्त) का जो मूल उपादान है, उसका कोई मूल नहीं है। अतः प्रकृति (=प्रधान=अव्यक्त) निष्कारण कहलाता है।

ननु 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम'[1] इत्यादिना प्रधानस्यापि पुरुषादुत्पत्तिश्रवणात् पुरुष एव प्रकृतेर्मूलं भवतु पुरुषस्य नित्यतया च नानवस्था अविद्याद्वारकतया च न पुरुषकौटस्थ्याहानिः; तथा च स्मर्यते—
'तस्मादज्ञानमूलोऽयं संसारः पुरुषस्य हि'[2] इति। इत्याशङ्क्याह—

**पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥६८॥**

अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽप्येकस्मिन्न-विद्यादौ यत्र कुत्रचिन्नित्ये द्वारे परम्परायाः पर्यवसानं भविष्यति पुरुषस्या-परिणामित्वात्। अतो यत्र पर्यवसानं सैव नित्या प्रकृतिः[3]। प्रकृतिरिह मूलकारणस्य संज्ञामात्रमित्यर्थः ॥६८॥

इसका उपादान कारण कोई है, उसका अन्य कोई कारण है, इस प्रकार की कारणपरम्परा देखी जाती है, पर इस परम्परा की परिनिष्ठा (समाप्ति) कहीं अवश्य होती है। यह समाप्ति जड़ त्रिगुण में ही सकती है, चिद्रूप पुरुष में नहीं। जहाँ इस कार्यकारण परम्परा की समाप्ति है, उसका नाम 'प्रकृति' है।

नन्वेवं पञ्चविंशतितत्त्वानीति नोपपद्यते महत्तत्त्वकारणाव्यक्तापेक्ष-यापि जडतत्त्वान्तरापत्तेरित्याशयेन मूलसमाधानमाह—

**समानः प्रकृतेर्द्वयोः ॥६९॥**

---

१. शान्ति० ३३४।३१

२. कूर्म० २।२।१६ (तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम्)।

३. प्रकृतेर्नित्यत्वादिकं पुराणादिपूक्तम् [द्र० भूमिका]।

वस्तुतस्तु प्रकृतेर्मूलकारणविचारे द्वयोर्वादिप्रतिवादिनोरावयोः समानः पक्षः। एतदुक्तं भवति—यथा प्रकृतेरुत्पत्तिः श्रूयते एवमविद्याया अपि—'अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः'[१] इत्यादिवाक्यैः अत एकस्या अवश्यं गौण्युत्पत्तिर्वक्तव्या। तत्र च प्रकृतेरेव पुरुषसंयोगादिभिरभिव्यक्तिरूपा गौण्युत्पत्तिर्युक्ता। संयोगलक्षणोत्पत्तिः कथ्यते कर्मज्ञानयोरिति कौर्मवाक्ये[२] प्रकृतिपुरुषयोर्गौणोत्पत्तिस्मरणात्। अविद्यायाश्च क्वापि गौणोत्पत्त्यश्रवणात् तस्या अनादिता। वाक्यानि तु प्रवाहरूपेणैव वासनाद्यनादिवाक्यवद्व्याख्येयानीति।

अविद्या च मिथ्याज्ञानरूपा बुद्धिधर्म इति योगे सूत्रितम[३]तो न तत्त्वाधिक्यम्। अथवा द्वयोः प्रकृतिपुरुषयोः समान एव न्याय इत्यर्थः।

यतः प्रधानपुरुषौ यतश्चैतच्चराचरम्।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु[४]॥

इत्यादिवाक्यैः पुरुषस्याप्युत्पत्तिश्रवणादिति भावः। तथा च पुरुषस्येव प्रकृतेरपि गौण्येवोत्पत्तिः; नित्यत्वश्रवणादित्यपि समानमिति। तस्मात् प्रकृतिरेवोपादानं जगतः प्रकृतिधर्मश्चाविद्या जगन्निमित्तकारणं तथा पुरुषोऽपीति सिद्धम्; यत् तु—

अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणम्।
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम्॥[५]

इति मोक्षधर्मे प्रकृतिपुरुषयोरविद्याविद्येति वचनं तत् तदुभयविषयतयोपचरितमेव; परिणामित्वेन हि पुरुषापेक्षया प्रकृतिरसतीति तस्या अविद्याविषयत्वमुक्तम्। एवमेव तस्मिन् प्रकरणे स्वस्वकारणापेक्षया भूतान्तं कार्यजातमविद्येत्युक्तं स्वस्वापेक्षया च स्वस्वकारणं विद्येति। पुरुषस्य परिणामरूपं जगदुपादानत्वं तु प्रकृत्युपाधिकमेव कर्तृत्वादिवच्छ्रुतिस्मृत्योरुपासार्थमेवानूद्यते। अन्यथा 'अस्थूलमनण्वहस्वमि'त्यादि[६]श्रुतिविरोधापत्तेरिति मन्तव्यम्।

---

१. विष्णुपु० १।५।५; आहात्र श्रीधरः; पञ्च पर्वाणि वृत्तिविशेषा यस्याः सा। मार्कं० ४७।१६।

२. द्र० भूमिका।

३. विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् (१।८) इत्यत्राह भाष्यकारः—सेयं पञ्चपर्वा भवत्यविद्या इति, अतोऽविद्या बुद्धिपरिणामरूपा वृत्तिविशेष एव।

४. द्र० भूमिका।

५. शान्ति ३०७।२—'अविद्यामाहुरवक्तं सर्गप्रलयधर्मि वै। सर्गप्रलयनिर्मुक्तां विद्यां वै पञ्चविंशकः' इति मुद्रितः पाठः।

६. बृहदा० ३।८।८

मायाशब्देन च प्रकृतिरेवोच्यते, मायां तु प्रकृतिं विद्यादिति श्रुतौ[1], अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः[2], इति पूर्वप्रकान्तमायायाः प्रकृतिस्वरूपतावचनात् ।

सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम् ।
एतन्मयी च प्रकृतिर्माया या वैष्णवी श्रुता ।
लोहितश्वेतकृष्णेति तस्यास्ताद्दग्बहुप्रजाः[3] ।

इत्यादिस्मृतिभ्यश्च । न तु ज्ञाननाश्या अविद्या मायाशब्दार्थौ नित्यत्वानुपपत्तेः । किञ्चाऽविद्याया द्रव्यत्वे शब्दमात्रभेदो गुणत्वे च तदाधारतया प्रकृतिसिद्धिः पुरुषस्य निर्गुणत्वादिभ्यः । अथ द्रव्यगुणकर्मविलक्षणैवास्माभिरविद्या वक्तव्येति चेन्न ताद्दक्पदार्थाप्रतीतेरुक्तत्वादिति[4] ॥६९॥

प्रकृति की मूलकारणता के विचार में अन्य वादी और सांख्य का पक्ष समान है अर्थात् उभयपक्ष में आक्षेप समान होते हैं, सुतरां कोई किसी को निवृत्त नहीं कर सकता [द्र० भूमिका] ।

नन्वेवं चेत् प्रकृतिपुरुषाद्यनुमानप्रकारोऽस्ति तर्हि सर्वेषामेव कथं विवेकमननं न जायते, तत्राह—

अधिकारित्रैविध्यान्न नियमः ॥७०॥

श्रवणादाविव मननेऽप्यधिकारिणस्त्रिविधा मन्दमध्यमोत्तमा इत्यतो न सर्वेषामेव मनननियमः कुतर्कादिभिर्मन्दमध्यमयोर्बाधसत्प्रतिपक्षतासम्भवादित्यर्थः । मन्दैर्हि बौद्धाद्युक्तकुतर्कजातेनोक्तानुमानानि बाध्यन्ते । मध्यमैश्च बुद्धाद्युक्तैरेव विरुद्धासल्लिङ्गैः सत्प्रतिपक्षितानि क्रियन्ते । अत उत्तमाधिकारिणामेवैताद्दशमननं भवतीति भावः । प्रकृतेः स्वरूपं गुणसाम्यं प्रागेवोक्तम्, सूक्ष्मभूतादिकं च प्रसिद्धमेवास्तीति ॥७०॥

शास्त्र के अधिकारी तीन प्रकार के होते हैं—मन्द, मध्यम और उत्तम । इनके योग्यता-भेद से श्रवण-मनन-निदिध्यासन कर्मों में भेद होते हैं—किसी के लिये श्रवण ही कार्य है, कोई सूक्ष्म मनन कर सकता है, इत्यादि ।

अवशिष्टयोर्महदहङ्कारयोः स्वरूपमाह सूत्राभ्याम्—

---

१. श्वेताश्व० ४।१०
२. श्वेताश्व० ४।९
३. द्र० भूमिका ।
४. सांख्यसूत्रम् १।२४

**महदाख्यमाद्यं कार्यं तन्मनः[1] ॥७१॥**

महदाख्यमाद्यं कार्यं तन्मनो मननवृत्तिकम् । मननमत्र निश्चयस्तद्वृत्तिका बुद्धिरित्यर्थः ।

यदेतद्विस्तृतं बीजं प्रधानपुरुषात्मकम् ।
महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते[2] ॥
इत्यादिवाक्येभ्यो बुद्धेरेवाद्यकार्यत्वावगमात् ॥७१॥

प्रकृति का प्रथम विकारभूत जो महत् तत्त्व है (अस्मीति-लक्षणक), वह (सांख्यीय संप्रदाय में) मनःपद से भी अभिहित होता है। मनन (= अध्यवसाय = अधिकृत बाह्याभ्यन्तर विषय का प्राकाश्य-पर्यवसान) रूप वृत्ति के कारण ही 'मनः' शब्द प्रयुक्त होता है।

**चरमोऽहङ्कारः ॥७२॥**

तस्यानन्तरो यः सोऽहङ्करोतीत्यहङ्कारोऽभिमानवृत्तिक[3] इत्यर्थः ॥७२॥

महत् के बाद जो उत्पन्न होता है वह अभिमान-वृत्तिवाला अहंकार है।

यतोऽभिमानवृत्तिकोऽहङ्कारोऽतस्तत्कार्यत्वमुत्तरेषामुपपन्नमित्याह—

**तत्कार्यत्वमुत्तरेषाम् ॥७३॥**

सुगमम् । एवं त्रिसूत्रीं व्याख्याय पौनरुक्त्याशङ्काऽपास्ता ॥७३॥

तन्मात्र आदि अहंकार के कार्य माने जाते हैं।

नन्वेवं प्रकृतिः सर्गकारणमिति श्रुतिस्मृतिविरोध इत्याशङ्कायामाह—

**आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥७४॥**

पारम्पर्येऽपि साक्षादहेतुत्वेऽप्याद्यायाः प्रकृतेर्हेतुताऽहङ्कारादिषु महदादिद्वाराऽस्ति । यथा वैशेषिकमतेऽणूनां घटादिहेतुता द्व्यणुकादिद्वारैवेत्यर्थः॥७४॥

प्रकृति सभी विकारभूत पदार्थों का आदिम उपादान है। भूत, तन्मात्र, मनः, इन्द्रिय, अहंकार, महत् आदि विकारों में भी अवान्तर कार्य-कारण-परम्परा है। ऐसी दृष्टि अणुवादी में भी है। उनके मत में अणु आदिम कारण है; घट का साक्षात् कारण कपाल है, अणु नहीं।

---

१. महतो नामानि बहूनि पुराणे उक्तानि, तथाहि—बुद्धिर्मनश्च लिङ्गं च महानक्षर एव च । पर्यायवाचकैः शब्दैः तमाहुस्तत्त्वचिन्तकाः (वायु० १०२।२१)।

२. द्र० भूमिका।

३. अहंकारादिस्वरूपविषये भूमिका द्र०।

ननु प्रकृतिपुरुषयोरुभयोरेव नित्यत्वात् प्रकृतेरेव कारणत्वे किं नियामकं तत्राह—

**पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥७५॥**

द्वयोरेव पुम्प्रकृत्योरखिलकार्यपूर्वभावित्वेऽप्येकतरस्य पुरुषस्यापरिणामित्वेन कारणताहान्याऽन्यतरस्याः कारणत्वौचित्यमित्यर्थः। पुरुषस्यापरिणामित्वे चेदं बीजम्। पुरुषस्य संहत्यकारित्वे परार्थत्वापत्त्याऽनवस्था। असंहत्यकारित्वे सर्वदा महदादिकार्यप्रसङ्गः। प्रकृतिद्वारा परिणामकल्पने च लाघवात् तस्या एव परिणामोऽस्तु पुरुषे तु स्वामित्वेन स्रष्टृत्वोपचारो यथा योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते[1] तत्फलसुखदुःखभोक्तृत्वेन तत्स्वामित्वादिति।

किञ्च धर्मिग्राहकमानेन कारणतयैव प्रकृतेः सिद्धौ नान्यकारणाकाङ्क्षाऽस्ति। यथा धर्मिग्राहकप्रमाणेन द्रष्टृतया पुरुषसिद्धौ नान्यद्रष्ट्राऽकाङ्क्षेति, अपि च पुरुषस्य परिणामित्वे कदाचिच्चक्षुर्मनआदिवद् आन्ध्यत्वमपि स्यात्। तथा च विद्यमानमपि सुखदुःखादिकं न ज्ञायेत ततश्चाहं सुखी न वेत्यादिसंशयापत्तिः। अतः सदा प्रकाशस्वरूपत्वानपायेन पुरुषस्यापरिणामित्वं सिध्यति। तदुक्तं योगसूत्रेण—सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वादिति।[2] तद्भाष्येण च—सदा ज्ञानविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयतीति।[3] सदा प्रकाशस्वरूपत्वेऽपि यथा नैकदा विश्वप्रकाशत्वं तथा वक्ष्यामः ॥७५॥

आदिम उपादान प्रकृति एवं सर्वमूल निमित द्रष्टा पुरुष—ये दो अनादि एवं सभी कार्यों से पहले हैं। पुरुष निष्क्रिय है अतः कार्य रूप परिणाम के प्रति उसका साक्षात् कर्तृत्व नहीं है, सुतरां विकारों के साथ साक्षात् संबंध प्रकृति का ही है। (अपरिणामी पुरुष के सान्निध्यमात्र से परिणाम-शील प्रकृति व्यक्त होती है; व्यक्त होना और गुण-वैषम्य होना एक ही है; वैषम्य होने पर ही विकार होते हैं, अन्यथा वे अव्यक्तरूप में रहते हैं)।

---

१. अत्रेदं व्यासभाष्यवचनम् द्र०—ते (क्लेशकर्मादयः) च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत् फलस्य भोक्तेति। यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते (१।२४)।

२. योगसूत्रम् ४।१८

३. भाष्यवाक्यम्—ज्ञाताज्ञातविषयत्वात् परिणामिनी हि बुद्धिः तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञाताश्चाज्ञाताश्चेति परिणामित्वं दर्शयति। सदाज्ञातविषयत्वं तु पुरुषस्य अपरिणामित्वं परिदीपयति (२।२०)। अत्र ४।१८ भाष्यमपि द्रष्टव्यम्।

प्रकृतेर्युगपत्कारणत्वोपपत्तये विभुत्वमपि प्रतिपादयति ।

**परिच्छिन्नं न सर्वोपादानम् ॥७६॥**

सर्वोपादानं प्रधानं न परिच्छिन्नं व्यापकमित्यर्थः । सर्वोपादानत्वमत्र हेतुगर्भविशेषणम्, परिच्छिन्ने तदसम्भवादिति । ननु प्रकृतेरपरिच्छिन्नत्वं नोपपद्यते, प्रकृति र्हि सत्त्वादिगुणत्रयादतिरिक्ता न भवति सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादि[1]त्यागामिसूत्रात्, योगसूत्रभाष्याभ्यां स्पष्टमवधृतत्वाच्च ।[2] तेषां च सत्त्वादीनां लघुत्वचलत्वगुरुत्वादयो धर्मा वक्ष्यमाणा[3] विभुत्वे सति विरुध्यन्ते सृष्ट्यादिहेतवः संयोगविभागादयश्च नोपपद्यन्त इति ।

अत्रोच्यते—परिच्छिन्नत्वमत्र दैशिकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वं तदभावश्च व्यापकत्वम् तथा च जगत्कारणत्वस्य दैशिकाभावप्रतियोगितानवच्छेदकत्वमेवेति प्रकृतेर्व्यापकत्वमिति पर्यवसितम् । यथा प्राणस्य स्थावरजङ्गमाद्यखिलशरीरव्यापकत्वं प्राणत्वसामान्येनोच्यते प्राणव्यक्तीनां सर्वदेहसम्बन्धात् तद्वत् प्रकृतेर्व्यापकत्वमिति । प्रकृतेरक्रियैकत्त्वादिकं च साधर्म्यवैधर्म्यसूत्रे[4] प्रतिपादयिष्यामः ॥७६॥

चूँकि प्रकृति ग्राह्य, ग्रहण एवं ग्रहीता रूप त्रिविध (अर्थात् सर्वविध) द्रव्यों का उपादान है, अतः वह परिच्छिन्न नहीं है, अर्थात् वह देश और काल से अवच्छिन्न नहीं होती। अव्यक्त प्रकृति का कोई आधार नहीं है। देश-कालातीत मूल प्रकृति निरवयव एवं अनाश्रित है। व्यक्त पदार्थ ही देश कालाश्रित होते हैं।

न केवलं सर्वोपादानत्वात्, अपि तु—

**तदुत्पत्तिश्रुतेश्च ॥७७॥**

तेषां परिच्छिन्नानामुत्पत्तिश्रवणाच्च । अथ यदल्पं तन्मर्त्यमित्यादिश्रुतिषु[5] करणधर्मकत्वेन परिच्छिन्नस्योत्पत्त्यवगमात् । श्रुत्यन्तरेभ्यश्चेत्यर्थः ॥७७॥

परिच्छिन्न व्यक्त पदार्थों की उत्पत्ति होती है, ऐसी श्रुति है। अपरिच्छिन्न प्रकृति का कोई उपादान कारण नहीं है सुतरां 'कारण में लय होना' रूप नाश भी प्रकृति का नहीं है। वह आदिहीन एवं अन्तहीन है।

---

१. सांख्यसूत्रम् ६।३९ ।
२. दृश्यतां व्यासभाष्यम् २।१८-१९ ।
३. १।१२८ इत्यादीनि सूत्राणि द्र० ।
४. सांख्यसूत्रम् १।१२८
५. छान्दोग्य० ७।२४।१

इदानीं प्रकृतिकारणतोपपत्तयेऽभावादि-कारणतां निरस्यति—

**नाऽवस्तुनो वस्तुसिद्धिः ॥७८॥**

अवस्तुनोऽभावान्न वस्तुसिद्धिर्भावोत्पत्तिः। शशशृङ्गाज्जगदुत्पत्त्या मोक्षाद्यनुपपत्तेः, तददर्शनाच्चेत्यर्थः ॥७८॥

अभाव वस्तु का कारण है, ऐसा मानकर भावरूप प्रकृति के कारणत्व का खण्डन नहीं किया जा सकता, क्योंकि अभाव रूप अवस्तु से वस्तुसिद्धि (भाव की उत्पत्ति) नहीं हो सकती।

ननु जगदप्यवस्त्वेवास्तु स्वप्नादिवदिति तत्राह—

**अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥७९॥**

स्वप्नपदार्थस्येव प्रपञ्चस्य बाधः श्रुत्यादिप्रमाणैर्नास्ति। तथा शङ्खपीतिमादेरिव दुष्टेन्द्रियादिजन्यत्वमपि नास्ति, दोषकल्पने प्रमाणाभावादित्यतो न कार्यस्यावस्तुत्वमित्यर्थः। ननु वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्या[1]दिश्रुतिभिरेव प्रपञ्चस्य बाधो बाधाच्चाविद्याख्यदोषोऽपि स्वकारणेऽस्तीति चेन्न। मृद्दृष्टान्तसिद्धयन्यथानुपपत्त्या स्वकारणापेक्षकास्थैर्यरूपासत्त्वपरत्वात् तादृग्वाक्यानामन्यथासृष्ट्यादिवाक्यविरोधाच्च।

किञ्च श्रुत्या प्रपञ्चबाधे आत्माश्रयः स्वस्यापि प्रपञ्चान्तर्गततया बाधेन तद्बोधितार्थे पुनः संशयापत्तिश्चेति। अत एव बाधाबाधादिवैधर्म्यादुपलम्भाच्च जाग्रत्प्रपञ्चस्य स्वप्नखपुष्पादितुल्यत्त्वमतिनिर्बन्धेन प्रत्याचष्टे वेदान्तसूत्रद्वयम् वैधर्म्याच्च न स्वप्नादिवदिति[2], उपलब्धेश्चेति च[3]। नेति नेतीत्येवंविधवाक्यानि[4] च विवेकपराण्येव न तु स्वरूपतः प्रपञ्चनिषेधापराणि प्रकृतैतावत्त्वं प्रतिषेधतीति वेदान्तसूत्रात्[5]। एवमन्यान्यपि वाक्यानि ब्रह्ममीमांसाभाष्ये[6]ऽस्माभिर्व्याख्यातानि ॥७९॥

---

१. छान्दोग्य० ६।१।४; अत्रार्थे वायुपुराणम्—प्रकृतिं सत्यमित्याहुर्विकारोऽनृतमुच्यते इति (१०२।२०७)।

२. ब्रह्मसूत्रम् २।२।२९

३. ब्रह्मसूत्रम् २।२।३०

४. बृहदा० २।३।६ (अथात आदेशो नेति नेति)। आदेशः = निर्देशो ब्रह्मणः (शांकरभाष्यम्)।

५. ब्रह्मसूत्रम् ३।२।२२

६. विज्ञानामृतभाष्यम् (३।१–२ पादयोः यथास्थानम्)।

यह नहीं कहा जा सकता कि स्वप्न की तरह यह जगत् भी अवस्तु ही है, क्योंकि जगत् का बाध नहीं होता। किंच जगत् का ज्ञान इन्द्रियदोषहेतुक नहीं है कि यह अवस्तु होगा। [द्र० भूमिका]।

नावस्तुनो वस्तुसिद्धिरिति (१।७४) यदुक्तं तत्र हेतुमाह—

**भावे तद्योगेनं तत्सिद्धिरभावे तदभावात् कुतस्तरां तत्सिद्धिः ॥८०॥**

भावे कारणस्य सद्रूपत्वे तद्योगेन सत्तायोगेन कार्यसिद्धिर्घटेत कारणस्याभावेऽसद्रूपत्वे तु तदभावात् कार्यस्याप्यसत्त्वात् कथं वस्तुभूतकार्य-सिद्धिः कारणस्वरूपस्यैव कार्यस्यौचित्यादित्यर्थः ॥८०॥

कारण यदि भाव पदार्थ हो तो उसके योग से ही भावभूत कार्य उत्पन्न हो सकेगा। कारण यदि अभाव रूप होगा तो वह किस रूप से कार्य को उत्पन्न करेगा ?

ननु तथापि कर्मैवावश्यकत्वाज्जगत्कारणमस्तु किं प्रधानकल्पनयेति तत्राप्याह—

**न कर्मण उपादानत्वायोगात् ॥८१॥**

कर्मणोऽपि न वस्तुसिद्धिर्निमित्तकारणस्य कर्मणो न मूलकारणत्वं गुणानां द्रव्योपादानत्वायोगात्। कल्पना हि दृष्टानुसारेणैव भवति वैशेषिकोक्तगुणानां चोपादानत्वं न क्वापि दृष्टमित्यर्थः। अत्र कर्मशब्दोऽविद्यादीनाम-प्युपलक्षको गुणत्वाविशेषेण तेषामप्युपादानत्वायोगात्। चक्षुषः पटलादिवद-विद्यायाश्चेतनगतद्रव्यत्वे तु प्रधानस्य संज्ञामात्रभेद इति ॥८१॥

कर्म ही जगत् का कारण है—प्रकृतिरूप उपादान की आवश्यकता नहीं है—ऐसा नहीं कहा जा सकता। कर्म किसी का उपादान नहीं हो सकता। कर्म निमित्त-कारण मात्र है। इस प्रकार मिथ्याज्ञान रूप अविद्या ही जगत् का कारण है, ऐसा नहीं कहा जा सकता, क्योंकि वह ग्राह्य-ग्रहणादि पदार्थों का उपादान नहीं हो सकती।

तदेवं परिणामित्वापरिणामित्व-परार्थत्वापरार्थत्वाभ्यां पुम्प्रकृत्योर्विवेको दर्शितः। इदानीं विवेकज्ञानस्यैवाविवेकनाशद्वारा परमपुरुषार्थहेतुत्वं न तु तत्र वैदिककर्मणां साक्षाद्धेतुताऽस्तीति यत् प्रागुक्तमविशेषश्चोभयोरिति[1] सूत्रेण तदेव प्रपञ्चयति पञ्चभिः सूत्रैः—

---

१. सांख्यसूत्रम् १।६

**नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥८२॥**

अपिशब्देन न दृष्टात् तत्सिद्धिरिति[1] प्रागुक्तदृष्टसमुच्चयः। गुरोरनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितो यागादिरानुश्रविकं कर्म तस्मादपि न पूर्वोक्तपुरुषार्थसिद्धिः। यतः कर्मसाध्यत्वेन पुनरावृत्तिसम्बन्धादत्यन्तपुरुषार्थत्वाभाव इत्यर्थः। कर्मसाध्यस्य चानित्यत्वे श्रुतिः—तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत[2] इति। न कर्मणान्यधर्मत्वादिति सूत्रेण[3] पूर्वं कर्मणा बन्धो निराकृतः, इदानीं च मोक्षो निराक्रियत इत्यपौनरुक्त्यम्। अन्यधर्मत्वेन पूर्वोक्तहेतुना बन्ध इव मोक्षेऽपि कर्मणो हेतुत्वं निराकृतप्रायमिति पुनराशङ्कैव नोदेतीति चेन्न; बन्धहेतुत्वेनाविवेके सिद्धे तत्पुरुषीयाविवेकजत्वेन कर्मणां तदीयत्वव्यवस्थोपपत्तेरिति ॥८२॥

आनुश्रविक (वेदोक्त) उपायों से भी परम पुरुषार्थ की सिद्धि नहीं हो सकती, क्योंकि वेदोक्त यज्ञादि-कर्मों के बहुक्रियासाध्य होने के कारण उससे पुनरावृत्ति (संसार में पुनः आगमन) की संभावना रहती ही है (कर्म से कर्मसंस्कार संचित होगा, उससे यथायथ रूप से सत्त्वबहुल स्थिति की प्राप्ति हो सकती है, पर संस्कार रहने के कारण स्थूल-सूक्ष्म देहधारण और लोकों में गमनागमन होते ही रहेंगे)। विनाशी द्रव्य-हेतुक यज्ञादि कर्मों से किसी अविनाशी फलकी प्राप्ति संभव नहीं है।

नन्वेवं पञ्चाग्निविद्यारूपेणोपासनाख्यकर्मणा[4] तीर्थमरणादिकर्मणा च ब्रह्मलोकं गतस्यानावृत्तिश्रुतिः कथमुपपद्यते तत्राह—

**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥८३॥**

तत्रानुश्रविककर्मणि ब्रह्मलोकगतानां याऽनावृत्तिश्रुतिः सा तत्रैव प्राप्तविवेकस्य मन्तव्या। अन्यथा हि ब्रह्मलोकादप्यावृत्तिं प्रतिपादयतां वाक्यान्तराणां विरोध इत्यर्थः। तथापि साऽप्यनावृत्तिर्विवेकज्ञानस्यैव फलं न तु साक्षादेव कर्मण इति। एतच्च षष्ठाध्याये[5] प्रपञ्चयिष्यति। ब्रह्ममीमांसाभाष्ये[6] च तयोर्वाक्यान्युदाहृत्यास्माभिर्व्याख्यातानि ॥८३॥

---

१. सांख्यसूत्रम् १।२

२. छान्दोग्य० ८।१।६

३. सांख्यसूत्रम् १।१६

४. पञ्चाग्निविद्या छान्दोग्ये ५।४–९ प्रपञ्चिता।

५. सांख्यसूत्र ६।१२–१६;

६. विज्ञानामृतभाष्यम् अन्तिमसूत्रीयम्।

कर्म-विशेष के फल के रूप में अनावृत्तिरूप मोक्ष के अधिगम का उल्लेख यदि कहीं शास्त्र में हो तो यह समझना चाहिए कि साधक ने ब्रह्मलोकादि में विवेकज्ञान का अभ्यास किया था, जिससे उनको अपुनरावृत्तिरूप मोक्ष मिला। ब्रह्मलोकादि में ज्ञानाभ्यासकारी उच्च साधकों का उल्लेख पुराणादि में मिलता है।

कर्मणस्तु फलं तदाह—

**दुःखाद् दुःखं जलाभिषेकवन्न जाड्यविमोकः ॥८४॥**

आनुश्रविकात् तु हिंसादिदोषेण दुःखात्मकभोगेन च दुःखाद् दुःखं दुःखधारैव भवति न तु जाड्यविमोकोऽविवेकनिवृत्तिर्दुःखविमोकस्त्वतिदूर एव तिष्ठति। यथा जाड्यार्त्तस्य जलाभिषेकाद् दुःखानिवृत्तिरेव भवति न तु जाड्यविमोक्ष इत्यर्थः। तदुक्तम्—

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम्।
भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति[1] ॥ इति।

श्रूयते च ब्रह्मलोकस्थानां विष्णुपार्षदानामपि जयविजयादीनां पुना राक्षसयोनौ दुःखधारेति[2]। कारिकया चेदमुक्तम्—

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः[3]। इति ॥८४॥

यज्ञादि कर्मों में लोभ, हिंसा आदि दोष हैं, अतः उनका आश्रयकारी मोक्षार्थी एक दुःख से अन्य दुःख में गिरता है। शीतक्लिष्ट व्यक्ति का जलाभिषेक करने पर जैसी अवस्था होती है, वैसी अवस्था उसकी होती है जो संसार-दुःख से छुटकारा पाने के लिये द्रव्ययज्ञादिरूप कर्म का अनुष्ठान करता है।

ननु निष्कामादन्तर्यागजपादिरूपकर्मणो न दुःखं प्रत्युत मोक्षः फलं श्रूयत इति तत्राह—

**काम्येऽकाम्येऽपि साध्यत्वाविशेषात् ॥८५॥**

काम्येऽकाम्ये च कर्मणि दुःखाद् दुःखं भवति, कुतः साध्यत्वाविशेषात्। कर्मसाध्यस्य सत्त्वशुद्धिद्वारकज्ञानस्यापि त्रिगुणात्मकतया दुःखात्मकत्वादित्यर्थः। न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरित्यादिश्रुतिभ्यश्च[4] कर्मणो न साक्षान्मोक्षः फलमिति भावः। त्यागेनाभिमानत्यागेन। एके

---

१. भागवतम् १।८।५२

२. द्र० भागवतम् ३।१५–६ अ०।

३. द्वितीया कारिका।

४. तै० अरण्यकम् १०।१०।३; कैवल्योपनिषद्यपि।

केचिदेवामृतत्वमानशुः प्राप्तवन्तो न सर्वे। अभिमानत्यागस्य तत्त्वज्ञानजन्यतया दुर्लभत्वादित्यर्थः ॥८५॥

चाहे सकाम कर्म हो, चाहे निष्काम कर्म, कर्ममात्र से दुःख की धारा किसी-न-किसी रूप से प्रवाहित ही रहेगी, क्योंकि सकाम कर्म की तरह निष्काम कर्म भी साध्य है (जडवस्तु-निष्पाद्य है)। निष्काम कर्म अधिकतर सत्त्वबुद्धि-कारक है, पर उसमें भी चित्त व्यक्त ही रहता है, अतः आपेक्षिकरूप से निष्कार्म कर्म उपादेय होने पर भी कैवल्य या शाश्वत चित्तरोध की दृष्टि से कर्म का आत्यन्तिक त्यागपूर्वक विवेक-ज्ञानाभ्यास ही अनुष्ठेय है।

ननु भवन्मतेऽपि कथं ज्ञानसाध्यस्य न दुःखत्वं साध्यत्वाविशेषादिति तत्राहः—

**निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ॥८६॥**

निजमुक्तस्य स्वभावमुक्तस्याविद्याख्यकारणनाशेन यथोक्तबन्धनिवृत्तिमात्रं परमात्यन्तिकं विवेकज्ञानस्य फलं ध्वंसश्चाविनाशी न तु कर्मण इव सुखादिकं भावरूपं कार्यं येन नाशितया दुःखदं तत् स्यात्। कर्मणश्च दृष्टकारणं विना न साक्षादेवाविद्यानाशकत्वं घटत इति। अतो ज्ञानस्याक्षयत्वान्न समानत्वं ज्ञानकर्मणोरित्यर्थः। ज्ञानान्न पुनरावृत्तिः सम्भवति, अविवेकाख्यकारणनाशादिति सिद्धम्। तदेवं विवेकज्ञानमेव साक्षाज् ज्ञानोपाय इत्युक्तम् ॥८६॥

ज्ञानसाध्य मुक्तावस्था भी साध्य है, अतः वह भी दुःखदायक है, ऐसा नहीं कहा जा सकता, क्योंकि आत्मा स्वभावतः मुक्त ही है, और बन्धन अविद्याहेतुक है, अतः विवेक से अज्ञान की निवृत्ति होने पर मुक्त आत्मा स्व-स्वरूप में प्रतिष्ठित होता है। बद्धावस्था में पुरुष में दुःख का जो उपचार हो रहा था वह स्वरूपावस्थान में नहीं होता—इतना ही विशेष है।

इदानीं विवेकज्ञानस्यापि साक्षादुपायाः प्रमाणानि परीक्ष्यन्ते। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य[1] इत्यादिश्रुतिभिर्हि प्रमाणत्रयेणात्मज्ञानमित्यवगम्यते। कर्मादिकं त्वन्यन्मन आदिप्रमाणानां शुद्ध्यादिकरमेवेति—

**द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकतमं यत् तत् त्रिविधं प्रमाणम् ॥८७॥**

असन्निकृष्टः प्रमातर्येनारूढोऽनधिगत इति यावत्। एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिरवधारणं प्रमा सा च द्वयोर्बुद्धि-पुरुषयोरुभयोरेव धर्मो

१. बृहदा० २।४।५; ४।५।६

इति । योगभाष्यञ्च—बुद्धेः प्रतिसंवेदी पुरुष इति[1] प्रतिध्वनिवत् प्रतिसंवेदनप्रतिबिम्बस्तस्याश्रय इत्यर्थः ।

एतेन पुरुषाणां कूटस्थविभुचिद्रूपत्वेऽपि न सर्वदा सर्वाभासनप्रसङ्गः । असङ्गतया स्वतोऽर्थाकारत्वाभावात् । अर्थाकारतां विना च संयोगमात्रेणार्थग्रहणस्यातीन्द्रियादिस्थले बुद्धावदृष्टत्वादिति । पुरुषे च स्वस्वबुद्धिवृत्तीनामेव प्रतिबिम्बार्पणसामर्थ्यमिति फलबलात् कल्प्यते[2] । यथा रूपवतामेव जलादिषु प्रतिबिम्बनसामर्थ्यं नेतरस्येति । रूपवत्त्वं च न सामान्यतः प्रतिबिम्बप्रयोजकं शब्दस्यापि प्रतिध्वनिरूपप्रतिबिम्बदर्शनात् । न च शब्दजन्यं शब्दान्तरमेव प्रतिध्वनिरिति वाच्यं स्फटिकलौहित्यादेरपि जपासन्निकर्षजन्यतापत्त्या प्रतिबिम्बमिथ्यात्वसिद्धान्तक्षतेरिति । प्रतिबिम्बश्च बुद्धेरेव परिणामविशेषो बिम्बाकारो जलादिगत इति मन्तव्यम् ।

केचित् तु वृत्तौ प्रतिबिम्बितं सदेव चैतन्यं वृत्तिं प्रकाशयति तथा वृत्तिगतप्रतिबिम्ब एव वृत्तौ चैतन्यविषयता न तु चैतन्ये वृत्तिप्रतिबिम्बोऽस्तीत्याहुः । तदसत्; उपदर्शितशास्त्रविरोधेन केवलतर्कस्याप्रयोजकत्वात् । विनिगमनाविरहेण वृत्तिचैतन्ययोरन्योन्यविषयताख्यसम्बन्धरूपतयाऽन्योन्यस्मिन्नन्योन्यप्रतिबिम्बसिद्धेश्च । बाह्यस्थलेऽर्थाकारताया एव विषयतारूपत्वसिद्ध्याऽन्तरेऽपि तत्तदर्थाकारताया एव विषयतात्वौचित्याच्चेति ।

ये तु तार्किका ज्ञानस्य विषयतां नेच्छन्ति तन्मते ज्ञानव्यक्तीनामनुगमकधर्माभावेन घटविषयकं पटविषयकं ज्ञानमित्याद्यनुगतव्यवहारानुपपत्तिः ।

केचित् तु तार्किका अनयैवानुपपत्त्या विषयतामतिरिक्तपदार्थमाहुः । तदप्यसत्; अनुभूयमानामर्थाकारतां विहाय विषयतान्तरकल्पने गौरवादिति । ननु तथापि स्वस्वोपाधिवृत्तिरूपैव वृत्तिचैतन्ययोरन्योन्यविषयताऽस्तु स्वोपाधिवृत्तित्वेनैवानुगमाद् अलमाकाराख्यप्रतिबिम्बद्वयेनेति चेन्न; प्रतिबिम्बं विना

---

१. भाष्यम् २।२०

२. सांख्यीय-प्रतिबिम्बसिद्धान्तस्य विशदीकरणं वाक्यपदीय (२।३१)-भर्तृहरिटीकायां द्रष्टव्यम् । अयं हि अत्रत्यो ग्रन्थः—"अन्ये तु संक्रान्त-विषयरूपाया बुद्धेरात्मनि समवायाद् बुद्धिरूपनिवेशेन तत्तद्रूपतामिवापन्ने बोधात्मके पुरुषे पुरुषार्थस्य प्रसिद्धिं मन्यन्ते । प्रकाशस्वभावया बुद्ध्या चितिस्वरूपस्यार्थस्य प्रतिबिम्बकयोगेन उपग्रहे संभवति ग्राह्यविषयरूपविपर्यासायाम् उपगृहीतपुरुषरूपायां बुद्धौ भोग्यभोक्तृशक्त्योः अत्यन्तविविक्तयोरत्यन्तासंकीर्णयोः अविभागप्राप्ताविव सत्यां विभागः प्रकल्पते" । अत्र 'भोगः प्रकल्पते' इत्येव पाठः साधुः स्यादिति प्रतिभाति ।

स्वत्वस्यापि दुर्वचत्वात्। स्वत्वं हि स्वभुक्तवृत्तिवासनावत्त्वम्। भोगश्च ज्ञानम्,[1] तथा च विषयतालक्षणस्य विषयसामग्रीघटितत्वेनात्माश्रयः। तस्माद्चैतन्य-चैतन्ययोरन्योन्यविषयतारूपोऽन्योन्यस्मिन्नन्योन्यप्रतिबिम्बः सिद्धः। अधिकन्तु योगवार्त्तिके[2] द्रष्टव्यमिति दिक्।

अत्रायं प्रमात्रादिविभागः—
प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव नः।
प्रमाऽर्थाकारवृत्तीनां चेतने प्रतिबिम्बनम्॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते।
साक्षाद्दर्शनरूपं च साक्षित्वं वक्ष्यति स्वयम्॥
अतः स्यात् कारणाभावाद् वृत्तेः साक्ष्येव चेतनः।
विष्ण्वादेः सर्वसाक्षित्वं गौणं लिङ्गाद्यभावतः[2] ॥इति॥८७॥

पहले से अनधिगत वस्तु के सम्यग् अवधारण का नाम प्रमा है। यह अवधारण बुद्धि-पुरुष रूप दोनों तत्त्वों का धर्म माना जा सकता है, केवल बुद्धि या केवल पुरुष का भी माना जा सकता है (दृष्टिभेद से)। वस्तु का अवधारण रूप 'ज्ञान' बुद्धि का परिणाम-विशेष है, जो पुरुषरूप निर्विकार हेतु के सन्निधान के कारण ही अभिव्यक्त होता है। यह बुद्धिपरिणामरूप प्रमा पुरुष में उपचरितमात्र होती है, क्योंकि उससे देशकालातीत पुरुष वस्तुतः उपरंजित नहीं होता, अतः प्रमा को विभिन्न दृष्टियों से बुद्धि का धर्म, पुरुष का धर्म या बुद्धि-पुरुषधर्म कहा जा सकता है। दृष्टिभेद से कभी बुद्धिवृत्ति प्रमाण होती है, और कभी इन्द्रिय-सन्निकर्षादि प्रमाण होते हैं, यह ज्ञातव्य है। इस प्रमा का जो साधकतम (फल के साथ जिसका साक्षात् योग है) करण है, वह 'प्रमाण' कहलाता है। यह प्रमाण प्रत्यक्ष, अनुमान और शब्दरूप से त्रिविध है।

ननु—
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत[3]॥

इत्यादिवाक्येषूपमानादि प्रकृतिपुरुषविवेके प्रमाणमुपन्यस्तं तत् कथमुच्यते त्रिविधमिति; तत्राह—

१. भोगः खलु ज्ञानरूप इत्यत्र इमानि व्यासभाष्यवचांसि द्रष्टव्यानि—दृश्यस्योपलब्धिर्भोगः (२।२३); इष्टानिष्टगुणस्वरूपावधारणमविभागापन्नं भोगः (२।१९) इति च। सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोग इत्याह पतञ्जलिः (३।३५)।
२. इमाः कारिकाः विज्ञानामृतभाष्ये (पृ९०) योगवार्त्तिके (१।७) च दृश्यन्ते। पाठाधिक्यं पाठभेदाश्च अवलोक्यन्ते। वृत्तयः साक्षिभास्याः स्युःकरणस्यानपेक्षणात् इति सांख्यभाष्ये नोक्तम्; साक्षित्वं सांख्यसूत्रितमिति योगवार्त्तिके पठ्यते।
३. गीता १३।३३

## तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥८८॥

त्रिविधप्रमाणसिद्धौ च सर्वस्यार्थस्य सिद्धेर्न प्रमाणाधिक्यं सिद्ध्यति गौरवादित्यर्थः । अतएव मनुनापि प्रमाणत्रयमेवोपन्यस्तम्—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥[१] इति ॥

उपमानैतिह्यादीनां चानुमानशब्दयोः प्रवेशः । अनुपलब्ध्यादीनां च प्रत्यक्षे प्रवेश इति । उक्तवाक्ये चेदमनुमानमभिप्रेतम्—आपादतलमस्तकं कृत्स्नं स्वव्यतिरिक्तेनैकेन प्रकाश्यं स्वयमप्रकाशत्वात् त्रैलोक्यवदिति । तेजश्चैतन्यसाधारणं च प्रकाशत्वमखण्डोपाधिः प्रकाशव्यवहारनियामकतया सिद्ध इति ॥८८॥

तीन ही प्रमाण मानने पर सब प्रकार के विषयों की सिद्धि (सत्तानिश्चय = ज्ञान) हो सकती है, अतः उपमान आदि को पृथक् प्रमाण मानने की आवश्यकता नहीं है (अर्थात् इन प्रमाणों का अन्तर्भाव प्रत्यक्षादि-प्रमाणों में यथायथरूपेण किया जा सकता है) ।

पुरुषनिष्ठा प्रमेति मुख्यसिद्धान्तमाश्रित्य प्रमाणानां विशेषलक्षणानि वक्तुमुपक्रमते—

## यत् सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ॥८९॥

सम्बद्धं भवत् सम्बद्धवस्त्वाकारधारि भवति यद्विज्ञानं बुद्धिवृत्तिस्तत्प्रत्यक्षं प्रमाणमित्यर्थः । अत्र सदित्यन्तं हेतुगर्भविशेषणम् । तथा च स्वार्थसन्निकर्षजन्याकारस्याश्रयो वृत्तिः प्रत्यक्षं प्रमाणमिति निष्कर्षः । वृत्तिः सम्बन्धार्थं सर्पतीत्यागामिसूत्रान्न[२] वृत्तेः सन्निकर्षजन्यत्वमित्याकाराश्रयग्रहणम् । चक्षुरादिद्वारकबुद्धिवृत्तिश्च प्रदीपस्य शिखातुल्या बाह्यार्थसन्निकर्षानन्तरमेव तदाकारोल्लेखिनी भवतीति नासम्भवः ॥८९॥

जब विज्ञान (=बुद्धिवृत्ति) वस्तुसे संबद्ध होकर वस्तु के आकार का अनुरूप हो जाता है, तब वह 'प्रत्यक्ष प्रमाण' कहलाता है (प्रमा पुरुषनिष्ठ है—इस पक्षमें प्रत्यक्ष का यही अर्थ है) । यहाँ वृत्ति ही प्रत्यक्ष प्रमाण है जो स्व-अर्थ-सन्निकर्ष-जनित आकार का आश्रय है ।

ननु योगिनामतीतानागतव्यवहितवस्तु-प्रत्यक्षेऽव्याप्तिः सम्बद्धवस्त्वाकाराभावादित्याशङ्क्य तस्यालक्ष्यत्वेन समाधत्ते—

---

१. मनु० १२।१०५

२. सांख्यसूत्रम् ५।१०७

**योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥९०॥**

ऐन्द्रियकप्रत्यक्षमेवात्र लक्ष्यं योगिनश्चाबाह्यप्रत्यक्षकाः। अतो न दोषो न तत्प्रत्यक्षेऽव्याप्तिरित्यर्थः ॥९०॥

यह लक्षण अयोगी प्रमाता को लक्ष्यकर किया गया है, ऐन्द्रियक प्रत्यक्ष का लक्षण ही यहाँ इष्ट है। अतीत-व्यवहितार्थ-प्रत्यक्षकारी योगी में इस लक्षण के न घटने पर भी कोई दोष नहीं है। योगी का अतीतानागत-ज्ञान स्थूलरूप में वस्तु के विद्यमान न रहने पर भी होता है।

वास्तवं समाधानमाह—

**लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ॥९१॥**

अथवा तदपि लक्ष्यमेव तथापि न दोषो नाव्याप्तिः। यतो लीनवस्तुषु लब्धयोगजधर्मजन्यातिशयस्य योगिचित्तस्य सम्बन्धो घटत इत्यर्थः। अत्र लीनशब्दः पराभिप्रेतासन्निकृष्टवाची, सत्कार्यवादिनां ह्यतीतादिकमपि स्वरूपतोऽस्तीति[1] तत्सबन्धः सम्भवेदिति व्यवहितविप्रकृष्टेषु सम्बन्धहेतुविधया लब्धातिशयेति विशेषणम्। अतिशयश्च व्यापकत्वं वृत्तिप्रतिबन्धकतमोनिवृत्त्यादिश्चेति।

इदं चात्रावधेयम्। यत्सम्बद्धं सदिति पुर्वसूत्रे (८९ सू०) बुद्धेरर्थसन्निकर्षस्यैव प्रत्यक्षहेतुतालाभात् प्रत्यक्षसामान्ये बाह्यार्थसाधारणे बुद्ध्यर्थसन्निकर्ष एव कारणम्। इन्द्रियसन्निकर्षास्तु चाक्षुषादिप्रत्यक्षेषु विशेष्यैव कारणानि। नन्वेवमिन्द्रियसन्निकर्ष-योगजधर्माद्यभावेऽपि बुद्ध्या बाह्यार्थप्रत्यक्षापत्तिः। मैवम्; तमःप्रतिबन्धेन तदानीं बुद्धिसत्त्वस्य वृत्त्यसम्भवात्। तच्च तमः कदाचिदर्थेन्द्रिययोः सन्निकर्षेण कदाचिच्च योगजधर्मेणापसार्यते, अञ्जनसंयोगेन नयनमालिन्यवत्। न चैवं तद्धेतोरेव तदस्त्विति न्यायेनेन्द्रियसन्निकर्षादेरेव बाह्यार्थप्रत्यक्षसामान्ये हेतुतास्त्विति वाच्यम्, सुषुप्त्यादौ तमसो बुद्धिवृत्तिप्रतिबन्धकत्वसिद्धेः।

सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत्।
प्रस्वापनं तु तमसा तुरीयं त्रिषु सन्ततम्॥[2]

इत्यादिस्मृतिभ्यः सुषुप्त्यादौ वृत्तिप्रतिबन्धकान्तराऽसम्भवाच्च। चाक्षुषवृत्तावपि तमसः प्रतिबन्धदर्शनाच्च।

---

१. अतीतानागतं वस्तु स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम् (४।१२) इति योगसूत्रं सभाष्यम् आलोच्यम्।

२. वचनमिदं विज्ञानामृतभाष्येऽपि उद्धृतम् (पृ० ८३), योगवार्त्तिकेऽपि(२।१९)। भागवते ११।२५।२० 'प्रस्वापं तमसा जन्तोः' इति पाठो दृश्यतेऽस्मिन् श्लोके।

यत् तु शुष्कतार्किकाः सुषुप्तौ वृत्त्यनुत्पादार्थं ज्ञानसामान्ये त्वङ्मनोयोगं कारणं कल्पयन्ति, तदसत्; त्वगिन्द्रियोत्पत्तेः प्रागपि केवलबुद्ध्या स्वयम्भुवः सर्वप्रत्यक्षश्रवणात् त्वङ्मनोयोगानुत्पादेऽपि तमस एव निमित्ततायां वक्तव्यत्वाच्च, केवलतर्कस्याप्रतिष्ठादोषग्रस्तत्वाच्चेति दिक् ॥९१॥

अथवा ऐसा कहना ही उचित होगा कि यहाँ भी विषयेन्द्रिय-सबन्ध है। योगी का चित्त योगजात ऐसे अतिशय से युक्त है कि वह कारण में 'लीन (अनभिव्यक्त रूप में विद्यमान) वस्तु के साथ भी अपना सम्बन्ध कर सकता है, जिससे प्रत्यक्षज्ञान उत्पन्न होता है।

ननु तथापीश्वरप्रत्यक्षेऽव्याप्तिः तस्य नित्यत्वेन सन्निकर्षाजन्यत्वादिति तत्राह—

**ईश्वरासिद्धेः[१] ॥९२॥**

ईश्वरे प्रमाणाभावान्न दोष इत्यनुवर्तते। अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैवेति प्रागेव प्रतिपादितम्, अन्यथा हीश्वराभावादित्येवोच्येत। ईश्वराभ्युपगमे तु सन्निकर्षजन्यजातीयत्वमेव प्रत्यक्षलक्षणं विवक्षितम्, साजात्यं च ज्ञानत्वसाक्षाद्व्याप्यजात्येति भावः ॥९२॥

प्रत्यक्षसामान्य में बुद्धि और अर्थ का सन्निकर्ष हेतु है; चाक्षुष-प्रत्यक्ष, श्रावण-प्रत्यक्ष आदि में इन्द्रियसन्निकर्ष भी अपेक्षित है। प्रत्यक्ष में सन्निकर्ष अपरिहार्य होता है। अब प्रश्न होता है कि 'ईश्वर' नित्य-शुद्ध-बुद्ध हैं, अतः उनका ज्ञान जन्य नहीं है, सुतरां सन्निकर्ष की अपेक्षा नहीं है (पर ईश्वर का प्रत्यक्षज्ञान माना जाता है); इस प्रकार ईश्वर-प्रत्यक्ष में प्रत्यक्षलक्षण की अव्याप्ति होती है। उत्तर यह है कि शंकाकारी द्वारा स्वीकृत ईश्वर के न होने से प्रत्यक्षलक्षण दोषहीन ही है। [द्र० भूमिका]।

श्रुतिस्मृतिभ्यां कथमीशो न सिध्यतीत्याकाङ्क्षायां तर्कविरोधं लौकिकमेव बाधकमाह—

---

१. सांख्यदर्शनानुसारेण ईश्वरः कीदृशो भवितुमर्हति, कथं चेश्वरसिद्धिः, को वाऽस्य सूत्रस्य अर्थः—इत्यादिविषया मया विस्तरेण विवृताः (वेदवाणीपत्रिका-१५।५-९ प्रकाशितः 'सांख्यदर्शन में ईश्वर का स्वरूप' नामा निबन्धो द्रष्टव्यः)। सांख्यवित् 'समं सर्वेषु भूतेषु ब्रह्माणमभिवर्तते' इत्युक्तं शान्तिपर्वणि सांख्यप्रसंगे (क्वचित् सम इति पाठः)। ईश्वरनिष्ठा ईश्वरता (ऐश्वर्यम्) खलु बुद्धेः सात्त्विकं रूपमिति आतिष्ठन्ते सांख्याः। ईश्वरताऽनेकप्रकारा, अतः सगुणेश्वरो निर्गुणेश्वरोऽन्यो वा ईश्वरभेदः सांख्ये (इतिहासपुराणादिषु च) अभ्युगतः। संप्रदायान्तरेषु ईश्वरसत्ता न न्यायेन परीक्ष्यते; ईश्वरविषये असमीचीना दृष्टयोऽपि दृश्यन्ते सर्वत्र।

**मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥९३॥**

ईश्वरोऽभिमतः किं क्लेशादिमुक्तो वा तैर्बद्धो वा? अन्यतरस्याप्यसम्भवान्नेश्वरसिद्धिरित्यर्थः ॥९३॥

शंकाकारी जिस प्रकार के पदार्थ को 'ईश्वर' समझते हैं, वह न मुक्त हो सकता है और न बद्ध ही हो सकता है। बद्ध और मुक्त के अतिरिक्त अन्य कोई तृतीय कोटि नहीं है।

**उभयथाऽप्यसत्करत्वम् ॥९४॥**

मुक्तत्वे सति स्रष्टृत्वाद्यक्षमत्वं तत्प्रयोजकाभिमानरागाद्यभावात्। बद्धत्वेऽपि मूढत्वान्न सृष्ट्यादिक्षमत्वमित्यर्थः ॥९४॥

यदि कहा जाए कि ईश्वर मुक्त है तो उनका जगत्-स्रष्टृत्व उपपन्न नहीं होता, क्योंकि मुक्त पुरुष में सृष्टिरचनानुकूल प्रयत्नादि नहीं हो सकते (मुक्त पुरुष चित्तरोध करते हैं)। यदि ईश्वर को बद्ध पुरुष माना जाए तो उनके लिये सृष्टि करना संभव नहीं है। [द्र० भूमिका]।

नन्वेवमीश्वरप्रतिपादकश्रुतीनां का गतिस्तत्राह—

**मुक्तात्मनः प्रशंसा उपासा सिद्धस्य वा ॥९५॥**

यथायोगं काचित् श्रुतिर्मुक्तात्मनः केवलात्मसामान्यस्य ज्ञेयताभिधानाय सन्निधिमात्रैश्वर्येण स्तुतिरूपा प्ररोचनार्था। काचिच्च सङ्कल्पपूर्वकस्रष्टृत्वादिप्रतिपादिका श्रुतिः सिद्धस्य ब्रह्मविष्णुहरादेरेवानित्येश्वरस्याभिमानादिमतोऽपि गौणनित्यत्वादिमत्त्वान्नित्यत्वाद्युपासापरेत्यर्थः ॥९५॥

ईश्वरता-प्रतिपादक जो श्रुतिवचन हैं, उनका तात्पर्य या तो मुक्तात्मा की प्रशंसा करने में है या योगसिद्ध (अथवा वशित्वसंपन्न अभिमानी देव) की उपासना में। [द्र० भूमिका]।

ननु तथापि प्रकृत्याद्यखिलाधिष्ठातृत्वं श्रूयमाणं नोपपद्यते लोके सङ्कल्पादिना परिणमनस्यैवाधिष्ठातृत्वव्यवहारादिति, तत्राह—

**तत्सन्निधानादधिष्ठातृत्वं मणिवत् ॥९६॥**

यदि सङ्कल्पेन स्रष्टृत्वमधिष्ठातृत्वमुच्यते तदायं दोषः स्यात्। अस्माभिस्तु पुरुषस्य सन्निधानादेवाधिष्ठातृत्वं स्रष्टृत्वादिरूपमिष्यते मणिवत्। यथाऽयस्कान्तमणेः सान्निध्यमात्रेण शल्यनिष्कर्षकत्वं न सङ्कल्पादिना, तथैवादिपुरुषस्य संयोगमात्रेण प्रकृतेर्महत्त्वरूपेण परिणमनम्। इदमेव च स्वोपाधिस्रष्टृत्वमित्यर्थः। तथा चोक्तम्—

निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्तते ।
सत्तामात्रेण देवेन तथा चायं जगज्जनः ॥
अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्ताऽसौ कर्ता सन्निधिमात्रतः ॥[1]

इति । तदैक्षत बहु स्यामित्यादिश्रुतिस्तु[2] कूलं पिपतिषतीतिवद्[3] गौणी प्रकृतेरासन्नबहुतरगुणसंयोगात् । अथवा बुद्धिपूर्वसृष्टिविषयमेतादृशवाक्यजातं न त्वादिसर्गपरं तस्याबुद्धिपूर्वकत्वस्मरणादिति भावः । यथा कौर्मे—

इत्येष प्राकृतः सर्गः सङ्क्षेपात् कथितो मया ।
अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधत ॥[4]

इति । अस्य च वाक्यस्यादिपुरुषबुद्ध्यजन्यत्वेन सङ्कोचे गौरवमिति ॥९६॥

पुरुष के सन्निधान से ही अधिष्ठातृत्व सिद्ध होता है, जिस प्रकार अयस्कान्तमणि सन्निधानमात्र से शल्य का निष्कर्षण (अपनी ओर खींचना) करता है । ['तत्सन्निधान' में 'सन्निधान' पदका अर्थ और अयस्कान्तमणि दृष्टान्त (उपमा) का तात्पर्य भूमिका में विवृत हुए हैं] ।

न केवलं सर्गादावेव पुरुषस्य संयोगमात्रेण स्रष्टृत्वादिकमपि त्वन्येष्वपि सङ्कल्पादिपूर्वकेषु भूतादिष्वखिलेषु विशेषकार्येष्वपि सर्वपुरुषाणामित्याह—

**विशेषकार्येष्वपि जीवानाम् ॥९७॥**

अधिष्ठातृत्वं सन्निधानादित्यनुषज्यते । अन्तःकरणोपलक्षितस्यैव जीवशब्दार्थत्वं षष्ठाध्याये[5] वक्ष्यति तथा च विशेषकार्ये विसर्गाख्ये व्यष्टिसृष्टावपि जीवानामन्तःकरणप्रतिबिम्बितचेतनानां सन्निधानादेवाधिष्ठातृत्वं न तु केनापि व्यापारेण कूटस्थचिन्मात्ररूपत्वादित्यर्थः ॥९७॥

जीवो के विशेष कार्यों में भी उनका सन्निधान-जनित अधिष्ठातृत्व रहता है। [द्र० भूमिका] ।

ननु चेत् सदा सर्वज्ञ ईश्वरो नास्ति तर्हि वेदान्तमहावाक्यार्थस्य विवेकस्योपदेशोऽन्धपरम्पराशङ्कयाऽप्रामाण्यं प्रसज्येत तत्राह—

---

१. योगवासिष्ठ ४।५६।३०-३१
२. छा० उ० ६।२।३
३. ६।२।४ छान्दोग्यश्रुतिभाष्ये शंकराचार्यः सांख्यमतविवरणप्रसङ्गे न्यायस्यास्य प्रयोगं कृतवान् इति दृश्यते ।
४. कूर्म० १।४।६६ (अबुद्धिपूर्विका विप्रा इति मुद्रित पुराण पाठः) ।
५. ६।६३

**सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥९८॥**

हिरण्यगर्भादीनां सिद्धरूपस्य यथार्थस्य बोद्धृत्वात् तद्वक्तृकायुर्वेदादिप्रामाण्येनावधृताच्चैषां वाक्यार्थोपदेशः प्रमाणमिति शेषः ॥९८॥

चूँकि अन्तःकरण में ऐसी शक्ति सहजतः है कि वह तत्त्वों का बोध कर सकता है, अतः आध्यात्मिक सूक्ष्मसाधन के ज्ञापक वाक्यों का प्रामाणिक उपदेश किया जाता है। [द्र० भूमिका]।

ननु पुरुषस्य चेत् सन्निधिमात्रेण गौणमधिष्ठातृत्वं तर्हि मुख्यमधिष्ठातृत्वं कस्येत्याकाङ्क्षायामाह—

**अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥९९॥**

अन्तःकरणस्यानुपचरितमधिष्ठातृत्वं सङ्कल्पादिद्वारकं प्रत्येतव्यम्। नन्वधिष्ठातृत्वं घटादिवदचेतनस्य न युक्तं तत्राह—लोहवत् तदुज्ज्वलितत्वादिति। अन्तःकरणं हि तप्तलोहवच्चेतनोज्ज्वलितं भवति। अतस्तस्य चेतनायमानतयाऽधिष्ठातृत्वं घटादिव्यावृत्तमुपपद्यत इत्यर्थः।

नन्वेवं चैतन्येनान्तःकरणस्योज्ज्वलने चितेः सङ्गित्वमग्निवदेव स्यादिति चेन्न ; नित्योज्ज्वलचैतन्यसंयोगविशेषमात्रस्य संयोगविशेषजन्यचैतन्यप्रतिविम्बस्येवान्तःकरणोज्ज्वलनरूपत्वात्। न तु चैतन्यमन्तःकरणे संक्रामति येन संगिता स्यात्। अग्नेरपि हि प्रकाशादिकं न लोहे संक्रामति। किन्त्वग्नियोगविशेष एव लोहस्योज्ज्वलनमिति। नन्वेवमपि संयोगेन परिणामित्वमिति चेन्न, सामान्यगुणातिरिक्तधर्मोत्पत्तावेव परिणामव्यवहारादिति।

अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात् परिणामाद्भवतीति फलवलात् कल्प्यते पुरुषस्यापरिणामित्वेन संयोगे तन्निमित्तकविशेषासम्भवादिति। अयमेव च संयोगविशेषो बुद्ध्यात्मनोरन्योऽन्यप्रतिबिम्बने हेतुः। ननु प्रतिबिम्बहेतुतया संयोगविशेषावश्यकत्वे प्रतिबिम्बकल्पना व्यर्था प्रतिबिम्बकार्यस्यार्थज्ञानादेः संयोगविशेषादेव सम्भवादिति; मैवम्, बुद्धौ चैतन्यप्रतिबिम्बश्चैतन्यदर्शनार्थं कल्प्यते दर्पणे मुखप्रतिबिम्बवत्। अन्यथा कर्मकर्तृविरोधेन स्वस्य साक्षात् स्वदर्शनानुपपत्तेः।

अयमेव च चित्प्रतिबिम्बो बुद्धौ 'चिच्छायापत्ति' रिति 'चैतन्याध्यास' इति 'चिदावेश' इति चोच्यते। यश्च चैतन्ये बुद्धेः प्रतिबिम्बः स चारूढविषयैः सह बुद्धेर्भानार्थमिष्यते। अर्थाकारतयैवार्थग्रहणस्य बुद्धेः स्थले दृष्टत्वेन तां विना संयोगविशेषमात्रेणार्थभानस्य पुरुषेऽप्यनौचित्यात्, अर्थाकारस्यैवार्थग्रहणशब्दार्थत्वाच्चेति। स चार्थाकारः पुरुषे परिणामो न सम्भवतीत्यर्थात् प्रतिबिम्बरूप एव पर्यवस्यतीति दिक्।

स चायमन्योऽन्यप्रतिबिम्बो योगभाष्ये व्यासदेवैः सिद्धान्तितः[१]—चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायत[२] इत्यादिना। योगवार्त्तिके चैतद्विस्तरतोऽस्माभिः प्रतिपादितम्[३]।

कश्चित् तु "बुद्धिगतया चिच्छायया बुद्धेरेव सर्वार्थज्ञातृत्वमिच्छादिभिर्ज्ञानस्य सामानाधिकरण्यानुभवादन्यस्य ज्ञानेनान्यस्य प्रवृत्त्यनौचित्याच्चेत्याह। तदात्माज्ञानमूलकत्वादुपेक्षणीयम्। एवं हि बुद्धेरेव ज्ञातृत्वे चिदवसानो भोग[४] इत्यागामिसूत्रद्वयविरोधः। पुरुषे प्रमाणाभावश्च पुरुषलिङ्गस्य भोगस्य बुद्धावेव स्वीकारात्,[५] न च प्रतिबिम्बान्यथानुपपत्त्या बिम्बभूतः पुरुषः सेत्स्यतीति वाच्यम्"। अन्योऽन्याश्रयात् पृथग्बिम्बसिद्धौ बुद्धिस्थचैतन्यस्य प्रतिबिम्बतासिद्धिः प्रतिबिम्बतासिद्धौ च तत्प्रतियोगितया बिम्बसिद्धिरिति। अस्मन्मते च ज्ञातृतया पुरुषसिद्ध्यनन्तरं तस्य ज्ञेयत्वान्यथानुपपत्त्या प्रतिबिम्बसिद्धौ नान्योऽन्याश्रयः। अथ वृत्तिसाक्षितया बिम्बरूपश्चेतनः सिध्यतीति चेत् तर्हि साक्षिण एव प्रमातृत्वमप्युचितम्। उभयोर्ज्ञातृत्वकल्पने गौरवात्। वृत्तिज्ञानघटज्ञानयोः सामानाधिकरण्यानुभवाच्च।

किञ्चैवं सति बुद्धेरेव भोक्तृत्वे भोक्तृभावादित्यागामिसूत्रेण[६] भोक्तृतया पुरुषसाधनं विरुध्येत। अथ बुद्धिगतचिच्छायारूपेण सम्बन्धेन बिम्बस्यैव ज्ञानं न तु चितौ बुद्धिप्रतिबिम्बः कल्प्यत इत्येतावन्मात्रे चेत् तस्याशयो वर्ण्येत, तदप्यसत्; सूर्यादेः स्वप्रतिबिम्बरूपसम्बन्धेन जलादितत्स्थवस्तुभासकत्वादर्शनात्, किरणैरेव तदुभयभासनात्। मरुमरीचिकादौ च स्वाध्यस्तजलादिभासकत्वं दृष्टमेवेति दृष्टानुसारेणास्माभिश्चितौ बुद्धिप्रतिबिम्ब एव सर्वार्थभानहेतुतया सम्बन्धः कल्पित इति।

---

१. भाष्यम् २।२०; ४।२२ (अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव…)।

२. वाक्यमिदं वाक्यपदीयव्याख्यायां हरिकृतायामपि दृश्यते। अत्र बुद्धिवृत्त्या विशिष्टज्ञानस्य प्रवृत्तिराख्यायते इति मुद्रितः पाठः। संक्रान्तपदेन आकारपरिग्रहो गृह्यते (वृषभदेवटीका १।३७)।

३. योगवार्त्तिकम् २।२०; ४।२२ द्र०।

४. सांख्यसूत्रम् १।१०४

५. अत्रेदं सांख्याचार्यवचनं द्रष्टव्यम्—विविक्ते दृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते। प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि॥

६. सांख्यसूत्रम् १।१४३

यच्चोक्तमन्यस्य ज्ञानेनान्यस्य प्रवृत्त्यनुपपत्तिरिति। तदपि न, अकर्तुरपि फलोपभोगोऽन्नाद्यवत्[1] इत्यागामिसूत्रेण ज्ञानप्रवृत्त्योर्वैय्यधिकरण्यस्य दृष्टान्तेनोपपादयिष्यमाणत्वात्। बुद्धेः सङ्कल्पे न देहक्रियायामिवात्रापि संयोगविशेषादेरेव नियामकत्वादिति ॥९९॥

अन्तःकरण का अधिष्ठातृत्व (संकल्पपूर्वक शरीरादि का चालन) वास्तव है, निर्गुण पुरुष का ऐसा अधिष्ठातृत्व नहीं है। लौह जिस प्रकार अग्निसंयोग से तप्त होकर जलाता है उसी प्रकार चिदवभासयुक्त जड अन्तःकरण देहादि का अधिष्ठाता होकर उनको चलाता है।

प्रत्यक्षप्रमाणं लक्षयित्वाऽनुमानं लक्षयति—

**प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥१००॥**

प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनाद्व्यापकज्ञानमनुमानं प्रमाणमित्यर्थः; अनुमितिस्तु पौरुषेयो बोध इति[2] ॥१००॥

नियतसाहचर्यरूप व्याप्ति के ज्ञाता को व्याप्त वस्तु के दर्शन के बाद व्यापक का जो निश्चय (बुद्धिवृत्तिविशेष) होता है, वह अनुमान प्रमाण है। अनुमान के इस लक्षण में 'पौरुपेय बोध' अनुमिति होगी। धूम से अग्नि के अनुमान करने में धूम व्याप्त है, अग्नि व्यापक है।

शब्दप्रमाणं लक्षयति—

**आप्तोपदेशः शब्दः ॥१०१॥**

आप्तिरत्र योग्यता, वेदस्यापौरुषेयतायाः पञ्चमाध्याये वक्ष्यमाणत्वात्[3]। तथा च योग्यः शब्दस्तज्जन्यं ज्ञानं शब्दाख्यं प्रमाणमित्यर्थः। फलं च पौरुषेयः शाब्दो बोध[4] इति ॥१०१॥

आप्त (आप्ति से युक्त) का उपदेश (यथाभूत पदार्थ का निर्दोष कथन) है, उससे श्रोता के मन में जो अविचारसिद्ध सत्तानिश्चय होता है, वह ज्ञान शब्द-प्रमाण है।

प्रमाणप्रतिपादनस्य स्वयमेव फलमाह—

**उभयसिद्धिः प्रमाणात् तदुपदेशः ॥१०२॥**

---

१. सांख्यसूत्रम् १।१०५

२. द्र० व्यासभाष्यम् १।७

३. ५।४६-५०

४. शब्दो बोध इत्यपपाठः।

उभयोरात्मानात्मनोर्विवेकेन सिद्धिः प्रमाणादेव भवति। अतस्तस्य प्रमाणस्योपदेशः कृत इत्यर्थः ॥१०२॥

आत्मा और अनात्मा की सिद्धि (अस्तित्व-निश्चय) प्रमाण से होती है, इसलिये प्रमाणपरक यह विचार किया गया है।

तत्र येनानुमानविशेषेण प्रमाणेन मुख्यतोऽत्र प्रकृतिपुरुषौ विविच्य साधनीयौ तद् वर्णयति—

**सामान्यतोदृष्टादुभयसिद्धिः ॥१०३॥**

अनुमानं तावत् त्रिविधं भवति—पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति[1]। तत्र प्रत्यक्षीकृतजातीयविषयकं पूर्ववत्। यथा धूमेन वह्न्यनुमानम्। वह्निजातीयो हि महानसादौ पूर्वं प्रत्यक्षीकृतः। व्यतिरेकानुमानं शेषवत् शेषोऽपूर्वोऽर्थोऽस्य विषयत्वेनास्तीति शेषवत्, अप्रसिद्धसाध्यकमिति यावत्। यथा—पृथिवीत्वेनेतरभेदानुमानम्। पृथिवीतरभेदो हि प्रागसिद्धः। सामान्यतोदृष्टं च तदुभयभिन्नमनुमानम्, यत्र सामान्यतः प्रत्यक्षादिजातीयमादाय व्याप्तिग्रहात् पक्षधर्मताबलेन तद्विजातीयोऽप्रत्यक्षाद्यर्थः सिध्यति। यथा—रूपादिज्ञाने क्रियात्वेन करणवत्त्वानुमानम्। अत्र हि पृथिवीत्वादिजातीयं कुठारादिकरणमादाय व्याप्तिं गृहीत्वा तद्विजातीयमतीन्द्रियं ज्ञानकरणमिन्द्रियं साध्यत इति।

तत्र सामान्यतो दृष्टादनुमानाद् द्वयोः प्रकृतिपुरुषयोः सिद्धिरित्यर्थः। तत्र प्रकृतेः सामान्यतो दृष्टमनुमानम्[2], यथा—महत्तत्त्वं सुखदुःखमोहधर्मकद्रव्योपादानकं कार्यत्वे सति सुखदुःखमोहधर्मकत्वात् सुवर्णादिजकुण्डलादिवदित्यादि। पुरुषे तु यद्यप्यनुमानापेक्षा नास्ति सर्वसम्मतत्वात् तथापि प्रकृत्यादिविवेके सामान्यतोदृष्टमेवापेक्ष्यते। तद्यथा—प्रधानं परार्थं संहत्यकारित्वाद् गृहादिवदिति। अत्र हि प्रत्यक्षसिद्धं देहाद्यर्थकत्वं गृहादिषु गृहीत्वा तद्विजातीयः पुरुषः प्रधानादिपरत्वेनानुमीयते। देहादीनां च भोक्तृत्वमविवेकेन प्राग्गृहीतमित्युभय- सिद्धिरिति ॥१०३॥

---

१. त्रिविधानुमानविषये ध्रुवमहोदयकृतः त्रिविधमनुमानम् इति नामधेयो निबन्धो दर्शनीयः (Proceedings and Transactions of the First Oriental Congress, Poona Vol. II); षष्टितन्त्रे त्रिविधानुमानचर्चाऽसीदिति जयमङ्गलाकार आह (पञ्चमकारिकाव्याख्याने)।

२. प्रधानपुरुषावतीन्द्रियौ सामान्यतोदृष्टेनानुमानेन साध्येते—यस्मान्महदादि लिङ्गं त्रिगुणं, यस्येदं त्रिगुणं कार्यं तत् प्रधानमिति। यतश्चाचेतनं चेतनमिवाभाति अतोऽन्योऽधिष्ठाता पुरुष इति (सांख्यका० ६ गौडपादभाष्यम्)।

सामान्यतोदृष्टनामक अनुमान प्रमाण से प्रकृति-पुरुष-रूप दोनों अतीन्द्रिय तत्त्वों की सिद्धि होती है। [द्र० भूमिका]।

या प्रमाणस्य फलभूता प्रमाख्यसिद्धिरुक्ता तया पुरुषस्य परिणामापत्तिरित्याशङ्कायां तस्याः स्वरूपमाह—

**चिदवसानो भोगः ॥१०४॥**

पुरुषस्वरूपे चैतन्ये पर्यवसानं यस्यैतादृशा भोगसिद्धि रित्यर्थः। बुद्धेर्भोगस्य व्यावर्तनाय चिदवसान इति। चितः परिणामित्वसधर्मत्वादिशङ्कानिरासायावसानपदम्। चितौ भोगस्य स्वरूपे पर्यवसितत्वान्न कौटस्थ्यादिहानिरित्याशयः। तथाहि—प्रमाणाख्यवृत्त्यारूढं प्रकृतिपुरुषादिकं प्रमेयं वृत्त्या सह पुरुषे प्रतिबिम्बितं सद्भासते। अतोऽर्थोपरक्तवृत्तिप्रतिबिम्बावच्छिन्नं स्वरूपचैतन्यमेव भानं पुरुषस्य भोगः, प्रमाणस्य च फलमिति। ततश्च प्रतिबिम्बरूपेणार्थसम्बन्धे द्वारतया वृत्तीनां करणत्वमिति। तदुक्तं विष्णुपुराणे—

गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः॥[1] इति।

राज्ञो हि करणवर्गः स्वामिने भोग्यजातं समर्पयतीति दृष्टमिति। भोगशब्दार्थश्चाभ्यवहरणम्, आत्मसात्करणमिति यावत्। स च देहादिचेतनान्तेषु साधारणः। विशेषस्त्वयम्—अपरिणामित्वात् पुरुषस्य विषयभोगः प्रतिबिम्बादानमात्रम्। अन्येषां तु परिणामित्वात् पुष्ट्यादिरपीति।[2] अयमेव च परिणामरूपः पारमार्थिको भोगः पुरुषे प्रतिषिध्यते 'बुद्धभोग इवात्मनी'त्यादिभिरिति[3] मन्तव्यम्। अस्मिन् सूत्रे पुरुषस्यापि फलव्याप्यता सिद्धा चिदवसानताया एवोभयसिद्धित्ववचनादिति ॥१०४॥

भोग का अवसान (प्रकाश्यपर्यवसान) चित्स्वरूप पुरुष में होता है। तात्पर्य यह है कि भोगरूप विकार बुद्धि में ही रह जाता है, उससे पुरुष विकृत नहीं होता, पुरुष भोग का निर्विकार साक्षी-रूप में रहता है [द्र० भूमिका]।

ननु कर्तुरेव लोके क्रियाफलभोगो दृष्टः। यथा सञ्चरत एव सञ्चारोत्थदुःखभोग इति। तत् कथं बुद्धिकृतधर्मादिफलस्य सुखाद्यात्मिकाया अर्थोपरक्तबुद्धिवृत्तेर्भोगः पुरुषे घटेतेत्याशङ्कायामाह—

---

१. विष्णुपु० १।१४।३५

२. युष्मादिरपीति, पुष्यादिरपीति (पाठ०)।

३. शिशुपालवधकाव्यम् २।५९

**अकर्तुरपि फलोपभोगोऽन्नाद्यवत् ॥१०५॥**

बुद्धिकर्मफलस्यापि वृत्तेरुपभोगस्तदकर्तुरपि पुरुषस्य युक्तः, अन्नाद्यवत्। यथाऽन्यकृतस्यान्नादेरुपभोगो राज्ञो भवति तद्वदित्यर्थः। अविवेकस्य स्वस्वामिभावस्य वा भोगनियामकत्वात् तु नातिप्रसङ्गः। सुखदुःखादेः कर्मफलत्वमभ्युपेत्य बुद्धिगतं कर्मफलं पुरुषो भुङ्क्त इत्युक्तम् ॥१०५॥

यद्यपि पुरुष बुद्धिस्थ भोगादि का अकर्ता है, कर्तृत्व गुणत्रय में ही रहता है। तथापि बुद्धि-पृथक् पुरुष वृत्ति-फल का भोक्ता माना जाता है (उसके अधिष्ठान् से भोगरूप वृत्ति व्यक्त होने के कारण)। एक अन्न उत्पन्न करता है, अन्य उसका भोग करता है—यह लौकिक उपमा इस विषय में ग्राह्य है (बुद्धि कर्ता है, पर पुरुष भोक्ता है)।

इदानीं पुरुषगतभोगस्यैव कर्मफलत्वं स्वीकृत्य बुद्धिकर्मणा पुरुष एव फलमुत्पद्यत इति मुख्यसिद्धान्तमाह—

**अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः ॥१०६॥**

अथवा कर्तरि फलमेव न भवति, सुखं भुञ्जीयेत्यादिकामनाभिर्भोगस्यैव फलत्वात्; अतो भोक्तृनिष्ठमेव फलं भवति। शास्त्रविहितं फलमनुष्ठातरीति शास्त्रेषु कर्तुः फलावगमस्तु तत्सिद्धेरकर्तृनिष्ठाया भोगाख्यसिद्धेः कर्तृबुद्धावविवेकादित्यर्थः। योऽहं करोमि स एवाहं भुञ्ज इति हि लौकिकानुभव इति। या च सुखं मे भूयादित्यादिकामना सा पुत्रो मे भूयादितिवत् फलसाधनत्वेनैवोपपद्यते; भोगस्तु नान्यस्य साधनम्। अतः स एव फलमिति मुख्यः सिद्धान्तः। भोगस्य पुरुषस्वरूपत्वेऽपि वैशेषिकाणां मते श्रोत्रवत् कार्यता बोध्या सुखाद्यवच्छिन्नचितेरेव भोगत्वात्। अस्मिश्च भोगस्य फलत्वपक्षे दुःखभोगाभाव एवापवर्गो बोध्यः। अथवा भोग्यतारूपस्वत्वसम्बन्धेन सुखदुःखाभावयोरेव फलत्वमस्तु तेन सम्बन्धेन धनादेरिव सुखादेरपि पुरुषनिष्ठत्वादिति ॥१०६॥

अथवा यह भी कहा जा सकता है कि अविवेक के कारण ही पुरुष का भोक्तृभाव सिद्ध होता है (भोगरूप दृश्य से पुरुष का सम्बन्ध अविवेक के कारण प्रतीत होता है। तत्त्वतः भोगरूप विकार से पुरुष असंकीर्ण है)।

तदेवं प्रमाणानि प्रमाणफलभूतां प्रमेयसिद्धिं च प्रतिपाद्य प्रमेयसिद्धेरपि फलमाह—

**नोभयं च तत्त्वाख्याने ॥१०७॥**

प्रमाणेन प्रकृतिपुरुषयोस्तत्त्वाख्याने तत्त्वसाक्षात्कारे सत्युभयमपि सुखदुःखे न भवतः ॥ विद्वान् हर्षशोको जहातीति[1] श्रुतेः, न्यायाच्चेत्यर्थः ॥१०७॥

तत्त्वों का साक्षात्कार होने पर सुख-दुःख रूप भोग का उद्भव नहीं होता, क्योंकि तत्त्वसाक्षात्कारी का चित्त रुद्ध हो जाता है।

संक्षेपतो विवेकेनानुमापितौ प्रकृतिपुरुषौ, तयोः प्रकृतिपुरुषयोरनुमानेऽवान्तरविशेषा इतः परमध्यायसमाप्तिं यावद्विचार्यास्तत्र चादौ प्रकृत्याद्यनुमानेष्वनुपलम्भबाधकमपाकरोति—

**विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥१०८॥**

इन्द्रियानुपलभ्यतामात्रतो घटाद्यभाववत् प्रत्यक्षेण चार्वाकैः प्रकृत्याद्यभावः साधयितुं न शक्यते यतो विद्यमानोऽप्यर्थ इन्द्रियाणां कालभेदेन विषयोऽविषयश्च भवति, अतिदूरत्वादिदोषात्। इन्द्रियघातेन्द्रियग्रहाभ्यां चेत्यर्थः। सामग्रीसमवधाने सत्यनुपलम्भस्यैवाभावप्रत्यक्षहेतुता। प्रकृत्याद्युपलम्भे तु वक्ष्यमाणप्रतिबन्धान्न सामग्रीसमवधानमिति भावः। अतिदूरादयश्च दोषा कारिकया परिगणिताः—

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च ॥[2]

इति। समानाभिहारः सजातीयसंवलनम्। यथा माहिषे गव्यमिश्रणान्माहिषत्वाग्रहणमिति ॥१०८॥

विषयों की अतिदूरता, अतिसमीपता आदि के कारण इन्द्रियों से उनका ज्ञान नहीं होता; उसी प्रकार इन्द्रिय के अपघात होने पर या अन्यमनस्कता आदि के कारण भी विषयों का ज्ञान नहीं होता।

नन्वतिदूरत्वादिषु मध्ये प्रकृत्याद्युपलम्भे किं प्रतिबन्धकमिति तत्राह—

**सौक्ष्म्यात् तदनुपलब्धिः ॥१०९॥**

तयोः पूर्वोक्तयोः प्रकृतिपुरुषयोरनुपलब्धिस्तु सौक्ष्म्यादित्यर्थः।[3] सूक्ष्मत्वं च नाणुत्वम्, विश्वव्यापनात्। नापि दुरूहत्वादिकम्, दुर्वचत्वात्।

---

१. कठोप० १।२।१२ (अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति)।

२. सप्तमी कारिका।

३. सौक्ष्म्यहेतुकाऽनुपलब्धि र्व्यासभाष्येऽपि उक्ता—सौक्ष्म्याच्चानुपलब्धिर्धरिति (३।१३)।

तत्राद्यव्याख्यायामयं भावः—आत्मैक्यश्रुतिस्मृतिष्वेकादिशब्दाश्चिदेकरूपतामात्रपराः, भेदादिशब्दाश्च वैधर्म्यलक्षणभेदपराः[1];

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते[2] ॥

एतादिवाक्येष्वेकरूपार्थत्वावश्यकत्वात् । अन्यथाऽवस्थात्रयेऽप्यात्मन एकतामात्रज्ञानेन स्थानत्रयव्यतीतशब्दोक्ताया अवस्थात्रयाभिमाननिवृत्तेरसम्भवात् । तथैकरूपताप्रतिपादनेनैव निखिलोपाधिविवेकेन सर्वात्मनां स्वरूपबोधनसम्भवाच्च । न ह्यन्यथा निर्धर्मकमात्मस्वरूपं विशिष्य ब्रह्मणापि शब्देन साक्षात्प्रतिपादयितुं शक्यते, शब्दानां सामान्यमात्रगोचरत्वात् । आब्रह्मस्तम्बपर्यन्तेष्वात्मन एकरूपत्वे तु प्रतिपादिते तदुपपत्त्यर्थं शिष्यः स्वयमेव तावद्विवेचयति यावन्निर्विशेषे शब्दगोचरे स्वरूपे पर्यवस्यतीति । ततश्च निःशेषाभिमाननिवृत्त्या कृतकृत्यो भवति ।

यदि पुनरद्वैतवाक्यान्यखण्डतामात्रपराणि स्युस्तर्हि तेभ्यो नाभिमाननिवृत्तिः सम्भवति । आकाशे विविधशब्दवदखण्डेऽप्यात्मनि सुखदुःखतदभावादीनामवच्छेदकभेदैरुपपत्तेः । एकस्यैव वाक्यस्याखण्डत्वावैधर्म्योभयपरत्वे च वाक्यभेदोऽखण्डतापरत्वकल्पनायां[3] फलाभावश्च, अवैधर्म्यज्ञानादेव सर्वाभिमाननिवृत्तेः । अतोऽद्वैतवाक्यानि नाखण्डतापराणि । न्यायानुग्रहेण बलवतीभिर्भेदग्राहकश्रुतिस्मृतिभिर्विरोधाच्च । किन्त्ववैधर्म्यलक्षणाभेदपराण्येव । साम्यबोधकश्रुतिस्मृतिभिरेकवाक्यत्वात्, 'सामान्यात् त्वति ब्रह्मसूत्राच्चेति'[4] । तत्र साम्ये श्रुतयः—यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम[5], निरञ्जनः परमं साम्यमुपैती[6]त्याद्याः ।

स्मृतयश्च—

ज्योतिरात्मनि नान्यत्र सर्वभूतेषु तत् समम् ।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा[7] ॥
यावानात्मनि बोधात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद जनस्थोऽपि न मुह्यति[8] ॥

---

१. क्वचिदयं पाठो दृश्यते–चिदेकरूपतामात्रपरचैतन्ययोर्भेदस्य वैधर्म्यलक्षणभेदपरा । पाठोऽयं भ्रष्टः ।
२. ब्रह्मबिन्दूपनिषद् ११
३. परकल्पनायां (पाठा०) ।
४. ब्रह्मसूत्रम् ३।२।३२
५. कठोपनिषद् ४।१।१५
६. मुण्डक ३।१।३
७. द्र० भूमिका ।
८. द्र० भूमिका ।

इत्याद्याः । उक्तश्रुतौ मोक्षदशायामपि भेदघटितसाम्यवचनात् स्वरूपभेदोऽप्यात्मनामस्तीति सिद्धम् । अवैधर्म्याभेदपरत्वं चास्मन्मते विष्णुरहं शिवोऽहमित्यादिवाक्यानां मन्तव्यम् , न तु तत्त्वमसि, अहं ब्रह्मास्मीत्यादिवाक्यानामपि ।

तत्र साङ्ख्यमते प्रलयकालीनस्य पूर्णात्मन एव तदादिपदार्थतया नित्यशुद्धमुक्तस्त्वमसीत्यादियथाश्रुतस्य तादृशवाक्यार्थत्वात्[१] । यदि तु सर्गाद्युत्पन्नपुरुषो नारायणाख्य एव तत्पदार्थस्तदा तत्त्वमसीत्या[१]दिवाक्यानामप्यवैधर्म्यार्थकतैवास्तु । ननु प्रयोजनाभावान्न भेदपरत्वं श्रुतीनां सम्भवतीति चेन्न मोक्षोपपादनस्यैव प्रयोजनत्वात् । सृष्टिसंहारयोः प्रवाहरूपेणानुच्छेदात् तस्यैक्ये मोक्षानुपपत्तेः । अथैवमात्मभेदस्य लोकसिद्धतया न तत्परत्वं श्रुतीनां घटत इति मैवम् ; लाघवतर्केणाकाशवदात्मन्येकत्वस्यानुमानतः प्रसक्तस्य श्रुत्यादिभिर्निषेधात् , स्वपरचैतन्ययोर्भेदस्य चाप्रत्यक्षत्वात् , देहादिष्वेवानुभवात् । य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवती[२]त्यादिभेदनिन्दा तु वैधर्म्यविभागान्यतरलक्षणभेदपरेति ।

नन्वेवं मुक्तानां प्रतिबिम्बावच्छेदश्रुतीनां का गतिरिति चेदुच्यते । अनेकतेजोमयादित्यमण्डलवत् अनेकात्ममयमपि चिदादित्यमण्डलमेकरसमविभक्तमेकपिण्डीकृत्य तस्य किरणवत् स्वांशभूतैरसङ्ख्यपुरुषैरसङ्ख्योपाधिष्वसङ्ख्यविभाग एव प्रतिबिम्बादिदृष्टान्तैः प्रतिपाद्यते विभागलक्षणान्यत्वस्य वाचारम्भणमात्रत्वं बोधयितुं न पुनरखण्डत्वम्—'वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव'[३] इत्यादिसांशदृष्टान्तश्रुतीनां न्यायानुग्रहेण बलवत्त्वादिति; यथा च स्मर्यते—

'यस्य सर्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता'[४]

इति । ब्रह्ममीमांसायां तु नित्याभिव्यक्ते परमेश्वरचैतन्येऽन्येषां लवरूपाविभागेनाप्यद्वैतमुक्तमविभागो वचनादिति सूत्रेणेति[५] । अधिकं तु ब्रह्ममीमांसाभाष्ये प्रोक्तमस्माभिरिति दिक्[६] ।

सूत्रस्य द्वितीयव्याख्यायां त्वयं भावः । प्रलयकाले पुरुषविजातीयं सर्वमेवासत् , अर्थक्रियाकारित्वाभावात् । पुरुषाणां कूटस्थत्वेनार्थक्रियैवाप्रसिद्धेति । अतः सर्गकाल इव प्रलयेऽपि सत्त्वम् । अतस्तदात्मनां वि-

१. छान्दोग्य० ६।८।७
२. द्र० तै० उप० २।७
३. कठ उप० १।५।१०
४. द्र० भूमिका ।
५. ब्रह्मसूत्रम् ४।२।१६
६. विज्ञानामृतभाष्यम् ४।२।१६; द्र० अ० ४।२-४

जातीयद्वैतराहित्यम् । तथा सर्गकालेऽपि कूटस्थत्वरूपपारमार्थिकसत्त्वं नान्यत्रेति विजातीयद्वैतराहित्यात् सर्गकालीनाद्वैतश्रुतयोऽप्युपपन्ना इति॥१५४॥

आत्मैकत्वरूप अद्वैतभाव के प्रकाशक अनेक श्रुतिवाक्य हैं, पर युक्तिसंगत आत्मनानात्ववाद से श्रुतिमत का कोई विरोध नहीं है; क्योंकि ईदृश श्रुतिवाक्य जाति-परक होते हैं। प्रत्येक आत्मा सर्वतःतुल्य (एकरूप) है, उनमें परस्परभेदक कोई वास्तव धर्म नहीं है; इस एकरूपता में ही अद्वैतपरक श्रुतियों का तात्पर्य है। [द्र० भूमिका]।

नन्वात्मन एकत्ववदेकरूपत्वमपि नानारूपताप्रत्यक्षेण विरुद्धम्, तत् कथमुक्तं जातिपरत्वादिति तत्राह—

**विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम् ॥१५५॥**

विदितं स्पष्टं बन्धकारणमविवेको यत्र तस्य दृष्ट्यैव पुरुषेष्वतद्रूपं रूपभेद इत्यर्थः। अतो भ्रान्तदृष्ट्या न रूपभेदसिद्धिरिति ॥१५५॥

व्यवहारदृष्टि से पुरुषों में स्वरूपवैलक्षण्य ज्ञात होता है, अतः पुरुष परस्पर पृथक्-स्वरूप वाले हैं (अतः जातिपरत्वकथन सदोष है), ऐसी बात नहीं है, क्योंकि अवि-वेकियों की दृष्टि में ही पुरुषों का परस्पर स्वरूपवैलक्षण्य प्रतिभात होता है, तत्त्वतः नहीं।

ननु तथाप्यनुपलम्भादेकरूपत्वाभावः सेत्स्यति, तत्राह—

**नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥१५६॥**

अनुपलम्भ एवासिद्धः। अज्ञैरदर्शनेऽपि ज्ञानिभिरेकरूपत्वस्य दर्शना-दित्यर्थः ॥१५६॥

यदि प्रत्येक पुरुष एकरूप है तो उस एकरूपता की ही उपलब्धि होनी चाहिए, (रूपवैलक्षण्य की उपलब्धि नहीं होनी चाहिए), ऐसा नहीं कहा जा सकता, क्योंकि पुरुषस्वरूप का यथार्थ अनुभव विवेकख्यातिमानों को ही होता है और उनका अनुभव ही इस विषय में ग्राह्य है। अन्ध नहीं देख पाता, इसलिये चक्षुष्मान् के दर्शन का अपलाप नहीं किया जा सकता।

अद्वैतश्रुत्यनुपपत्तिं समाधायाखण्डाद्वैते बाधकान्तरमाह—

**[1]वामदेवादिर्मुक्तो नाद्वैतम् ॥१५७॥**

वामदेवादिर्मुक्तोऽस्ति तथापीदानीं बन्धः स्वस्मिन्ननुभवसिद्धः। अतो नाखण्डात्माऽद्वैतमित्यर्थः। 'स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्ग-

---

१. द्र० बृहदा० १।४।१०; अत्र शास्त्रदृष्ट्या तूपदेशो वामदेववत् इति ब्रह्मसूत्रमपि (१।१।४०) द्रष्टव्यम्।

मापे'त्यादि'वाक्यशतविरोधश्चेति शेषः । न चैवं बन्धमोक्षावुपाधेरेवेत्यवगन्तव्यम्, श्रुतिस्मृतिसिद्धान्तविरोधात् । दुःखं मा भुञ्जीयेति कामनादर्शनेन पुरुषमोक्षस्यैव मोक्षाख्यपरमपुरुषार्थत्वाच्च । उपाधेर्दुःखहानस्य च तादर्थ्येन परमपुरुषार्थत्वात् पुत्रादिवदिति । यदप्याधुनिकैर्मायावादिभिरुच्यते— अद्वैतश्रुतिविरोधाद् बन्धमोक्षसृष्टिसंहारादिश्रुतयो बाध्यन्त इति; तदप्यसत्, मोक्षाख्यफलस्यापि श्रवणकाल एवाभावनिश्चये श्रवणोत्तरं मननादिविधेरनुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् । प्रपञ्चान्तर्गतस्य वेदान्तस्याप्यद्वैतश्रुत्या बाधे वेदान्तावगतेऽप्यद्वैते पुनः संशयापत्तेश्च । स्वाप्नवाक्यस्य जाग्रति बाधे तद्वाक्यार्थे पुनः संशयवत् । किञ्च मिथ्याबुद्धिर्नास्तिकते'त्यनुशासनाद्धर्मादिषु स्वापवन् मिथ्यादृष्टयो बौद्धप्रभेदा एव सांवृतिकशब्देन प्रपञ्चस्याविद्यकतायाश्च तैरभ्युपगमादिति दिक् ॥१५७॥

यदि वस्तुतः बहुसंख्यक पृथक् पुरुष नहीं होते (मूलतः पुरुषतत्त्व देशकालातीत है) और एक अखण्ड पुरुष ही होता तो वामदेव आदि अनेक व्यक्ति मुक्त हुए और अनेक आत्मा अभी भी बद्ध हैं—ऐसी स्थिति न होती, अतः अखण्डाद्वैतपक्ष उपपन्न नहीं होता। (एक अखण्ड आत्मा का एक अंश बद्ध और एक अंश मुक्त है—ऐसा नहीं हो सकता)।

ननु वामदेवादेरपि परममोक्षो न जात इत्यभ्युपेयम्, तत्राह—

**अनादावद्ययावदभावाद्भविष्यदप्येवम् ॥१५८॥**

अनादौ कालेऽद्ययावच्चेन्मोक्षो न जातः कस्यापि, तर्हि भविष्यत्कालोऽप्येवं मोक्षशून्य एव स्यात्, सम्यक्साधनानुष्ठानस्याविशेषादित्यर्थः ॥१५८॥

यदि अखण्डाद्वैतपक्ष के रक्षार्थ यह माना जाए कि आज तक कोई बद्ध आत्मा मुक्त हुआ ही नहीं तो उत्तर यह है कि अनादिकाल से आजतक यदि कोई भी मुक्त नहीं हुआ तो भविष्यत्काल में भी कोई मुक्त न हो सकेगा। ('अनादि काल से' ऐसा प्रयोग विकल्पवृत्तिजात है)।

तत्र प्रयोगमाह—

**इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥१५९॥**

सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति वर्त्तमानकालवदित्यनुमानं सम्भवेदित्यर्थः ॥१५९॥

---

१. द्र० भूमिका।

२. अमरकोशः १।४।४

क्योंकि तब यह अनुमान होगा कि जिस प्रकार इस काल में किसी के बन्धन का उच्छेद नहीं हुआ, उसी प्रकार किसी काल में भी बन्धन का उच्छेद नहीं होगा।

पुरुषाणां यदेकरूपमेकत्वप्रतिपादकश्रुत्यर्थावधारितं तत् किं मोक्षकाले, किं सर्वदैवेत्याकाङ्क्षायामाह—

**व्यावृत्तोभयरूपः ॥१६०॥**

स च पुरुषो व्यावृत्तोभयरूपो व्यावृत्तो निवृत्तो रूपभेदो यस्मात् तथेत्यर्थः। श्रुतिस्मृतिन्यायेभ्यः सदैकरूपतासिद्धेरिति शेषः। तदुक्तम्—

बहुरूप इवाभाति मायया बहुरूपया।
रममाणो गुणेष्वस्या ममाहमिति बध्यते[1] ॥ इति
जगदाख्यमहास्वप्ने स्वप्नात् स्वप्नान्तरं व्रजत्।
रूपं त्यजति नो शान्तं ब्रह्म शान्तत्वबृंहितम्[2] ॥

इति च ॥१६०॥

पुरुष स्वरूपतः 'निवृत्त-रूपद्वय' है; तात्पर्य यह है कि बद्धावस्था और मोक्षावस्था में पुरुष के स्वरूप में कोई विलक्षणता होती हो—ऐसी बात नहीं; वह व्यक्त एवं शान्त चित्त का निर्विकार द्रष्टा है।

ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपत्वम्, तत्राह—

**साक्षात्सम्बन्धात् साक्षित्वम्[3] ॥१६१॥**

पुरुषस्य यत् साक्षित्वमुक्तं तत् साक्षात्सम्बन्धमात्रात्, न तु परिणामत इत्यर्थः। साक्षात्सम्बन्धेन बुद्धिमात्रसाक्षिताऽवगम्यते, साक्षाद्द्रष्टरि संज्ञायामिति[4] साक्षिशब्दव्युत्पादनात्। साक्षाद्द्रष्टृत्वं चाव्यवधानेन द्रष्टृत्वम्। पुरुषे च साक्षात्सम्बन्धः स्वबुद्धिवृत्तेरेव भवति। अतो बुद्धेरेव साक्षी पुरुषोऽन्येषां तु द्रष्टृमात्रमिति शास्त्रीयो विभागः। ज्ञाननियामकश्चार्थाकारतास्थानीयः प्रतिबिम्बरूप एव सम्बन्धो न तु संयोगमात्रमतिप्रसंगादित्यसकृदावेदितम्[5]। विष्णवादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणम्। अक्षसम्बन्धात् साक्षित्वमिति पाठे[6] त्वक्षमत्र बुद्धिः करणत्वसामान्यात्, तस्या यथोक्तात् प्रतिबिम्बरूपात् सम्बन्धादित्यर्थः ॥१६१॥

---

१–२. योगवा० ६।७२।२–३

३. साक्षित्वविषये पञ्चशिख वाक्यं द्रष्टव्यम्—अयं तु खलु त्रिषु गुणेषु कर्तृषु अकर्तरि च पुरुषे तुल्यातुल्यजातीये तत्क्रियासाक्षिणि उपनीयमानान् सर्वभावान् अनुपश्यन् न दर्शनमन्यच् शङ्कते (२।१८ व्यासभाष्योद्धृतम्)।

४. अष्टाध्यायी ५।२।९१

५. द्र० भाष्यं १।१४८

६. अनिरुद्धसंमतः पाठोऽयम्।

पुरुष को 'साक्षी' माना जाता है, क्योंकि वह बुद्धिजनित प्रत्ययों के उपदर्शनकारी है (पुरुष के निर्विकार उपदर्शन से बुद्धि की व्यक्तता होती है)।

उभयरूपत्वाभावसिद्ध्यर्थं पुरुषस्यापरौ विशेषावाह सूत्राभ्याम्—

**नित्यमुक्तत्वम् ॥१६२॥**

सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वम्। दुःखादेर्बुद्धिपरिणामत्वादित्यर्थः। पुरुषार्थस्तु दुःखभोगनिवृत्तिः प्रतिबिम्बरूपदुःखनिवृत्तिर्वेत्युक्तमेव ॥१६२॥

पुरुष स्वरूपतः नित्यमुक्त है—दुःखरूप बन्धन का अतीत है (बन्धन वस्तुतः चित्तमें ही रहता है)। मुक्ति = दुःख से चित्त की मुक्ति जो चित्त के शाश्वतरोध (अपने कारण में लीन होना) से ही संभव है। बुद्धिद्रष्टा पुरुष तब केवली हो जाता है।

**औदासीन्यं चेति[1] ॥१६३॥**

औदासीन्यमकर्तृत्वं तेन चान्येऽपि निष्कामत्वादय उपलक्षणीयाः। कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतेः[2]। इतिशब्दः पुरुषधर्मप्रतिपादनसमाप्तौ ॥१६३॥

पुरुष उदासीन है—बौद्ध क्रियाओं से न वह विकृत होता है और न उसमें किसी प्रकार का कर्तृत्व आता है।

नन्वेवं प्रकृतिपुरुषयोरन्योऽन्यं वैधर्म्येण विवेके सिद्धे पुरुषस्य कर्तृत्वं बुद्धेरपि च ज्ञातृत्वं श्रुतिस्मृत्योरुच्यमानं कथमुपपद्येयाताम्, तत्राह—

**उपरागात् कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् ॥१६४॥**

अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्तृत्वं तद् बुध्युपरागात्। बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्; एतदुभयं न वास्तवमित्यर्थः। यथाऽग्न्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिकी, यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः। एतच्च कारिकयाप्युक्तम्—

---

१. पुरुषस्वभावविषये द्रष्टव्यम्—शान्ति० ३०२।४०–४१; ३०४।९–१०; ३०५।२७–३३ च।

२. बृहदा० १।५।३

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः[1] ॥
इति । चित्सान्निध्यादिति द्विःपाठोऽध्यायसमाप्तिसूचनार्थः ॥१६४॥

पुरुष का कर्तृत्व उपराग से है, वास्तव नहीं । वास्तव कर्तृत्व बुद्धि का ही है, पर चित्-सान्निध्य से ही बुद्धि की अभिव्यक्ति होती है (अन्यथा वह अव्यक्त हो जाती है) [सान्निध्य और उपराग के विषय में भूमिका द्रष्टव्य] ।

हेयहाने तयोर्हेतू इति व्यूहा[2] यथाक्रमम् ।
चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन् प्रपञ्चिताः ॥१॥

सङ्क्षिप्तसाङ्ख्यसूत्राणामर्थस्यात्र प्रपञ्चनात् ।
शास्त्रं योगवदेवेदं साङ्ख्यप्रवचनाभिधम् ॥२॥

इति विज्ञानाचार्यनिर्मिते[3] कापिलसाङ्ख्यप्रवचनस्य भाष्ये विषयाध्यायः प्रथमः ॥

---

१. विंशी कारिका ।
२. चतुर्व्यूहविषये व्यासभाष्यम् २।१५; लिङ्गपु० १।२८।२३-२४ च द्र० ।
३. क्वचित् विज्ञानभिक्षुनिर्मिते इति पठ्यते ।

## द्वितीयोऽध्यायः

शास्त्रस्य विषयो निरूपितः। साम्प्रतं पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियामतिविस्तरेण द्वितीयाध्याये वक्ष्यति। तत्रैव प्रधान-कार्याणां स्वरूपं विस्तरतो वक्तव्यं तेभ्योऽपि पुरुषस्यातिस्फुटविवेकाय। अत एव—

विकारं प्रकृतिं चैव पुरुषं च सनातनम्।
यो यथावद्विजानाति स वितृष्णो विमुच्यते[1]॥

इति मोक्षधर्मादिषु त्रयाणामेव ज्ञेयत्ववचनम्। तत्रादावचेतनायाः प्रकृतेर्निष्प्रयोजनस्रष्टृत्वे मुक्तस्यापि बन्धप्रसङ्ग इत्याशयेन जगत्सर्जने प्रयोजनमाह—

**विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥१॥**

कर्तृत्वमिति पूर्वाध्यायशेषसूत्रादनुषज्यते। स्वभावतो दुःखबन्धाद्विमु-क्तस्य पुरुषस्य प्रतिबिम्बरूपदुःखमोक्षार्थं प्रति विम्बसम्बन्धेन दुःखमोक्षार्थं वा प्रधानस्य जगत्कर्तृत्वम्। अथवा स्वार्थम्—स्वस्य पारमार्थिकदुःखमोक्षार्थ-मित्यर्थः। यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनं तथापि मुख्यत्वान्मोक्ष एवोक्तः॥१॥

प्रधान ( प्रकृति ) की प्रवृत्ति (महदादिरूप में परिणाम एवं कर्तृत्व ) नित्यमुक्त पुरुष के विवेकाभ्यासपूर्वक मोक्षके लिये एवं अपने लिये ( शब्दादिबोध के लिये ) होती है। भोग ( स्वार्थ ) एवं अपवर्ग ( विमुक्त-मोक्ष ) रूप द्विविध पुरुषार्थ तत्त्वतः चित्त-व्यापार है; जब तक ये दो चरितार्थ नहीं हो जाते, तब तक प्रधान का वैषम्य चित्त-प्रवाहरूप में चलता ही रहेगा—यह इस सूत्रका तात्पर्य है। [ द्र० भूमिका ]।

ननु मोक्षार्थं चेत् सृष्टिस्तर्हि सकृत् सृष्ट्यैव मोक्षसम्भवे पुनः पुनः सृष्टिर्न स्यादिति तत्राह—

**विरक्तस्य तत्सिद्धेः ॥२॥**

नैकदा सृष्टेर्मोक्षः किन्तु बहुशो जन्ममरणव्याध्यादिविविधदुःखेन भृशं तप्तस्य ततश्च प्रकृतिपुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैव मोक्षोत्पत्ति-सिद्धेरित्यर्थः॥२॥

---

१. शान्ति० २१७।३७

जो ( विचारवान् साधक ) सृष्टि के प्रति रागहीन होगा ( सृष्टिकी दुःखकारणता को देखकर ), उसकी मोक्षसिद्धि होगी।

सकृत्सृष्ट्या वैराग्यासिद्धौ हेतुमाह—

**न श्रवणमात्रात् तत्सिद्धिरनादिवासनाया बलवत्त्वात् ॥३॥**

श्रवणमपि बहुजन्मकृतपुण्येन भवति। तत्रापि श्रवणमात्रान्न वैराग्यसिद्धिः किन्तु साक्षात्कारात्। साक्षात्कारश्च झटिति न भवति, अनादिमिथ्यावासनाया बलवत्त्वात्, किन्तु योगनिष्ठया। योगे च प्रतिबन्धबाहुल्यमित्यतो बहुजन्मभिरेव वैराग्यं मोक्षश्च कदाचित् कस्यचिदेव सिध्यतीत्यर्थः ॥३॥

केवल श्रवण ( मोक्षशास्त्र का अध्ययन ) से मोक्षसिद्धि नहीं होती, क्योंकि जीव अनादिकाल से वासनाबद्ध है, अतः अतिबलवती वासना के प्रभाव को हटाना केवल शास्त्रश्रवण से संभव नहीं है ( उसके लिये यथायोग्य योग का अनुष्ठान अपेक्षित है )।

सृष्टिप्रवाहे हेत्वन्तरमाह—

**बहुभृत्यवद्वा प्रत्येकम् ॥४॥**

यथा गृहस्थानां प्रत्येकं बहवो भर्तव्या भवन्ति स्त्रीपुत्रादिभेदेन, एवं सत्त्वादिगुणानामपि प्रत्येकमसङ्ख्यपुरुषा विमोचनीया भवन्ति। अतः कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोचनार्थं सृष्टिप्रवाहो घटते। पुरुषाणामानन्त्यादित्यर्थः। तथा च योगसूत्रम्—कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति[1] ॥४॥

जिस प्रकार एक गृहस्थ के अनेक भरणयोग्य स्त्रीपुत्रादि होते हैं, उसी प्रकार सत्त्वादिगुणरूप एक प्रकृति के अनेक मोचनीय पुरुष होते हैं। पुरुष असंख्य हैं, अतः बहुसंख्यक पुरुषों के निरन्तर मुक्त होने पर भी असंख्य पुरुष विद्यमान रहेंगे और इस प्रकार सृष्टिप्रवाह का उच्छेद कभी भी न होगा [ द्र० भूमिका ]।

ननु प्रकृतेरेव स्रष्टृत्वं कथमुच्यते। एतस्मादात्मन आकाशः सम्भूत[2] इति श्रुत्या पुरुषस्यापि स्रष्टृत्वसिद्धेरिति तत्राह—

**प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥५॥**

प्रकृतौ स्रष्टृत्वस्य वस्तुत्वे च सिद्धे पुरुषस्य स्रष्टृत्वाध्यास एव श्रुतिषु सिध्यति, उपासनायामेव श्रुतेस्तात्पर्यात्। अजामेकामित्यादि[3] श्रुत्यन्तरेण

---

१. योगसूत्रम् २।२२

२. तै० उप० २।१

३. श्वेताश्व० ४।५; तै० आर० १०।१०

प्रकृतेः स्रष्टृत्वसिद्धेः, पुंसां कूटस्थचिन्मात्रताबोधकश्रुत्यन्तरविरोधाच्चेत्यर्थः। अयं चाध्यास उपचाररूपो लोके सिद्ध एवास्ति यथा स्वशक्तिषु योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते तथा स्वशक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्यते शक्तिशक्तिमदभेदात्। तदुक्तं कौर्मे—

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः[1]॥

इति। भेदमन्योऽन्याभावभेदं चाविभागरूपं प्रकृत्यादितत्त्वोपासकाः पश्यन्तीत्यर्थः। तयोश्चोदाहरणम्—अथात आदेशो नेति नेतीत्यादिश्रुतिः[2], आत्मैवेदं सर्वमित्यादि[3] श्रुतिश्चेति भावः॥५॥

स्रष्टृत्व त्रैगुणिक है, अतः वस्तुतः वह प्रकृति का ही धर्म है, निर्गुण पुरुष में सृष्टिकर्तृत्व अवास्तव है। द्रष्टा में दृश्य का जो अध्यास ( एक में अन्य के धर्म का ज्ञान ) होता है, वह तभी संभव है यदि प्रकृति की सत्ता वास्तव सत्य हो ( यह अर्थ भी हो सकता है )।

नन्वेवं प्रकृतावपि स्रष्टृत्वं वास्तवमिति कुतोऽवधृतं सृष्टेः स्वप्नादि-तुल्यताया अपि श्रवणादिति तत्राह—

**कार्यतस्तत्सिद्धेः ॥६॥**

कार्याणामर्थक्रियाकारितया वास्तवत्वेन कार्यत एव धर्मिग्राहकप्रमाणेन प्रकृतेर्वास्तवस्रष्टृत्वसिद्धेरित्यर्थः। स्वप्नादितुल्यताश्रुतयस्त्वनित्यतारूपासत्त्वांशमात्रे पुरुषाध्यस्तत्वांशे वा बोध्याः; अन्यथा सृष्टिप्रतिपादकश्रुतिविरोधात्, स्वप्नपदार्थानामपि मनःपरिणामत्वेनात्यन्तासत्ताविरहाच्चेति ॥६॥

प्रकृति में वास्तव कर्तृत्व है ( सृष्टिकर्तृत्व गुणत्रय से ही वस्तुतः संबन्धित है, पुरुष से नहीं ), क्योंकि अर्थक्रियाकारी त्रैगुणिक सत् पदार्थ अवश्य ही प्रधानकारणक है, चिद्रूप ब्रह्म का कार्य नहीं।

ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तपुरुषं प्रत्यपि सा प्रवर्तेत, तत्राह—

**चेतनोद्देशान्नियमः कण्टकमोक्षवत्[4] ॥७॥**

---

१. कूर्म० १।१२।२८

२. बृहदा० २।३।६

३. छान्दोग्य० ७।२५।२; नृसिंहतापनी २।७

४. कण्टकदृष्टान्तो व्यासभाष्येऽप्यस्ति—पादतलस्य भेद्यता कण्टकस्य भेत्तृत्वं परिहारः कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाधिष्ठानम्। एतत् त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाप्नोति इति।

'चिती संज्ञाने'[1] इति व्युत्पत्त्या चेतनोऽत्राभिज्ञः। यथैकमेव कण्टकं यश्चेतनोऽभिज्ञस्तस्मादेव मुच्यते तं प्रत्येव दुःखात्मकं न भवत्यन्यान् प्रति तु भवत्येव, तथा प्रकृतिरपि चेतनादभिज्ञात् कृतार्थादेव मुच्यते तं प्रत्येव दुःखात्मिका न भवति। अन्याननभिज्ञान् प्रति तु दुःखात्मिका भवत्येवेति नियमो व्यवस्थेत्यर्थः। एतेन स्वभावतो बद्धाया अपि प्रकृतेः स्वमोक्षो घटत इत्यतो न मुक्तपुरुषं प्रति प्रवर्तते ॥७॥

जिस प्रकार कण्टक ( काँटा ) अभिज्ञ व्यक्ति को क्लेश नहीं दे सकता (क्योंकि वह पादत्राण आदि के प्रयोग से कण्टकजनित भेदन क्रिया से अपने को बचा सकता है ), अज्ञ को ही दुःख दे सकता है, उसी प्रकार प्रकृति भी विवेकी साधक को क्लिष्ट नहीं कर सकती, अविवेकी को क्लिष्ट कर सकती है।

ननु पुरुषे स्रष्टृत्वमध्यस्तमात्रमिति यदुक्तं तन्न युक्तम्। प्रकृतिसंयोगेन पुरुषस्यापि महदादिपरिणामौचित्यात्। दृष्टो हि पृथिव्यादियोगेन काष्ठादेः पृथिव्यादिसदृशः परिणाम इति, तत्राह—

**अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥८॥**

प्रकृतियोगेऽपि पुरुषस्य न स्रष्टृत्वसिद्धिराञ्जस्येन साक्षात्। तत्र दृष्टान्तोऽयोदाहवत्। यथायसो न दग्धृत्वं साक्षादस्ति किन्तु स्वसंयुक्ताग्निद्वारकमध्यस्तमेवेत्यर्थः। उक्तदृष्टान्ते तूभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते सन्दिग्धस्थले त्वेकस्यैव परिणामेनोपपत्तावुभयोः परिणामकल्पने गौरवम्। अन्यथा जपासंयोगात् स्फटिकस्य रागपरिणामापत्तेरिति ॥८॥

प्रकृति के संयोग रहने पर भी स्रष्टृत्व आदि धर्म पुरुष के नहीं होते; वे प्रकृति के ही होते हैं। जिस प्रकार अग्नियुक्त लौह जब जलाता है, तो वस्तुतः अग्नि ही जलाती है, लोहा नहीं, उसी प्रकार प्रकृति-पुरुष का संयोग रहने पर भी विश्लेषणपरक दृष्टि से यही कहा जाएगा कि तत्त्वतः स्रष्टृत्व आदि प्रकृति के ही धर्म हैं।

सृष्टेः फलं मोक्ष इति प्रागुक्तम्। इदानीं सृष्टेर्मुख्यं निमित्तकारणमाह-

**रागविरागयोर्योगः सृष्टिः ॥९॥**

रागे सृष्टिर्वैराग्ये च योगः स्वरूपेऽवस्थानम्। मुक्तिरिति यावत्, अथवा चित्तवृत्तिनिरोध इत्यर्थः। तथा चान्वयव्यतिरेकाभ्यां रागः सृष्टिकारणमित्याशयः। तथा च श्रुतिरपि ब्रह्मादिरूपां विविधकर्मगतिमुक्त्वाह—'इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न

---

१. चिती संज्ञाने। संज्ञानं चैतन्यमिति माधवीयधातुवृत्तौ (१।३४)। संज्ञानं संवित्ति रिति क्षीरस्वामी (क्षीरतरङ्गिणी)।

तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति[1]; रागवैराग्ये अपि प्रकृतिधर्मावेव ॥९॥

राग से सृष्टि होती है और विराग से स्वरूपावस्थानरूप योग सिद्ध होता है। सृष्टिकारी ईश्वर का चित्त क्लेशानुविद्ध है, सृष्टिकर्तृत्व-सार्वज्ञ्यादि में वैराग्य होने पर ही चित्तरोधरूपयोग (=कैवल्य) होता है।

इतः परं सृष्टिप्रक्रियां वक्तुमारभते—

**महदादिक्रमेण पञ्चभूतानाम् ॥१०॥**

सृष्टिरिति पूर्वसूत्रादनुवर्त्तते। यद्यप्येतस्मादात्मन आकाशः सम्भूत इत्यादि[2]श्रुतावादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथापि महदादिक्रमेणैव पञ्चभूतानां सृष्टिरिष्टेत्यर्थः। तेज आदिसृष्टिश्रुतौ गगनवायुसृष्टेरापूरणवदुक्तश्रुतावप्यादौ महदादिसृष्टिः पूरणीयेति भावः। अत्र च प्रमाणं घटसृष्टिवदन्तःकरणातिरिक्ताखिलसृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम्। किञ्च—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी[3] विश्वस्य धारिणी[4] ॥

इति श्रुत्यन्तरस्थपाठक्रमानुरोधेन 'स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुमि'त्यादिश्रुत्यन्तरेण[5] च पञ्चभूतसृष्टेः प्राङ्महदादिसृष्टिरवधार्यत इति। प्राणश्चान्तःकरणस्य वृत्तिभेद इति वक्ष्यति[6]। अतोऽस्यां श्रुतौ प्राण एव महत्तत्त्वमिति[7]। तथा वेदान्तसूत्रमपि महदादिक्रमेणैव सृष्टिं वक्ति—अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति[8]। सदाकाशयोर्मध्ये बुद्धिमनसी उत्पाद्ये इति क्रमेणेत्यर्थः। मनसि चाहङ्कारस्य प्रवेश इति ॥१०॥

तात्त्विक दृष्टि से सृष्टि का क्रम यह है—प्रकृति से महत्, महत् से अहंकार, अहं से ११ इन्द्रियाँ एवं ५ तन्मात्र, तन्मात्र से भूत।

---

१. बृहदा० ४।४।६ (बहुषु संस्करणेषु वाक्यमिदमीषद्भ्रष्टरूपेण मुद्रितम्)।
२. तै० उप० २।१
३. पृथ्वीति पाठोऽश्रौतः।
४. मुण्डक० २।१।३
५. प्रश्न० ६।४
६. द्र० २।३१ सूत्रम्।
७. विज्ञानामृतभाष्ये भिक्षुराह—प्रथमं तावद् ईश्वराधिष्ठानेन संयुक्ताभ्यां जीवप्रधानाभ्यां महानुत्पद्यते, स च क्रियाशक्त्या प्राणः निश्चयशक्त्या च बुद्धिः तयोर्मध्ये प्रथमं प्राणवृत्तिरुत्पद्यते (२।४।१३ अणुश्चेति सूत्रम्)।
८. ब्रह्मसूत्रम् २।३।१५

प्रकृतेरेव स्रष्टृत्वं स्वमोक्षार्थं तस्या नित्यत्वात्। महदादीनां तु स्वस्वविकारस्रष्टृत्वं न स्वमोक्षार्थमनित्यत्वादिति विशेषमाह—

**आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ॥११॥**

एषां महदादीनां स्रष्टृत्वस्यात्मार्थत्वात् पुरुषमोक्षार्थत्वान्न स्वार्थ आरम्भः स्रष्टृत्वं विनाशित्वेन मोक्षायोगादित्यर्थः। परमोक्षार्थकत्वे चावश्यके पुरुषमोक्षार्थकत्वमेव युक्तं न प्रकृतिमोक्षार्थकत्वे तस्याः पुरुषगुणत्वादिति ॥११॥

सृष्टि आत्मार्थ है, महदादि का आरम्भ अपने लिये नहीं है। तात्पर्य यह है कि पुरुषार्थ ही व्यक्त दृश्यभाव का हेतु है और उसकी समाप्ति होने पर, दृश्य की व्यक्तता नहीं रहती। महदहंकारादि स्वप्रतिष्ठ नहीं हैं; वे चूँकि संहत हैं, इसलिये प्रकृतिपरस्थ असंहत आत्मा के लिये है ( द्र० योगसूत्र—तदर्थ एव दृश्यस्यात्मा २।२१) [ द्र० भूमिका ]।

खण्डदिक्कालयोः सृष्टिमाह—

**दिक्कालावाकाशादिभ्यः ॥१२॥**

नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव। अतो दिक्कालयोर्विभुत्वोपपत्तिः। आकाशवत् सर्वगतश्च नित्य[1] इत्यादिश्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम्। यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः। आदिशब्देनोपाधिग्रहणादिति। यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ तथापि विशिष्टस्यातिरिक्तताभ्युपगमवादेन। वैशेषिकनये श्रोत्रस्य कार्य्यतावत् तत्कार्यत्वमत्रोक्तम् ॥१२॥

दिक् ( देश = जिस शब्दादिबाह्यगुण शून्य विस्तारमात्र की कल्पना की जाती है, वह ) और काल का उद्भव आकाश आदि (निमित्त) से होता है [द्र० भूमिका]।

---

1. प्रचलितेषु श्रुतिग्रन्थेषु नेदं वाक्यमुपलभ्यते। इदं काठकवचनमिति शंकराचार्य आह (छान्दोग्य० ६।३।२ भाष्ये)। अत्रैव भाष्ये उद्धृतं काठकवचनान्तरं यद्यपि २।२।१२ कठोपनिषदि दृश्यते, तथापि नेदं वचनं तत्रोपलभ्यते। आपस्तम्बधर्मसूत्रान्तर्गताध्यात्मपटलभाष्येऽपि वचनमिदमुद्धृतम् (द्र० शंकरकृत-विवरणम्)। कठानाम् कस्मिन्नपि आम्नायांशे वाक्यमिदं स्यादिति अनुमीयते। शाण्डिलयोपनिषदि आकाशवत् सवर्गतं सुसूक्ष्ममिति पठ्यते (२।४)। शान्ति० २३५।२४ टीकायां नीलकण्ठोऽप्येतदुदाजहार।

इदानीं महदादिक्रमेणे[1]त्युक्तात् स्वरूपतो धर्मतश्च क्रमेण दर्शयति—

**अध्यवसायो बुद्धिः[2] ॥१३॥**

महत्तत्त्वस्य पर्यायो बुद्धिरिति। अध्यवसायश्च निश्चयाख्यस्तस्या साधारणी वृत्तिरित्यर्थः। अभेदनिर्देशस्तु धर्मधर्म्यभेदात्। अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्यव्यापकत्वान्महैश्वर्याच्च मन्तव्यम्—

सविकारात् प्रधानात् तु महत्तत्त्वमजायत।
महानिति यतः ख्यातिर्लोकानां जायते सदा[3]।

इति स्मृतेः। अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद इत्यादिश्रुति[4]-स्मृतिषु च हिरण्यगर्भे चेतनेऽपि महानिति शब्दो बुद्ध्यभिमानित्वेनैव। यथा पृथिव्याभिमानिचेतने पृथिवीशब्दस्तद्वत्। एवमेव रुद्रादिष्वहङ्कारादिशब्दोऽपि बोध्यः। प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताभिमानिपर्यन्तानां स्वस्वबुद्धिरूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैवांशा इति ॥१३॥

महत् (=बुद्धि) का लक्षण अध्यवसाय (अधिकृत विषयों का प्राकाश्य-पर्यवसान) है; 'निश्चय करना' मात्र यह अध्यवसाय नहीं है। [द्र० भूमिका]।

महत्तत्त्वस्यापरानपि धर्मानाह—

**तत्कार्यं धर्मादि ॥१४॥**

धर्मज्ञानवैराग्यैश्वर्याण्यपि बुद्ध्युपादानकानि नाहङ्काराद्युपादानकानि बुद्धेरेव निरतिशयसत्त्वकार्यत्वादित्यर्थः ॥१४॥

धर्म-ज्ञान-वैराग्य-ऐश्वर्य—ये चार बुद्धि के (सात्त्विक) कार्य (रूप) हैं।

नन्वेवं कथं नरपश्वादिगतानां बुद्ध्यंशानामधर्मप्राबल्यमुपपद्यताम्, तत्राह—

**महदुपरागाद्विपरीतम् ॥१५॥**

---

१. द्र० २।१० सूत्रम्।

२. अध्यवसायलक्षणो महान् बुद्धिर्मतिरुपलब्धिरित्यनर्थान्तरमिति देवल आह। बुद्धिरध्यवसानाय (शान्ति० २४७।१८), बुद्धिरध्यवसायिनी (शान्ति० २४८।१) इति भारतम्।

३. नाकरस्थलं दर्शितं गार्बेमहोदयेन। मत्स्ये पठ्यते—सविकारात् प्रधानात्तु महत्-तत्त्वं प्रजायते। महानिति यतः ख्यातिर्लोकानां जायते तथा (३।१७)।

४. बृहदा० २।४।१०

तदेव महन्महत्तत्त्वं रजस्तमोभ्यामुपरागाद्विपरीतं क्षुद्रधर्माज्ञाना-वैराग्यानैश्वर्यधर्मकमपि भवतीत्यर्थः[1]। एतेन सर्व एव पुरुषा ईश्वरा इति श्रुतिस्मृतिप्रवादोऽप्युपपादितः, सर्वोपाधीनां स्वाभाविकैश्वर्यस्य रजस्तमोभ्या-मेवावरणादिति। नन्वेवं धर्माद्यवस्थानार्थं बुद्धेरपि नित्यत्वात् कथं कार्यतेति चेन्न। प्रकृत्यंशरूपे बीजावस्थमहत्तत्त्वे सत्त्वविशेषे कर्मवासनादीनामवस्थानात् तस्यैव ज्ञानकारणावस्थायामङ्कुरवदुपपत्त्यङ्गीकारात्। तथा चाकाशवदेव नित्यानित्योभयरूपा बुद्धिः। यथाकारणं स्वाकारः प्रकृतिप्रभावादिति[2] ॥१५॥

उपराग से (तमः के प्रभाव से) सत्त्वबहुल बुद्धि-तत्त्व के अधर्म-अज्ञान-अवैराग्य-अनैश्वर्य रूप चार धर्म होते हैं।

महत्तत्त्वं लक्षयित्वा तत्कार्यमहङ्कारं लक्षयति—

**अभिमानोऽहङ्कारः[3] ॥१६॥**

अहङ्करोतीत्यहङ्कारः कुम्भकारवत् अन्तःकरणद्रव्यम्, स च धर्मधर्म्यभेदादभिमान इत्युक्तोऽसाधारणवृत्तितासूचनाय। बुद्ध्या निश्चित एवार्थेऽहङ्कार-ममकारौ जायेते। अतो वृत्त्योः कार्यकारणभावानुसारेण वृत्तिमतोरपि कार्यकारणभाव उन्नीयत इति प्रागेवोक्तम्। अन्तःकरणमेकमेव बीजाङ्कुरमहावृक्षादिवदवस्थात्रयमात्रभेदात् कार्यकारणभावमापद्यत इति च प्रागेवोक्तम्। अत एव वायुमात्स्ययोः 'मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः' इति[4] मनोबुद्ध्योरेकपर्यायत्वमुक्तमिति ॥१६॥

अहंकार (अन्तःकरण का एक अंश) अभिमानधर्मक है (अभिमान = अहन्ता-ममता का भाव)।

क्रमागतमहङ्कारस्य कार्यमाह—

**एकादशपञ्चतन्मात्रं तत्कार्यम्[5] ॥१७॥**

एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्यमित्यर्थः। मयाऽनेनेन्द्रियेणेदं रूपादिकं भोक्तव्यमिदमेव सुखसाधनमित्याद्यभिमानादेवा-

---

१. कीदृशगुणपरिणामेन युक्तं सच् चित्तं धर्मादिषु मध्ये किं किमभिलषति, इति व्यासभाष्ये विवृतम् (१।२)।

२. पाठोऽयं भ्रष्टः; द्र० भूमिका।

३. अभिमानलक्षणोऽहंकार इति देवल आह।

४. वायु० ४।२५; मत्स्ये तु न दृश्यते। वचनमिदं स्मृतिवचनरूपेणोद्धृतं शारीरक-भाष्ये (१।४।१)

५. यत्कार्यम् (पाठा०)।

दिसर्गेष्विन्द्रिय-तद्विषयोत्पत्त्याऽहङ्कार इन्द्रियादिहेतुः। लोके भोगाभिमानिनैव रागद्वारा भोगोपकरणकरणदर्शनात्। रूपरागादभूच्चक्षुरित्यादिना[1] मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुराद्युत्पत्ति[2]स्मरणाच्चेति भावः। अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मकं मन एवादावहङ्कारादुत्पद्यत इति विशेषस्तन्मात्रादीनां रागकार्यत्वादिति ॥१७॥

पाँच ज्ञानेन्द्रियाँ, पाँच कर्मेन्द्रियाँ, एक मन ( ये ११ ) और पाँच तन्मात्र ( शब्द-स्पर्श-रूप-रस-गन्ध-तन्मात्र ) अहंकार तत्त्व के कार्य हैं।

तत्रापि विशेषमाह—

**सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् ॥१८॥**

एकादशानां पूरणमेकादशकं मनः षोडशात्मगणमध्ये सात्त्विकम्। अतस्तद्वैकृतात् सात्त्विकाहङ्काराज्जायत इत्यर्थः। अतश्च राजसाहङ्काराद्दशेन्द्रियाणि तामसाहङ्काराच्च तन्मात्राणीत्यवगन्तव्यम्।

वैकारिकास्तैजसश्च तामसश्चेत्यहं त्रिधा।
अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत्।
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः॥
तैजसानीन्द्रियाण्येव[4] ज्ञानकर्ममयानि च।
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः॥[3]

इत्यादिस्मृतिभ्य एव निर्णयात्। अतएव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम्—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्[5]॥

इति। तैजसो राजसः। उभयं ज्ञानकर्मेन्द्रिये। ननु देवतालयश्रुतिरित्यागामिसूत्रे[6] करणानां देवान् वक्ष्यति, तत् कथं कारिकयापि देवानां सात्त्विकाहङ्कारकार्यत्वं नोक्तमिति ? उच्यते—समष्टिचक्षुरादिशरीरिणः सूर्यादिचेतना एव चक्षुरादिदेवताः श्रूयन्ते। अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतेत्येव पर्यवस्यति। तथा च व्यष्टिसमष्ट्योरेकताशयेनात्र

१. शान्ति० २१३।१६
२. राद्योत्पत्ति (पाठा०)।
३. भागवतम् ३।५।३०–३१
४. तैजसादिन्द्रियाण्येवेति क्वचिद् भाष्ये पठ्यते।
५. पञ्चविंशी कारिका।
६. सांख्यसूत्रम् २।२१

शास्त्रे देवाः करणेभ्यो न पृथङ् निर्दिश्यन्ते। अतः समष्टीन्द्रियाणि मनोऽपेक्षयाऽल्पसत्त्वत्वेन राजसाहङ्कारकार्यत्वेनैव निर्दिष्टानि। स्मृतिषु च व्यष्टीन्द्रियापेक्षयाऽधिकसत्त्वत्वेन सात्त्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इति गन्तव्यम्। तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम्—'सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्'[1] इति स्मरणात्। त्रैविध्यं चानयोर्व्यक्तिभेदादंशभेदाद्वेत्यन्यदेतत् ॥१८॥

इसमें यह भी ज्ञातव्य है कि ११ इन्द्रियाँ सात्त्विक (सत्त्वबहुल; अन्य की तुलना में) हैं, जो वैकृत अहंकार से उत्पन्न होती हैं। वैकृताहंकार = सात्त्विक अहंकार; (गुणत्रय चूँकि जाति-व्यक्ति में है, अतः रजोबहुल अहंकार के त्रैगुणिकत्व-निबन्धन उसमें तीन भाग कल्पित किए जा सकते हैं)।

एकादशेन्द्रियाणि दर्शयति—

**कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥१९॥**

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च। एतैर्दशभिः सहान्तरं मन एकादशकमेकादशेन्द्रियमित्यर्थः। इन्द्रस्य सङ्घातेश्वरस्य करणमिन्द्रियम्। तथा चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति ॥१९॥

पूर्व सूत्र में जो 'एकादश' शब्द है, उसका अर्थ है—५ कर्मेन्द्रियाँ, ५ बुद्धीन्द्रियाँ और १ आन्तर इन्द्रिय मन। इन्द्र-नामक क्षेत्रज्ञ आत्मा का करण है, अतः ये तत्त्व इन्द्रिय कहलाते हैं।

इन्द्रियाणां भौतिकत्वमतं निराकरोति—

**आहङ्कारिकत्वश्रुतेर्न भौतिकानि ॥२०॥**

इन्द्रियाणीति शेषः। आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः काललुप्ताप्याचार्यवाक्यान्मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते[2]। प्रत्यक्षा श्रुतिरहं बहु स्यामित्यादिः[3]। नन्वन्नमयं हि सोम्य मन इत्यादिर्भौतिकत्वेऽपि श्रुतिरस्तीति

---

१. मार्क० ४५।३८; लक्ष्मीसंहितायामुक्तं यत् बुद्धि-प्राण-कालरूपेण त्रिविधो महानिति (६।२-४)। अहिर्बुध्न्यसंहितायामपि पठ्यते—महान् नाम महत्तत्त्वम् अव्यक्तादुदितं मुने।...कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते (७।८-९)।

२. अत्र भारतवचनं दृश्यताम्—एकादश च तान्याहुरिन्द्रियाणि विशेषतः। अहंकारात् प्रसूतानि तानि वक्ष्याम्यहं द्विजाः (अश्व० ४२।१२)

३. तु० छान्दोग्य० ६।२।३; तै० उप० २।६

चेन्न; प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाऽहङ्कारिकत्वश्रुतेरेव मुख्यत्वात्। भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयाऽन्नस्य मनोजन्यत्वाच्च। व्यष्टिमन आदीनां भूतसंसृष्टतयैव तिष्ठतां भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकश्रुतिर्गौणीति ॥२०॥

ये इन्द्रियाँ भूतनिर्मित नहीं हैं, बल्कि आहंकारिक हैं, क्योंकि श्रुति में ऐसा कहा गया है। आहंकारिक = अहंकाररूप उपादान का विकार (यही कारण है कि चित्त के रोध करने से इन्द्रियाँ भी रुद्ध हो जाती हैं)।

ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटतेऽ'स्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि'त्यादि[1]श्रुतौ देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात् कारण एव हि कार्यस्य लय इत्याशङ्क्याह—

देवतालयश्रुतिर्नारम्भकस्य ॥२१॥

देवतासु या लयश्रुतिः सा नारम्भकस्य नारम्भकविषयिणीत्यर्थः। अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात्। अनारम्भकेष्वपि भूतेष्वात्मनो लयश्रवणाच्च। 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यतीत्यादिश्रुता[2]विति भावः ॥२१॥

श्रुति में कहा गया है कि इन्द्रियों का लय तत्तद् अधिष्ठात्री देवता में होता है, अतः इन्द्रियों का उपादान अहंकार (षष्ठ अविशेष रूप अस्मिता) नहीं है— ऐसा नहीं कहा जा सकता, क्योंकि ऐसा वचन कारण में लय के प्रतिपादन के लिये नहीं कहा गया।

इन्द्रियान्तर्गतं मनो नित्यमिति केचित्, तत् परिहरति—

तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ॥२२॥

तेषां सर्वेषामेवेन्द्रियाणामुत्पत्तिरस्ति—एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च[3]—इत्यादिश्रुतेः। वृद्धाद्यवस्थासु चक्षुरादीनामिव मनसोऽप्यपचयादिना विनाशनिर्णयाच्चेत्यर्थः। तथा चोक्तम्—'दशकेन निवर्तन्ते मनः सर्वेन्द्रियाणि च'[4] इति। मनसो नित्यत्ववचनानि च प्रकृत्याख्यबीजपराणीति ॥२२॥

---

१. बृहदा० ३।२।१३
२. बृहदा० २।४।१२
३. मुण्डक २।१।३
४. द्र० भूमिका।

श्रुति में इन्द्रिय और मन की उत्पत्ति कही गई है; किंच इन्द्रियादि का विनाश भी देखा जाता है।

गोलकजातमेवेन्द्रियमिति नास्तिकमतमपाकरोति—

**अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठानम्[1] ॥२३॥**

इन्द्रियं सर्वमतीन्द्रियं न तु प्रत्यक्षं भ्रान्तानामेव त्वधिष्ठाने गोलके तादात्म्येनेन्द्रियमित्यर्थः। अधिष्ठानमित्येव पाठः ॥२३॥

वस्तुतः इन्द्रिय अतीन्द्रिय (=इन्द्रिय द्वारा साक्षात्करणीय नहीं) है (सांख्यानुसार अहंकार का व्यूहविशेष इन्द्रिय है, यह व्यूह तान्मात्रिक क्रिया के संपर्क से अन्तःकरण में ही उद्भूत होता है)। इन्द्रिय के अधिष्ठान (शरीरावयवविशेष) को अज्ञ ही इन्द्रिय समझते हैं। (वस्तुतः इन्द्रियाँ आध्यात्मिक हैं)।

एकमेवेन्द्रियं शक्तिभेदाद्विलक्षणकार्यकारीति मतमपाकरोति—

**शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम्[2] ॥२४॥**

एकस्यैवेन्द्रियस्य शक्तिभेदस्वीकारेऽपीन्द्रियभेदः सिद्धयति शक्तीनामपीन्द्रियत्वात्। अतो नैकत्वमिन्द्रियस्येत्यर्थः ॥२४॥

ऐसी शंका नहीं की जा सकती कि एक ही इन्द्रिय है, जो शक्तिभेद से विलक्षण कार्य करती है, क्योंकि शक्तभेद से शक्तिमान् में स्वगतभेद सिद्ध हो जाता है। (इन्द्रियोपादानभूत षष्ठ अविशेष अस्मिता को लक्ष्य कर 'एक इन्द्रिय' कहा जा सकता है, पर व्यवहारतः अधिष्ठानानुसार कार्यवैलक्षण्य की दृष्टि से इन्द्रियों का पार्थक्य मानना ही होगा, यद्यपि इन्द्रियोपादानदृष्टि से एकेन्द्रियवाद संगत होता है)। [द्र० भूमिका]।

---

१. क्वचित् कोशे अधिष्ठाने इति पठ्यते। भाष्यगतम् अधिष्ठाने इति सप्तम्यन्तं पदं दृष्ट्वा कैश्चित् भ्रान्त्या पाठोऽयं कल्पित इति प्रतिभाति।

२. अत्रेदं विज्ञेयं यद् यथा यथा इन्द्रियोपादनाधिगमो भवति तथा तथा इन्द्रियपार्थक्यबोधोऽपगच्छति, अतएव साधनोत्कर्षक्रमानुसारेण इन्द्रियसंख्यानिर्धारणे मतभेदो भवति, न एवंविधेषु मतभेदेषु मतविरोधः कल्पनीयः। इन्द्रियोपादानभूता षष्ठाविशेषरूपाऽस्मिता यदाऽधिगता भवति तदा एकमेव बाह्यमिन्द्रियमिति बोध योगिचित्ते उदेति, स तथैव व्यवहरति च। अन्तःकरणोपादानेऽधिगते अन्तःकरणत्रयस्थले अन्तःकरणैक्यबोधो जायते। रहस्यमिदमज्ञात्वा शंकराचार्यो बभाषे—परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः, क्वचित् सप्तेन्द्रियाण्यनुक्रामन्ति क्वचिदेकादश तथा क्वचित् त्रीणि अन्तःकरणानि वर्णयन्ति क्वचिदेकमिति (शारीरकं भाष्यम् २।२।१०)। कथनमिदं निःसारमिति।

नन्वेकस्मादहङ्कारान्नानाविधेन्द्रियोत्पत्तिकल्पनायां न्यायविरोधस्तत्राह–

**न कल्पनाविरोधः प्रमाणदृष्टस्य ॥२५॥**

सुगमम् ॥२५॥

एक अहंकार से अनेक इन्द्रियों की उत्पत्ति जब प्रत्यक्ष प्रमाण से अवधारित होती है ( समाधिज साक्षात्कार के बल पर ) तब कल्पनाप्रभव तर्क से इन्द्रियबहुत्व का विरोध नहीं किया जा सकता है।

एकस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदाः, इत्याह—

**उभयात्मकं मनः ॥२६॥**

ज्ञानकर्मेन्द्रियात्मकं मन इत्यर्थः ॥२६॥

मन ज्ञानेन्द्रिय-कर्मेन्द्रियात्मक है ( मन दोनों प्रकार की इन्द्रियों का अधीश है; अधीशता = संकल्पपूर्वक चालन करने की शक्ति )।

उभयात्मकमित्यस्यार्थं स्वयं विवृणोति—

**गुणपरिणामभेदान्नानात्वमवस्थावत् ॥२७॥**

यथैक एव नरः सङ्गवशान्नानात्वं भजते कामिनीसङ्गात् कामुको विरक्तसङ्गाद्विरक्तोऽन्यसङ्गाच्चान्य एवं मनोऽपि चक्षुरादिसङ्गाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति। तत्र हेतुर्गुणेत्यादि—गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः। एतच्चा'न्यत्रमना अभूवं नाश्रौषमि'त्यादि'[1]श्रुतिसिद्धाच्चक्षुरादीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते ॥२७॥

दर्शन-स्पर्शन आदि विभिन्न वृत्तियों के अनुसार मन अनुरंजित होता है ( मन का नानात्व अनुभूत होता है ), इसका कारण गुणपरिणामभेद ( सत्त्वादिगुण के विभिन्न भेदों के अनुसार परिणाम प्राप्त होना ) है [द्र० भूमिका]।

ज्ञानकर्मेन्द्रिययोर्विषयमाह—

**[2]रूपादिरसमलान्त उभयोः ॥२८॥**

---

१. बृहदा० १।५।३

२. ज्ञानेन्द्रियविषयविवरणे रूपशब्द आदौ उपात्तो देवलेन—रूपशब्दगन्धरसस्पर्शास्तेषामर्था इति।

अन्नरसानां मलः पुरीषादिः। तथा रूपरसगन्धस्पर्शशब्दा वक्तव्यादातव्य-गन्तव्यानन्दयितव्योत्स्रष्टव्याश्चोभयोर्ज्ञानकर्मेन्द्रिययोर्दश विषया इत्यर्थः। आनन्दयितव्यं चोपस्थस्योपस्थान्तरम्, उपस्थस्य हि उपस्थान्तरं विषय इति[1] ॥२८॥

चक्षु-वाक् आदि ज्ञान-कर्मेन्द्रियों के विषय रूप से मलोत्सर्गपर्यन्त हैं, यथा—चक्षुः का रूप, त्वक् का स्पर्श, श्रोत्र का शब्द, जिह्वा का रस, नासा का गन्ध, वाक् का ध्वन्युत्पादन, पाणि का शिल्प (बाह्य द्रव्य का यथेच्छ स्थापन), पाद का गमनागमन, पायु का मलोत्सर्ग एवं उपस्थका प्रजनन [ भूमिका में विषयों के परिचय आदि द्र० ]।

यस्येन्द्रियस्य येनोपकारेणैतानीन्द्रियाणीत्युच्यते तदुभयमाह—

द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥२९॥

द्रष्टृत्वादिपञ्चकं वक्तृत्वादिपञ्चकं सङ्कल्पयितृत्वं चात्मनः पुरुषस्य, दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः।

ननु द्रष्टृत्वश्रोतृत्वादिकं कदाचिदनुभवे पर्यवसानात् पुरुषस्याविकारिणोऽपि घटताम्, वक्तृत्वादिकं क्रियामात्रं तत् कथं कूटस्थस्य घटतामिति चेन्न; अयस्कान्तवत् सान्निध्यमात्रेण दर्शनादिवृत्तिकर्तृत्वस्यैवात्र द्रष्टृत्वादिशब्दार्थत्वात्। यथा हि महाराजः स्वयमव्याप्रियमाणोऽपि सैन्येन करणेन योद्धा भवत्याज्ञामात्रेण प्रेरकत्वात् तथा कूटस्थोऽपि पुरुषश्चक्षुराद्यखिलकरणैर्द्रष्टा वक्ता सङ्कल्पयिता चेत्येवमादिर्भवति, संयोगाख्यसान्निध्यमात्रेणैव तेषां प्रेरकत्वादयस्कान्तमणिवदिति। कर्तृत्वं चात्र कारकचक्रप्रयोक्तृत्वं करणत्वं क्रियाहेतुव्यापारवत्त्वं तत्साधकतमत्वं वा कुठारादिवत्। यत् तु शास्त्रेषु पुरुषे दर्शनादिकर्तृत्वं निषिध्यते तदनुकूलकृतिमत्त्वं तत्तत्क्रियावत्त्वं वा। तथा चोक्तम्—

---

१. उपस्थकार्यविषये शास्त्रीयो निर्देशोऽस्पष्टार्थक इति स विशदीक्रियते। उपस्थस्य विषय आनन्द इति कथनमसमीचीनम्; आनन्दो न कार्यरूपः, बोधविशेषः सः, अतः कर्मेन्द्रियस्य विषयः स न भवितुमर्हति। अत्युपस्थक्रियया पीडाबोधोऽपि जायते, अतो नानन्द उपस्थस्य विषयः। प्रसव-बीजसेकौ उपस्थविषयौ, प्रजननं वोपस्थकार्यमिति। बहुलसाहचर्यादानन्दो विषयत्वेनोक्तः। अतएव 'प्रजननानन्दयोः शेफः' (शान्ति० २१९।२१) इत्यादीनि वचांसि शास्त्रेषूक्तानि। क्वचिद् विसर्ग उपस्थकार्यमित्युच्यते। प्रजननहेतुभूतो विसर्ग एवात्राभिप्रेतः; मलमूत्रयोरुत्सर्गः पायुविषय इति। विषयोऽयं सांख्यविद्यानाम्नि ग्रन्थे विस्तरेणोपपादितः।

अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
निरिच्छत्वादकर्तासौ कर्ता सन्निधिमात्रतः ॥[१] इति ॥

अत एव कारकचक्रप्रयोक्तृताशक्तेरात्मस्वरूपतया द्रष्टृत्ववक्तृत्वादिकमात्मनो नित्यमिति श्रूयते—न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते[२], न हि वक्तुर्वक्तेर्विपरिलोपो विद्यत[३] इत्यादिनेति । ननु प्रमाणविभागे प्रत्यक्षादिवृत्तीनामेव करणत्वमुक्तमत्र कथमिन्द्रियस्योच्यत इति चेन्न; अत्र दर्शनादिरूपासु चक्षुरादिद्वारकबुद्धिवृत्तिष्वेवेन्द्रियाणां करणत्ववचनात् । तत्र पुरुषनिष्ठे बोधाख्यफले वृत्तीनां करणत्वस्योक्तत्वादिति ॥२९॥

द्रष्टृत्व, श्रोतृत्व आदि आत्माधिष्ठानहेतुक हैं और वृत्तियों में इन्द्रियों का करणत्व है ।

इदानीमन्तःकरणत्रयस्यासाधारणवृत्तीराह—

**त्रयाणां स्वालक्षण्यम् ॥३०॥**

त्रयाणां महदहङ्कारमनसां स्वालक्षण्यं स्वं स्वं लक्षणमसाधारणी वृत्तिर्येषामिति मध्यमपदलोपो विग्रहस्तस्य भावस्तत्त्वमित्यर्थः । लोके च महतो लक्षणमध्यवसायादिप्रकृष्टगुणवत्त्वम् । अहङ्कृतस्य चात्मन्यविद्यमानगुणारोपः, मनसश्चेदमस्त्वित्यङ्गीकरणमिति । तथा च बुद्धेर्वृत्तिरध्यवसायोऽभिमानोऽहङ्कारस्य सङ्कल्पविकल्पौ मनस इत्यायातम्[४] । सङ्कल्पश्चिकीर्षा, 'सङ्कल्पः कर्म मानसमि'त्यनुशासनात्[५] । विकल्पश्च संशयो योगोक्तभ्रमविशेषो[६] वा, न तु विशिष्टज्ञानं तस्य बुद्धिवृत्तित्वादिति ॥३०॥

बुद्धि ( महत् ), अहंकार और मन की असाधारण वृत्तियाँ पृथक्-पृथक् हैं, यथा—बुद्धि का अध्यवसाय ( अधिकृत विषयों का प्राकाश्यपर्यवसान ), अहंकार का अभिमान ( अहन्ता-ममता-रूप ), मन का संकल्प ( कोई-कोई संकल्प-विकल्प भी कहते हैं [ द्र० भूमिका ] ।

त्रयाणां साधारणीं वृत्तिमप्याह—

**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥३१॥**

---

१. योगवासिष्ठः ४।५६।३१; महोपनिषद् ४।१४
२. बृहदा० ४।३।२३
३. बृहदा० ४।३।२६
४. मनोबुद्ध्यादिलक्षणविषये द्र० शान्ति० २४७ अ;० २४८ अ०; २१० अ०; ३११ अ०; २५२ अ० ।
५. अमरकोश १।४।११
६. शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति योगसूत्रं द्रष्टव्यम् (१।९) ।

प्राणादिरूपाः पञ्च वायुवत् सञ्चारात् वायवो ये प्रसिद्धास्ते सामान्या साधारणी करणस्यान्तःकरणत्रयस्य वृत्तिः परिणामभेदा इत्यर्थः। तदेतत् कारिकयोक्तम्—

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च[1] ॥ इति ॥

अत्र कश्चित्—प्राणाद्या वायुविशेषा एव, ते चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया व्याप्रियन्त इति कृत्वा प्राणाद्याः करणवृत्तिरित्यभेदनिर्देश इत्याह[2], तन्न; न वायुक्रिये पृथगुपदेशादिति वेदान्तसूत्रेण[3] प्राणस्य वायुत्ववायुपरिणामत्वयोः स्फुटं प्रतिषेधादत्रापि तदेकवाक्यतौचित्यात्। मनोधर्मस्य कामादेः प्राणक्षोभकतया सामानाधिकरण्येनैवौचित्याच्च। वायुप्राणयोः पृथगुपदेशश्रुतयस्तु—

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी[4] ॥

इत्याद्या इति। अत एव लिङ्गशरीमध्ये[5] प्राणानामगणनेऽपि न न्यूनता बुद्धेरेव क्रियाशक्त्या सूत्रात्मप्राणादिनामकत्वादिति। अन्तःकरणपरिणामेऽपि वायुतुल्यसञ्चारविशेषाद्वायुदेवताधिष्ठितत्वाच्च वायुव्यवहारोपपत्तिरिति ॥३१॥

प्राण, अपान, समान, उदान और व्यान नामक पाँच वायु ( वायुवत् संचरणशील, पर ये भी ज्ञानेन्द्रिय-कर्मेन्द्रिय की तरह अध्यात्मभूत हैं, जिनका विषय है—शरीरधारण ) अन्तःकरणत्रय की सामान्यवृत्ति हैं [द्र० भूमिका]।

वैशेषिकाणामिवास्माकं नायं नियमो यदिन्द्रियवृत्तिः क्रमेणैव भवति नैकदेत्याह—

---

१. एकोनत्रिंशी कारिका।

२. अत्र भिक्षुर्वृत्तिमतं तत्त्वकौमुदीमतं वा लक्षयति। तथाहि—एतत्सूत्रव्याख्याने अनिरुद्ध आह—पञ्च प्राणाद्या वायवः त्रिभिः करणैर्धार्यन्ते इति। वाचस्पतिराह सामान्या चासौ करणवृत्तिश्चेति त्रयाणामपि करणानां पञ्च वायवो जीवनं वृत्तिः तद्भावे भावात् तदभावे चाभावाद् इति।

३. ब्रह्मसूत्रम् २।४।९

४. मुण्डक २।१।३; पृथ्वीति पाठोऽशुद्धः।

५. एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश इत्याह भिक्षुः—'सप्तदशैकं लिङ्गम्' इति सूत्रे (३।९)।

क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः[1] ॥३२॥

सुगमम्। जातिसाङ्कर्यस्यास्माकमदोषत्वात् सामग्रीसमवधाने सत्यनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीति भावः। इन्द्रियवृत्तीनां विभागश्च कारिकया व्याख्यातः—

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्[2] ॥

आलोचनं च पूर्वाचार्यैर्व्याख्यातम्—

अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।
परं पुनस्तथा वस्तु धर्मैर्जात्यादिभिस्तथा[3] ॥

इति। परमुत्तरकालीनं च पुनर्वस्तुधर्मैर्द्रव्यरूपधर्मैस्तथा जात्यादिभिर्ज्ञानं सविकल्पकं तथाऽलोचनाख्यं भवतीत्यर्थः। तथा च निर्विकल्पकसविकल्पकरूपं द्विविधमप्यैन्द्रियकं ज्ञानमालोचनसंज्ञमिति लब्धम्।

कश्चित् तु निर्विकल्पकं ज्ञानमेवालोचनमिन्द्रियजन्यं च भवति, सविकल्पकं तु मनोमात्रजन्यमिति श्लोकार्थमाह; तन्न—योगभाष्ये[4] व्यासदेवैर्विशिष्टज्ञानस्याप्यैन्द्रियकत्वस्य व्यवस्थापितत्वात्, इन्द्रियैर्विशिष्टज्ञाने बाधकाभावाच्च। स[5] एव सूत्रार्थमप्येवं व्याचष्टे—बाह्येन्द्रियमारभ्य बुद्धिपर्यन्तस्य वृत्तिरुत्सर्गतः क्रमेण भवति कदाचित् तु व्याघ्रादिदर्शनकाले भयविशेषाद्विद्युल्लतेव सर्वकरणेष्वेकदैव वृत्तिर्भवतीत्यर्थ इति। तदप्यसत्—सूत्र इन्द्रियवृत्तीनामेव क्रमिकाक्रमिकत्ववचनात्, न बुद्ध्यहङ्कारवृत्त्योः प्रसङ्गोऽप्यस्ति।

---

१. विषयग्रहणप्रक्रिया भारते इत्थमुक्ता—पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान् पृथक्। विचार्य मनसा पश्चादथ बुद्ध्या व्यवस्यति। इन्द्रियैरुपलब्धार्थान् बुद्धिमांस्तु व्यवस्यति (शान्ति० २७४।१७)।

२. अष्टाविंशी कारिका।

३. अस्याकरस्थलं न गार्बेसंस्करणे निर्दिष्टम्। प्रत्यक्षसूत्रीयश्लोकवार्त्तिके दृश्यते—'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्। ११२। ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया। १२०।' आलोचनज्ञानं शान्तिपर्वणि निर्दिष्टम् (२४७।१८)।

४. प्रत्यक्षप्रमाणव्याख्यायां व्यासभाष्ये उक्तम्—इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् (१।७)।

५. सः=अनिरुद्धः। भाष्ये वृत्तितात्पर्यमेवोक्तम्। २।३२ सूत्रव्याख्याने अनिरुद्ध आहः……क्रमशश्च मन्दालोके चौरं दृष्ट्वा……विद्युदालोके व्याघ्रं दृष्ट्वा झटित्यपसरति।

किञ्चैकदाऽनेकेन्द्रियवृत्तावेव वादिविप्रतिपत्त्या तन्निर्णयपरत्वमेव सूत्रस्योचितं मनोऽणुत्वप्रतिषेधाय, न तु काकदन्तान्वेषणपरत्वमिति ॥३२॥

इन्द्रियों की वृत्ति क्रमशः भी होती है, युगपद् भी। [ द्र० भूमिका ]

पिण्डीकृत्य बुद्धिवृत्तीः संसारनिदानताप्रतिपादनार्थमादौ दर्शयति—

**वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥३३॥**

क्लिष्टा अक्लिष्टा वा भवन्तु वृत्तयः पञ्चतय्यः पञ्चप्रकारा एव नाधिका इत्यर्थः। क्लिष्टा दुःखदाः सांसारिकवृत्तयोऽक्लिष्टाश्च तद्विपरीता योगकालीनवृत्तयः। वृत्तीनां पञ्चप्रकारत्वं पातञ्जलसूत्रेणोक्तम्—प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति[1]। तत्र प्रमाणवृत्तिरत्राप्युक्ता। विपर्ययस्त्वस्माकं विवेकाग्रह एवान्यथाख्यातेर्निरास्यत्वात्। विकल्पस्तु विशेषदर्शनकालेऽपि राहोः शिरः, पुरुषस्य चैतन्यमित्यादिज्ञानम्। निद्रा च सुषुप्तिकालीना बुद्धिवृत्तिः। स्मृतिश्च संस्कारजन्यं ज्ञानमिति। एतत् सर्वं पातञ्जले[2] सूत्रितम् ॥३३॥

ये वृत्तियाँ पाँच प्रकार की हैं; प्रत्येक वृत्ति क्लिष्ट-अक्लिष्ट-भेद से द्विविध है ( क्लिष्ट =अनात्मज्ञान-प्रधान, जिससे क्लेशसन्तति बढ़ती है; अक्लिष्ट=आत्मख्यातिप्रधान, जिससे क्लेशादि क्षीण होते रहते हैं )।

या एता बुद्धिवृत्तय उक्ता एतदौपाधिकयेव पुरुषस्यान्यरूपता न स्वतः, एतन्निवृत्तौ च पुरुषः स्वरूपेऽवस्थितो भवतीत्यनयाऽपि दिशा पुरुषस्य स्वरूपं परिचाययति—

**तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥३४॥**

तासां वृत्तीनां विरामदशायां शान्ततत्प्रतिबिम्बकः स्वस्थो भवति कैवल्य इवान्यदापीत्यर्थः। तथा च योगसूत्रत्रयम्—योगश्चित्तवृत्तिनिरोधः, तदा द्रष्टुः स्वरूपेऽवस्थानम्, वृत्तिसारूप्यमितरत्रेति[3]। इदमेव च पुरुषस्य स्वस्थत्वं यदुपाधिवृत्तेः प्रतिबिम्बस्य निवृत्तिरिति। एतादृशी चावस्था पुरुषस्य वासिष्ठे दृष्टान्तेन प्रदर्शिता। यथा—

अनाप्ताखिलशैलादिप्रतिबिम्बे हि यादृशी।
स्याद्दर्पणे दर्पणता केवलात्मस्वरूपिणी॥

---

१. १।६ सूत्रम्।

२. द्र० १।७-११ सूत्राणि सभाष्याणि।

३. १।२-४ सूत्राणि।

अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ।
स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे[१] ।। इति ।।३४।।

वृत्तियों के निरोध से आत्मा का विषयोपराग नष्ट हो जाता है जिससे आत्मा का स्वरूपावस्थान होता है ।

एतदेव दृष्टान्तेन विवृणोति—

**कुसुमवच्च मणिः ।।३५।।**

चकारो हेतौ कुसुमेनेव मणिरित्यर्थः । यथा जपाकुसुमेन स्फटिकमणी रक्तोऽस्वस्थो भवति तन्निवृत्तौ च रागशून्यः स्वस्थो भवति तद्वदिति । तदेतदुक्तं कौर्मे—

यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः ।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः[२] ।। इति ।।३५।।

आत्मा की औपचारिक (अवास्तव) स्वस्थता-अस्वस्थता में मणि उपमा है । जिस प्रकार जपापुष्प के सान्निध्य से मणि रक्तवर्ण हो जाता है और जपा पुष्प के न रहने से राग-शून्य हो जाता है, उसी प्रकार चित्तवृत्ति की व्यक्तता में द्रष्टा आत्मा का वृत्तिसारूप्य प्रतीत होता है और चित्त लीन होने पर द्रष्टा का स्वरूपावस्थान होता है [ वस्तुतः उभय अवस्था में द्रष्टा (आत्मा) एकरूप ही रहता है ] ।

ननु कस्य प्रयत्नेन करणजातं प्रवर्त्ततां पुरुषस्य कूटस्थत्वादीश्वरस्य च प्रतिषिद्धत्वादिति, तत्राह—

**पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ।।३६।।**

प्रधानप्रवृत्तिवत् पुरुषार्थं करणोद्भवः करणानां प्रवृत्तिरपि पुरुषस्यादृष्टाभिव्यक्तेरेव भवतीत्यर्थः । अदृष्टं चोपाधेरेव ।।३६।।

जिस प्रकार प्रधान की प्रवृत्ति पुरुष के लिये है (भोगापवर्गसिद्धि-सम्पादनार्थ), उसी प्रकार करणों की प्रवृत्ति भी पुरुषार्थ है । पुरुष के अदृष्ट ( चैत्तिक धर्माधर्म-संस्कार, क्लेशमूल कर्माशय ) के अनुसार यह करणप्रवृत्ति प्रवर्तित होती है [ द्र० भूमिका ] ।

परार्थं स्वतः प्रवृत्तौ दृष्टान्तमाह—

---

१. योगवा० ३।४।५७-५८

२. कूर्म० २।२।२८ ख–२९ क (पुराणपाठे क्वचित् भ्रष्टताऽवलोक्यते) । १।१९ भाष्यमपि द्र० ।

**धेनुवद्वत्साय[1] ॥३७॥**

यथा वत्सार्थं धेनुः स्वयमेव क्षीरं स्रवति नान्यं यत्नमपेक्षते तथैव स्वामिनः पुरुषस्य कृते स्वयमेव करणानि प्रवर्त्तन्त इत्यर्थः। दृश्यते च सुषुप्तात् स्वयमेव बुद्धेरुत्थानमिति। एतदेव कारिकयाऽप्युक्तम्—

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम्[2] ॥ इति ॥३७॥

जड़ अचेतन प्रकृति की इस इच्छाशून्य प्रवृत्ति ( परिणामविशेष ) में धेनु (गौ) उपमा है; जिस प्रकार वत्स के लिये धेनु की अनिच्छापूर्वक प्रवृत्ति होती है, ( धेनु से दूध का क्षरण होता है ) उसी प्रकार जड प्रकृति भी स्वतः परिणत होकर पुरुषार्थसिद्धि में प्रवृत्त होती है।

बाह्याभ्यन्तरैर्मिलित्वा कियन्ति करणानीत्याकाङ्क्षायामाह—

**करणं त्रयोदशविधमवान्तरभेदात्[3] ॥३८॥**

अन्तःकरणत्रयं दश बाह्यकरणानि मिलित्वा त्रयोदश; तेष्वपि व्यक्तिभेदेनानन्त्यं प्रतिपादयितुं विधमित्युक्तम्। बुद्धिरेव मुख्यं करणमित्याशयेनोक्तमवान्तरभेदादिति। एकस्यैव बुद्ध्याख्यकरणस्य करणानामनेकत्वादित्यर्थः ॥३८॥

अवान्तर भेदों की गणना करने पर करण तेरह होते हैं ( ५ ज्ञानेन्द्रिय + ५ कर्मेन्द्रिय + मन + अहंकार + बुद्धि )।

ननु बुद्धिरेव पुरुषेऽर्थसमर्पकत्वान् मुख्यं करणमन्येषां च करणत्वं गौणं तत्र को गुण इत्याकाङ्क्षायामाह—

**इन्द्रियेषु साधकतमत्वगुणयोगात् कुठारवत् ॥३९॥**

---

१. सुश्रुतो दृष्टान्तमेतं प्रादर्शयत्—सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्याय प्रवृत्तिमुपदिशन्ति क्षीरादींश्चात्र हेतूनुदाहरन्ति (शारीरस्थान अ० १)। अहिर्बुध्न्यसंहितायामपि दृश्यते—पयो मृदादिवत् तत्र प्रकृतिः परिणामिनी (७।५)। अनया उपमया प्रधानस्य इच्छापूर्तिका प्रवृत्तिः निरस्ता, जडानां स्व-स्वभावेनैव परिणाम इत्यनया-प्रदर्श्यते। इदं प्रवर्तनं चिदधिष्ठतस्य प्रधानस्यैवेति।

२. एकत्रिंशी कारिका।

३. त्रयोदश करणानीति देवल आह। अस्य विशदीकरणमपि तेनैव कृतम्—दशेन्द्रियाणि बुद्ध्यहंकारमनांसि च करणानि। तेषु मनो बुद्ध्यहंकाराश्च अन्तःकरणानि, दश बहिष्करणानीन्द्रियाणि (द्र० याज्ञ० प्रायश्चित्त० १०९ श्लोकगतापरार्कटीका)।

इन्द्रियेषु पुरुषार्थसाधकतमत्वरूपः करणस्य बुद्धेर्गुणः परम्परयास्त्यत-स्त्रयोदशविधं करणमुपपद्यत इति पूर्वसूत्रेणान्वयः। कुठारवदिति यथा फला-योगव्यवच्छिन्नतया प्रहारस्यैव छिदायां मुख्यकरणत्वेऽपि प्रकृष्टसाधनत्वगुण-योगात् कुठारस्यापि करणत्वं तथेत्यर्थः। अन्तःकरणस्यैकत्वमभिप्रेत्याहङ्कारस्य गौणकरणत्वमत्र नोक्तम् ॥३९॥

यद्यपि पुरुषार्थसिद्धि में वास्तव करण बुद्धि ही है, तथापि बुद्धि का अध्यवसाय-गुण अन्यान्य इन्द्रियों में भी अल्पाधिक मात्रा में है, अतः प्रत्येक इन्द्रिय 'करण' है। वृक्षछेदन क्रिया में मुख्य करणत्व प्रहार का ही है, पर गौणरूप से कुठार को भी करण कहा जाता है—यह दृष्टिकोण प्रस्तुत स्थल में भी समझना चाहिए।

गौणमुख्यभावे व्यवस्थां विशिष्याह—

**द्वयोः प्रधानं मनो लोकवद् भृत्यवर्गेषु ॥४०॥**

द्वयोर्बाह्यान्तरयोर्मध्ये मनो बुद्धिरेव प्रधानं[1] मुख्यम्, साक्षात्करणमिति यावत्, पुरुषेऽर्थसमर्पकत्वात्। यथा भृत्यवर्गेषु मध्ये कश्चिदेव लोको राज्ञः प्रधानो भवत्यन्ये च तदुपसर्जनीभूता ग्रामाध्यक्षादयस्तद्वदित्यर्थः। अत्र मनःशब्दो न तृतीयान्तःकरणवाची। वक्ष्यमाणस्याखिलसंस्काराधारत्वस्य बुद्ध्यतिरिक्तेष्वसम्भवात्, सम्भवे वा बुद्धिकल्पनवैयर्थ्यादिति ॥४०॥

जिस प्रकार लोक में देखा जाता है कि अनेक भृत्यों में कोई एक प्रधान होता है, उसी प्रकार बाह्येन्द्रिय (ज्ञान-कर्मेन्द्रिय) और अन्तरिन्द्रिय में मन (=बुद्धि—भिक्षुमत) प्रधान है।

बुद्धेः प्रधानत्वे हेतूनाह त्रिभिः सूत्रैः—

**अव्यभिचारात् ॥४१॥**

सर्वकरणव्यापकत्वात् फलाव्यभिचाराद्वेत्यर्थः ॥४१॥

'अव्यभिचार' होने के कारण बुद्धि प्रधान है। बुद्धि का अध्यवसायधर्म सभी करणों में अनुस्यूत है तथा बुद्धि में ही सर्वकरणव्यापार का प्राकाश्यपर्यवसान होता है—यही उसकी अव्यभिचारिता है।

**तथाऽशेषसंस्काराधारत्वात् ॥४२॥**

---

1. मनःपदेन बुद्धिरप्युच्यते—मनो महान् मतिर्ब्रह्मा धी बुद्धिः ख्यातिरीश्वर इति पुराणवचनात्, इति प्रागेवोक्तम्। अत्र महदाख्यमाद्यं कार्यं तन्मन इति सांख्य-सूत्रम् (१।७१) आलोच्यम्।

बुद्धेरेवाखिलसंस्काराधारता न तु चक्षुरादेरहङ्कारमनसोर्वा पूर्वदृष्टश्रुताद्यर्थानामन्धबधिरादिभिः स्मरणानुपपत्तेः, तत्त्वज्ञानेनाहङ्कारमनसोर्लयेऽपि स्मरणदर्शनाच्च। अतोऽशेषसंस्काराधारतयापि बुद्धेरेव सर्वेभ्यः प्रधानत्वमित्यर्थः ॥४२॥

बुद्धि में सभी संस्कार पूर्णतः आधृत रहते हैं, इसलिये भी बुद्धि सर्वप्रधान है।

**स्मृत्याऽनुमानाच्च ॥४३॥**

स्मृत्या चिन्तनरूपया वृत्त्या प्राधान्यानुमानाच्चेत्यर्थः। चिन्तावृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा, तदाश्रयतया च चिन्तापरनाम्नी बुद्धिरेव श्रेष्ठाऽन्यवृत्तिकरणेभ्य इत्यर्थः ॥४३॥

सर्ववृत्तिश्रेष्ठ चिन्तनरूप स्मृति ( ध्यान की प्रथमावस्था ) बुद्धिप्रतिष्ठ है, इससे भी बुद्धि का सर्वप्राधान्य अनुमित होता है।

ननु चिन्तावृत्तिः पुरुषस्यैवास्तु, तत्राह—

**सम्भवेन्न स्वतः ॥४४॥**

स्वतः पुरुषस्य स्मृतिर्न सम्भवेत् कूटस्थत्वादित्यर्थः। इत्थं वा व्याख्येयम्—नन्वेवं बुद्धिरेव करणमस्तु कृतमवान्तरकरणैरित्याशङ्कायामाह—'सम्भवेन्न स्वत' इति। चक्षुरादिद्वारतां विनाऽखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न सम्भवेदन्धादेरपि रूपादिदर्शनापत्तेरित्यर्थः ॥४४॥

पूर्वोक्त स्मृति पुरुषधर्म नहीं हो सकती, क्योंकि आत्मा निर्गुण-निधर्मक है।

नन्वेवं बुद्धेरेव प्राधान्ये कथं मनस उभयात्मकत्वं प्रागुक्तम्, तत्राह—

**आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥४५॥**

क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभावः; चक्षुरादिव्यापारेषु मनः प्रधानम्, मनोव्यापारे चाहङ्कारोऽहङ्कारव्यापारे च बुद्धिः प्रधानम् ॥४५॥

करणों में जो गौण-मुख्य-भाव होता है, वह आपेक्षिक ( किसी की अपेक्षा से ) है। यह आपेक्षिकता क्रियाविशेष के कारण होती है [ द्र० भूमिका ]।

नन्वस्य पुरुषस्येयं बुद्धिरेव करणं न बुद्ध्यन्तरमित्येवं व्यवस्था किन्निमित्तिकेत्याकाङ्क्षायामाह—

**तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा लोकवत् ॥४६॥**

तत्पुरुषीयकर्मजत्वात् करणस्य तत्पुरुषार्थमभिचेष्टा सर्वव्यापारो भवति लोकवत्। यथा लोके येन पुरुषेण क्रयादिकर्मणाऽर्ज्जितो यः कुठारादिस्तत्-

पुरुषार्थमेव तस्य च्छिदादिव्यापार इत्यर्थः। अतः करणव्यवस्थेति भावः। यद्यपि कूटस्थतया पुरुषे कर्म नास्ति तथापि भोगसाधनतया पुरुषस्वामिकत्वेन राज्ञो जयादिवदेव[1] पुरुषस्य कर्मोच्यते। ननु कर्मण एव तत्पुरुषीयत्वे किं नियामकमिति चेत्, तथाविधं कर्मान्तरमेव। अनादित्वात् तु नाऽनवस्था दोषायेति।

यत् तु कश्चिदविवेकी[2] वदति—बुद्धिप्रतिबिम्बितपुरुषस्य कर्मेति; तन्न, योगभाष्ये[3]ऽस्मदुक्तप्रकारस्यैवोक्तत्वेनान्यप्रकारस्याप्रामाणिकत्वात्। प्रतिबिम्बस्यावस्तुत्वेन कर्माद्यसम्भवाच्च। अन्यथा प्रतिबिम्बस्य कर्मतद्भोगाद्यङ्गीकारे बिम्बत्वाभिमतपुरुषकल्पनावैय्यर्थ्यस्य पूर्वं प्रतिपादितत्वादिति ॥४६॥

अविवेकमूलक कर्म से करणादि अभिव्यक्त होते हैं, अतः अविवेकसाक्षी पुरुष के लिये ( मुक्ति और बद्धावस्था के लिये ) करणों की स्वतः चेष्टा होती है। जो कुठार जिसका होता है, वह उसके ही व्यवहार में आता है—यह लौकिक उपमा यहाँ द्रष्टव्य है।

बुद्धेः प्राधान्यं प्रकटीकर्तुमुपसंहरति—

**समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥४७॥**

यद्यपि पुरुषार्थत्वेन समान एव सर्वेषां करणानां व्यापारस्तथापि बुद्धेरेव प्राधान्यं लोकवत्। लोके हि राजार्थकत्वाविशेषेऽपि ग्रामाध्यक्षादिषु मध्ये मन्त्रिण एव प्राधान्यं तद्वदित्यर्थः। अत एव बुद्धिरेव महानिति सर्वशास्त्रेषु[4] गीयत इति। वीप्साऽध्यायसमाप्तौ ॥४७॥

पुरुषार्थसिद्धि में सभी करणों के करणत्वरूप में समान योग रहने पर भी, बुद्धि का प्राधान्य है, जैसा कि लोक में देखा जाता है कि राजकार्य-निष्पत्ति में सभी ग्रामाध्यक्ष आदि का राजाथकत्व समान रहने पर भी मन्त्री का प्राधान्य रहता है।

---

१. 'ते (क्लेशादयः) मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति यथा जयः पराजयो वा योद्धृषु वर्तमानः पुरुषे व्यपदिश्यते' इति व्यासभाष्यवाक्यम् (१।२४) अत्रालोच्यम्।

२. इदमनिरुद्धमतम्।

३. १।२४, २।२० इत्यादिस्थलगतं योगवार्त्तिकं द्रष्टव्यम्।

४. बुद्धि-महदादि-संज्ञाविषये बुद्धिरध्यवसायेन ज्ञानेन च महांस्तथा (अश्व० ४३।३५) इति, महानिति यतः ख्यातिर्लोकानां जायते सदा (मत्स्य० ३।१७) इति, संकल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम् (वायु० ४।४६) इत्येतादृशानि वचांसि विचार्याणि।

लिङ्गदेहस्य घटकं यत् सप्तदशसङ्ख्यकम् ।
प्रधानकार्यं तत् सूक्ष्ममत्राध्यायेऽनुवर्णितम् ॥

इति श्रीविज्ञानाचार्यनिर्मिते[१] कापिलसाङ्ख्यप्रवचनस्य भाष्ये प्रधानकार्याध्यायो द्वितीयः ॥

---

१. विज्ञानभिक्षुनिर्मिते (पाठा०)

## तृतीयोऽध्यायः

इतःपरं प्रधानस्य स्थूलकार्यं महाभूतानि शरीरद्वयं च वक्तव्यम्; ततश्च विविधयोनिगत्यादयो ज्ञानसाधनानुष्ठानहेत्वपरवैराग्यार्थम्; ततश्च परवैराग्याय ज्ञानसाधनान्यखिलानि वक्तव्यानीति तृतीयारम्भः।

**अविशेषाद्विशेषारम्भः ॥१॥**

नास्ति विशेषः शान्तघोरमूढत्वादिरूपो यत्रेत्यविशेषो भूतसूक्ष्मं पञ्चतन्मात्राख्यं तस्माच्छान्तादिरूपविशेषवत्त्वेन विशेषाणां स्थूलानां महाभूतानामारम्भ इत्यर्थः। सुखाद्यात्मकता हि शान्तादिरूपा स्थूलभूतेष्वेव तारतम्यादिभिरभिव्यज्यते न सूक्ष्मेषु, तेषां शान्तैकरूपतयैव[1] योगिष्वभिव्यक्तेरिति ॥१॥

अविशेष तन्मात्र से पञ्चभूत रूप विशेष की उत्पत्ति होती है [ द्र० भूमिका ]।

तदेवं पूर्वाध्यायमारभ्य त्रयोविंशतितत्त्वाना मुत्पत्तिमुक्त्वा तस्माच्छरीरद्वयोत्पत्तिमाह—

**तस्माच्छरीरस्य ॥२॥**

तस्मात् त्रयोविंशतितत्त्वात् स्थूलसूक्ष्मशरीरद्वयस्यारम्भः इत्यर्थः[2]॥२॥

पूर्ववर्णित २३ तत्त्वों से स्थूल और सूक्ष्म शरीर की उत्पत्ति होती है ( इस सूत्र का यह अर्थ भी हो सकता है कि विशेष रूप भूतों से शरीर उत्पन्न होता है )।

सम्प्रति त्रयोविंशतितत्त्वे संसारान्यथानुपपत्तिं प्रमाणयति—

**तद्बीजात् संसृतिः ॥३॥**

तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् सूक्ष्माद्धेतोः पुरुषस्य संसृतिर्गतागते भवतः कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः।

---

१. तन्मात्राणि शान्तघोरमूढधर्मशून्यानि, अतो भिक्षुमतमसंगतमिति; द्र० भूमिका।

२. त्रयोविंशतितत्त्वेतिपदमत्रानुवृत्तं न वेति भूमिकायां विवृतम्। सूत्रार्थनिर्देशपरकः श्लोको यथा—तेभ्यो (तन्मात्रेभ्यः) भूतानि पञ्चभ्यः शरीरं वै प्रवर्तते (अनुशा० पृ० ६०१४ दाक्षि० पाठ, गीताप्रेस संस्क०)।

त्रयोविंशतितत्त्वेऽवस्थितो हि पुरुषस्तेनैवोपाधिना पूर्वकृतकर्मभोगार्थं देहाद्देह संसरति—

मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
वाचा वाचा कृतं कर्म कायेनैव तु कायिकम्[1] ॥

इत्यादिस्मृतिभिः पूर्वसर्गीयकरणैरेवोत्सर्गतः सर्गान्तरेषूपभोगसिद्धेः । अतएव ब्रह्मसूत्रमुपसंहरति—सम्परिष्वक्त इति[2] ॥३॥

शरीरबीज के कारण ही संसृति होती है ( शरीर रहने का अर्थ है—संस्कार-युक्त अन्तःकरण के साथ सम्बन्ध रहना, अतः जीव का लोकों में गमनागमन होते ही रहेंगे ) । [ शरीरबीज की व्याख्या भूमिका में द्र० ] ।

संसृतेरवधिमप्याह—

**आविवेकाच्च प्रवर्त्तनमविशेषाणाम् ॥४॥**

ईश्वरानीश्वरत्वादिविशेषरहितानां सर्वेषामेव पुंसां विवेकपर्यन्तमेव प्रवर्त्तनं संसृतिरावश्यकी विवेकोत्तरं च न सेत्यर्थः ॥४॥

सभी प्रकार के प्राणियों ( ब्रह्मा से कीटादि पर्यन्त ) का तब तक अवश्य ही संसरण होता रहेगा जब तक उनमें विवेक ( द्रष्टा-दृश्य का पार्थक्य ज्ञान ) उत्पन्न न हो । [विवेक से किस प्रकार संसरण रुद्ध होता है—यह भूमिका में दिखाया गया है] ।

तत्र हेतुमाह—

**उपभोगादितरस्य ॥५॥**

इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः ॥५॥

क्योंकि जो अविवेकी प्राणी होता है, वह कर्मफल का अतिक्रमण नहीं कर सकता, उसे कर्मफल का भोग करना ही पड़ता है ।

देहसत्त्वेऽपि संसृतिकाले भोगो नास्तीत्याह—

**सम्प्रति परिमुक्तो द्वाभ्याम् ॥६॥**

सम्प्रति संसृतिकाले पुरुषो द्वाभ्यां शीतोष्णसुखदुःखादिद्वन्द्वैः परिमुक्तो भवतीत्यर्थः । तदेतत् कारिकयोक्तम्—

संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्[3] ।

इति । भावा धर्माधर्मवासनादयः ॥६॥

---

१. मनु० १२।८ (तु-स्थाने चःपठ्यते स्मृतौ) ।

२. ब्रह्मसूत्रम् ३।१।१

३. चत्वारिंशी कारिका ।

उक्तस्य सूक्ष्मशरीरस्य स्वरूपमाह—

**सप्तदशैकं लिङ्गम्[1] ॥९॥**

सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति। तत्र सप्तदश मिलित्वा लिङ्गशरीरम्, तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः। एकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदश। अहङ्कारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्रे वक्ष्यमाणप्रमाणादेतान्येव सप्तदश लिङ्गं मन्तव्यं न तु सप्तदशमेकं चेत्यष्टादशतया व्याख्येयम्[2]। उत्तरसूत्रेण व्यक्तिभेदस्योपपाद्यतयाऽत्र लिङ्गैकत्व एकशब्दस्य तात्पर्यावधारणाच्च।

कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते।
स सप्तदशकेनापि राशिना युज्यते च सः ॥[3]

इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वसिद्धेश्च सप्तदशावयवा अत्र सन्तीति सप्तदशको राशिरित्यर्थः। राशिशब्देन स्थूलदेहवल्लिङ्गदेहस्यावयवित्वं निराकृतम्, अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य चावयवित्वमेकतादिप्रत्यक्षानुरोधेन कल्प्यत इति।

अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोगः प्रागुक्तः (३।८)। प्राणाश्चान्तःकरणस्यैव वृत्तिभेदः। अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भाव इत्यस्य सप्तदशावयवकस्य शरीरत्वं स्वयं वक्ष्यति—लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य[4] इति सूत्रेण। अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणम्। तदाश्रयतया त्वन्यत्र शरीरत्वमिति पश्चाद् व्यक्तीभविष्यति। चेष्टेन्द्रियार्थाश्रयः शरीरमिति तु न्यायेऽपि[5] तस्यैव लक्षणं कृतमिति ॥९॥

सूक्ष्मशरीर (= लिङ्गशरीर) सर्गादि में एक ही होता है (समष्टिरूप में), जिसमें ११ इन्द्रियाँ, ५ तन्मात्र एवं १ बुद्धि रहती हैं (भिक्षु का अर्थ)। हमारे अनुसार लिङ्गशरीर में १८ पदार्थ हैं—मन-बुद्धि-अहंकार + १० इन्द्रियाँ + ५ तन्मात्र [द्र० भूमिका]।

---

१. २।१९ योगवार्त्तिकान्ते सप्तदशैकलिङ्गशरीरं विवृतम्। सूत्रमिदमद्वैतब्रह्मसिद्धौ उद्धृतम् (पृ० २६३)। शारीरकोपनिषदि उक्तम्—बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया। शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥ इति।

२. लिङ्गशरीरविषये भूमिका द्रष्टव्या।

३. शान्ति० ३५१।१५-१६; कर्मात्मा त्वपरोयोऽसौ मोक्षबन्धैः स युज्यते इति मुद्रितशान्ति० पाठः।

४. सांख्यसूत्रम् ६।६९

५. न्यायसूत्रम् १।१।११

ननु लिङ्गं चेदेकं तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युस्तत्राह—

**व्यक्तिभेदः कर्मविशेषात् ॥१०॥**

यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं तथापि तस्य पश्चाद् व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति; यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्रकन्यादिलिङ्गदेहरूपेण। तत्र कारणमाह—कर्मविशेषादिति। जीवान्तराणां भोगहेतुकर्मादेरित्यर्थः। अत्र विशेषवचनात् समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिर्भवतीत्यायातम्।

अयं च व्यक्तिभेदो मन्वादिष्वप्युक्तः। यथा मनौ समष्टिपुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरम्—

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे[1] ॥

इति षण्णामिति समस्तलिङ्गशरीरोपलक्षणम्। आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः। तथा च तत्रैव वाक्यान्तरम्—

तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः[2] ॥ इति ॥१०॥

सर्गादि में लिङ्गशरीर एक होने पर भी ( हिरण्यगर्भोपाधिरूप ) कर्मविशेष के अनुसार उसके व्यक्तिभेद होते हैं, (पृथक्-पृथक् अंशों में वह अभिव्यक्त हो जाता है )। [ इसका अन्य तात्पर्य भूमिका में दिखाया गया है ]।

नन्वेवं भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले कथं शरीरव्यवहारस्तत्राह—

**तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ॥११॥**

तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौशिकदेहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहवादादित्यर्थः; लिङ्गसम्बन्धाददधिष्ठानस्य देहत्वमधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्यवसितोऽर्थः। अधिष्ठानशरीरं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते। तथा च शरीरत्रयं सिद्धम्[3]। यत् तु—

---

१. मनु० १।१६

२. मनुश्लोकत्वेन उक्तमपीदं वचनं न मनावुपलभ्यते; पुराणादिषु श्लोकोऽयमुपलभ्यते (पद्म० ५।३।१५६), सर्वेषु ग्रन्थेषु पाठान्तराणि च दृश्यन्ते—'कायस्थैरिरि, कारणैरिति च। अस्माकं मते 'कार्यैस्तैः करणैः सह' इति समीचीनः पाठः।

३. एतद्विषये भूमिका द्रष्टव्या।

आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः ।
सर्वासां भूतजातीनां ब्रह्मणस्त्वेक एव किम्[1] ॥

इत्यादिशास्त्रेषु शरीरद्वयमेव श्रूयते तल्लिङ्गशरीराधिष्ठानशरीरयोरन्योऽन्यनियतत्वेन सूक्ष्मत्वेन चैकताभिप्रायादिति ॥११॥

कर्मजनित भोग लिङ्गशरीर में होता है, यही तत्त्वतः भोगायतन है । उस लिङ्ग का अधिष्ठान भूतपञ्चक है, भूतपञ्चक का आश्रय षाट्कौशिक स्थूल देह है । इस आश्रयसम्बन्ध से ही स्थूल शरीर को भोगायतन कहा जाता है । यहाँ भिक्षु तीन देह मानते हैं—(१) लिङ्गशरीर, (२) लिङ्गशरीर का अधिष्ठानात्मक पञ्चभूतात्मक सूक्ष्म देह और (३) स्थूल देह । हमारी दृष्टि में भोग लिङ्गशरीर में नहीं होता, उसके लिये विशेषनिर्मित देह ( चाहे वह सूक्ष्म ही क्यों न हो ) चाहिए, तन्मात्रसंगृहीत लिङ्गशरीर भोगक्षम नहीं है [ भूमिका द्र० ] ।

ननु षाट्कौशिकातिरिक्ते लिङ्गशरीराधिष्ठानभूते शरीरान्तरे किं प्रमाणमित्याकाङ्क्षायामाह—

**न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥१२॥**

तल्लिङ्गशरीरं तदृतेऽधिष्ठानं विना स्वातन्त्र्यान्न तिष्ठति । यथा च्छाया निराधारा न तिष्ठति यथा वा चित्रमित्यर्थः । तथा च स्थूलदेहं त्यक्त्वा लोकान्तरगमनाय लिङ्गदेहस्याधारभूतं शरीरान्तरं सिध्यतीति भावः । तस्य च स्वरूपं कारिकायामुक्तम्—

सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते[2] ॥

इति । अत्र तन्मात्रकार्यं मातापितृजशरीरापेक्षया सूक्ष्मं यद्भूतपञ्चकं यावल्लिङ्गस्थायि प्रोक्तं तदेव लिङ्गाधिष्ठानं शरीरमिति लब्धं कारिकान्तरेण—

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्[3] ॥

इति । विशेषैः स्थूलभूतैः सूक्ष्माख्यैः, स्थूलावान्तरभेदैरिति यावत् । अस्यां कारिकायां सूक्ष्माख्यानां स्थूलभूतानां लिङ्गशरीराद्भेदावगमेन 'पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्'[4] इत्यादिपूर्वोदाहृतकारिकायां[5] सूक्ष्म-

---

१. द्र० भूमिका ।

२. एकोनचत्वारिंशी कारिका ।

३. एकचत्वारिंशी कारिका । अत्र अविशेषैरिति च्छेदोऽसमीचीन इत्यस्मदीय-पातञ्जल-योगदर्शनभूमिकायामुपपादितम् (पृ० १६) ।

४. चत्वारिंशी कारिका ।

५. सप्तमसूत्रभाष्यं द्र० ।

भूतपर्यन्तस्य लिङ्गत्वं नार्थः, किन्तु महदादिरूपं यल्लिङ्गं तत् स्वाधारसूक्ष्म पर्यन्तं संसरति तेन सह संसरतीत्यर्थः ।

नन्वेवं लिङ्गघटकपदार्थाः कियन्त इति कथमवधार्यमिति चेत्—

वासनाभूतसूक्ष्मं च कर्मविद्ये तथैव च ।
दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः[१] ॥

इति वासिष्ठादिवाक्येभ्यः । अत्र लिङ्गशरीरप्रतिपादनेनैव पुर्यष्टकमपि[२] व्याख्येयमित्याशयेन बुद्धिधर्माणामपि वासनाकर्मविद्यानां पृथगुपन्यासः । भूतसूक्ष्मं चात्र तन्मात्रा दशेन्द्रियाणि च ज्ञानकर्मेन्द्रियभेदेन पुरद्धयमित्याशयः । यत् तु मायावादिनो लिङ्गशरीरस्य तन्मात्रस्थाने प्राणादिपञ्चकं प्रक्षिपन्ति पुर्यष्टकं चान्यथा कल्पयन्ति तदप्रामाणिकमिति ॥१२॥

लिङ्गशरीर और षाट्कौशिक स्थूल शरीर के बीच में जो लिङ्गाधिष्ठान-भूत शरीर माना गया है उसके विना लिङ्गशरीर कार्य नहीं कर सकता, जिस प्रकार छाया या चित्र आधारविशेष के विना रह नहीं सकता ।

ननु मूर्तद्रव्यतया वाय्वादेरिव लिङ्गस्याकाशमेवासंगेनाधारोऽस्तु व्यर्थमन्यत्र संगकल्पनमिति, तत्राह—

**मूर्तत्वेऽपि न सङ्घातयोगात् तरणिवत् ॥१३॥**

मूर्तत्वेऽपि न स्वातन्त्र्यादसंगतयाऽवस्थानं प्रकाशरूपत्वेन सूर्यस्येव सङ्घातसंगानुमानादित्यर्थः । सूर्यादीनि सर्वाणि तेजांसि पार्थिवद्रव्यसंगेनैवावस्थितानि दृश्यन्ते लिङ्गं च सत्त्वप्रकाशमयमतो भूतसंगतमिति ॥१३॥

लिङ्गशरीर का आश्रय सूक्ष्मशरीरविशेष ही क्यों हो, अमूर्त आकाश ही क्यों न इसका आधार हो, ऐसा नहीं कहा जा सकता; जिस प्रकार सूर्यादि ज्योतिष्कों का तेज पार्थिवद्रव्ययुक्त होकर ही अवस्थित रहता है, उसी प्रकार सत्त्वप्रकाशमय लिङ्ग-शरीर भी सूक्ष्मभूतमय शरीर पर प्रतिष्ठित होकर ही कार्यक्षम रहता है ।

लिङ्गस्य परिमाणमवधारयति—

**अणुपरिमाणं तत्कृतिश्रुतेः ॥१४॥**

---

१. योगवासिष्ठः ६।१२८।१८–१९

२. पुर्यष्टकविषयेऽन्यत्रोक्तम्—'तदुक्तं सनन्देन—भूतेन्द्रियमनोबुद्धिर्वासनाकर्मवायवः । अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः' (कुल्लूकटीका १।५६) । योगवासिष्ठे चोक्तम्—मनोबुद्धिरहंकारस्तथा तन्मात्रपञ्चकम् । इति पुर्यष्टकं प्रोक्तं देहोऽसावातिवाहिकः ॥ (६।५१।५०) ।

तल्लिङ्गमणुपरिमाणं परिच्छिन्नं न त्वत्यन्तमेवाणु सावयवस्योक्तत्वात्। कुतः, कृतिश्रुतेः क्रियाश्रुतेः—विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च"[1] इत्यादिश्रुतेर्विज्ञानाख्यबुद्धिप्रधानतया विज्ञानस्य लिङ्गस्याखिलकर्मश्रवणादित्यर्थः। विभुत्वे सति क्रिया न सम्भवति। तद्गतिश्रुतेरिति पाठस्तु समीचीनः। लिङ्गशरीरस्य च गतिश्रुतिः—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति"[2] इति। सविज्ञानो बुद्धिसहित एव जायते सविज्ञानं यथा स्यात् तथा संसरति चेत्यर्थः ॥१४॥

लिङ्गशरीर अणुपरिमाण ( परिच्छिन्नपरिमाण, अर्थात् अवयवयुक्त ) है, क्योंकि उसकी (गमनादि) क्रिया का उल्लेख श्रुति में है।

परिच्छिन्नत्वे युक्त्यन्तरमाह—

**तदन्नमयत्वश्रुतेश्च ॥१५॥**

तस्य लिङ्गस्यैकदेशतोऽन्नमयत्वश्रुतेर्न विभुत्वं सम्भवतीति। विभुत्वे सति नित्यतापत्तेरित्यर्थः। सा च श्रुतिर्ह्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागित्यादिः[3]। यद्यपि मनआदीनि न भौतिकानि तथाप्यन्नसंसृष्टसजातीयांशपूरणादन्नमयत्वादिव्यवहारो बोध्यः ॥१५॥

लिङ्गशरीर परिच्छिन्नपरिमाण है, विभु नहीं है, क्योंकि वह मनःप्रधान है और मन अन्नमय है ( अन्नमय मन का प्राधान्य जिसमें है, वह विभु न होकर परिच्छिन्न ही होगा; अन्नग्रहणादि से मन में गुणाधान होता है, यही उसकी अन्नमयता है )।

अचेतनानां लिङ्गानां किमर्थं संसृतिर्देहाद्देहान्तरसञ्चार इत्याशङ्कायामाह—

**पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः ॥१६॥**

यथा राज्ञः सूपकाराणां पाकशालासु सञ्चारो राजार्थं तथा लिङ्गशरीराणां संसृतिः पुरुषार्थमित्यर्थः ॥१६॥

अचेतन ( जड़ ) लिङ्गशरीर का संसरण पुरुषार्थ के लिये होता है ( भोग या अपवर्ग के लिये लिङ्गशरीर चेष्टा करता रहता है )। जिस प्रकार सूपकार ( पाचक ) राजा के लिये पाकशाला में जाता है, उसी प्रकार संहत लिङ्गशरीर असंहत स्वपृथक् पुरुष के लिये प्रवृत्त होता है।

---

१. तै० उप० २।५

२. बृहदा० ४।४।२; केषुचित् संस्करणेषु वचनमिदमसम्यग्रूपेण मुद्रितम्।

३. छान्दोग्य० ६।५।४; सौम्येतिपाठोऽश्रौतः।

लिङ्गशरीरमशेषविशेषतो विचारितमिदानीं स्थूलशरीरमपि तथा विचारयति—

**पाञ्चभौतिको देहः ॥१७॥**

पञ्चानां भूतानां मिलितानां परिणामो देह इत्यर्थः ॥१७॥

देह ( स्थूलशरीर ) पञ्चभूतों से निर्मित होता है।

मतान्तरमाह—

**चातुर्भौतिकमित्येके ॥१८॥**

अकाशस्यानारम्भकत्वमभिप्रेत्येदम् ॥१८॥

किसी-किसी का मत है कि स्थूल देह चार भूतों से निर्मित है ( आकाश शरीर का उपादान नहीं है )।

**ऐकभौतिकमित्यपरे[1] ॥१९॥**

पार्थिवमेव शरीरमन्यानि च भूतान्युपष्टम्भकमात्राणीति भावः। अथवैकभौतिकमेकैकभौतिकमित्यर्थः। मनुष्यादिशरीरे पार्थिवांशाधिक्येन पार्थिवता सूर्यादिलोकेषु च तेजआद्याधिक्येन तैजसादिता शरीराणां सुवर्णादीनामिवेतीममेव पक्षं[2] पञ्चमाध्यायेऽपि सिद्धान्तयिष्यति ॥१९॥

अन्य वादी का मत है कि स्थूल शरीर एक ही भूत से निर्मित होता है, अर्थात् पार्थिव है ( अन्य भूत उपष्टम्भकरूपेण रहते हैं )। इस सूत्र का यह भी अर्थ है कि एक प्रकार का शरीर एक ही भूत से निर्मित होता है, यथा सूर्यलोक में तैजस शरीर इत्यादि।

देहस्य भौतिकत्वेन यत् सिध्यति, तदाह—

**न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥२०॥**

भूतेषु पृथक् कृतेषु चैतन्यादर्शनाद्भौतिकस्य न स्वाभाविकं चैतन्यं किन्त्वौपाधिकमित्यर्थः ॥२०॥

चैतन्य ( व्यावहारिक ज्ञातृभाव का कूटस्थ अविकारी मूल = चितिशक्ति ) सांसिद्धिक ( भूतों का स्वभावसिद्ध ) नहीं है, क्योंकि यदि भूतसमष्टिरूप देह का चैतन्य-स्वभाव सांसिद्धिक होता तो प्रत्येक क्षित्यादिभूत में भी चैतन्य दृष्ट होता, पर ऐसा देखा नहीं जाता।

---

१. देहोपादानविषये भूमिका द्र०।

२. ५।१०२-१०३, ५।१११-११३ सूत्रगतं भाष्यं द्रष्टव्यम्।

बाधकान्तरमाह—

**प्रपञ्चमरणाद्यभावश्च ॥२१॥**

प्रपञ्चस्य सर्वस्यैव मरणसुषुप्त्याद्यभावश्च देहस्य स्वाभाविकचैतन्ये सति स्यादित्यर्थः। मरणसुषुप्त्यादिकं हि देहस्याचेतनता सा च स्वाभाविकचैतन्ये सति नोपपद्यते स्वभावस्य यावद्द्रव्यभावित्वादिति ॥२१॥

यदि शरीर स्वभावतः चैतन्यधर्मक होता, तो किसी प्राणी का मरण ( सुषुप्ति आदि भी ) नहीं होता। मरने पर देह अचेतन हो जाता है; यदि देह स्वभावतः चेतन है तो ऐसा होना संभव नहीं होता, क्योंकि स्वभाव यावद्द्रव्यभावी होता है।

प्रत्येकादृष्टेरिति यदुक्तं तत्राशङ्क्य परिहरति—

**मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ॥२२॥**

ननु यथा मादकता-शक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्त्तत एवं चैतन्यमपि स्यादिति चेन्न, प्रत्येकपरिदृष्टे सति सांहत्ये तदुद्भवः सम्भवेत्। प्रकृते तु प्रत्येकपरिदृष्टत्वं नास्ति। अतो दृष्टान्ते प्रत्येकं शास्त्रादिभिः सूक्ष्मतया मादकत्वे सिद्धे संहतभावकाले मादकत्वाविर्भावमात्रं सिध्यति। दार्ष्टान्तिके तु प्रत्येकभूतेषु सुक्ष्मतया न केनापि प्रमाणेन चैतन्यं सिद्धमित्यर्थः।

ननु समुच्चिते चैतन्यदर्शनेन प्रत्येकभूते सूक्ष्मचैतन्यशक्तिरनुमेयेति चेन्न; अनेकभूतेष्वनेकचैतन्यशक्तिकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात्। ननु यथाऽवयवेऽवर्त्तमानमपि परिमाणजलाहरणादिकार्यं घटादौ दृश्यते, एवमेव शरीरे चैतन्यं स्यादिति; मैवम्, भूतगतविशेषगुणानां सजातीयकारणगुणजन्यतया कारणे चैतन्यं विना देहे चैतन्यासम्भवादिति ॥२२॥

प्रत्येक भूत में चैतन्य नहीं है, इस दूषण के उत्तर में यदि कहा जाए कि जिस प्रकार मदशक्ति ( मादकताशक्ति ) प्रत्येक मद्योपादानभूत द्रव्य में न रहने पर भी द्रव्यसमूह में रहती है, उसी प्रकार देहोपादानभूत प्रत्येक भूत में चैतन्य न रहने पर भी भूतसंघातरूप देह में चेतनता के होने में कोई बाधा नहीं है, तो उत्तर यह है कि प्रत्येक द्रव्योपादान में जो तत्त्व सूक्ष्म रूपेण रहता है ( जो सूक्ष्मतर प्रमाण से जाना जाता है ), वही उपादानों के समूह में स्फुट रूप से व्यक्त होता है ( मादकशक्ति मद्योपादानभूत द्रव्यों में रहती है )। भूत में चैतन्य का सूक्ष्मरूपेण रहना प्रमाणसिद्ध नहीं है, अतः भूतसमष्टिरूप देह में भी चैतन्य नहीं आ सकता; सुतरां मानना पड़ता है कि देहनिष्ठ ज्ञातृभाव का मूल देहातीत स्वप्रकाश चिद्रूप पुरुष है [ पूर्वोक्त युक्तियों की प्रचलित-व्याख्या में कुछ दोष है, भूमिका में इन युक्तियों का प्रकृत तात्पर्य दिखाया गया है ]।

मनःसङ्कल्पिते ध्येयांश एवमपि मायिकत्वमपीत्यर्थः। सर्वं खल्विदं ब्रह्मे[1]त्यादिश्रुत्युक्ते ह्युपास्ये प्रपञ्चांशस्य मायिकत्वमेवेति ॥२८॥

मनः संकल्पित ध्येयांश में मायिकत्व है। उपास्य ब्रह्म सगुण है, अतः माया-रूप त्रिगुण से संबद्ध है, सुतरां उपासना और तत्त्वज्ञान ( क्रियायोग और ज्ञानयोग ) का एकत्रावस्थान संभव नहीं है।

तद्युपासनस्य किं फलमित्याकाङ्क्षायामाह—

## भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥२९॥

भावनाख्योपासनानिष्पत्या शुद्धस्य निष्पापस्य पुरुषस्य प्रकृतेरिव सर्वमैश्वर्यं भवतीत्यर्थः। प्रकृतिर्यथा सृष्टिस्थितिसंहारं करोति[2], एवमुपासकस्य बुद्धिसत्त्वमपि प्रकृतिप्रेरणेन सृष्ट्यादिकर्तृ भवतीति ॥२९॥

उपासना का फल क्या है—इसके उत्तर में वक्तव्य है कि उपासना से जब चित्त शुद्ध ( सत्त्व-बहुल ) हो जाता है तब उसमें सर्वज्ञता-सर्वशक्तिमत्ता आदि गुण उद्भूत होते हैं। जिस प्रकार प्रकृति उपयोगी निमित्त द्वारा सृष्टि-संहारादि कार्य करती है, उसी प्रकार उपासक का प्राकृत चित्त भी सर्व-समर्थ हो जाता है ( उपा-सनाबलानुसार )।

ज्ञानमेव मोक्षसाधनमिति स्थापितम्। इदानीं ज्ञानसाधनान्याह—

## रागोपहतिर्ध्यानम्[3] ॥३०॥

ज्ञानप्रतिबन्धको यो विषयोपरागश्चित्तस्य तदुपघातहेतुर्ध्यानमित्यर्थः। उपचारेण कार्यकारणयोरभेदनिर्देशो रागक्षयस्य ध्यानत्वासम्भवात्। अत्र ध्यानशब्देन धारणाध्यानसमाधयो योगोक्तास्त्रय एव ग्राह्याः, पातञ्जले योगोङ्गानामष्टानामेव विवेकसाक्षात्कारहेतुत्वश्रवणादिति[4]। एतेषां चावान्तरविशेषास्तत्रैव द्रष्टव्याः। इतराणि च पञ्चाङ्गानि स्वयं वक्ष्यति[5] ॥३०॥

---

१. छान्दोग्य० ३।१४।१

२. कथनमिदं तात्त्विकदृष्ट्या, परिणामशीलत्वाद् गुणेष्वेव कर्तृत्वसंभवात्। परन्तु व्यक्तताहेतुभूतः पुरुषोऽपरिहार्यः। तथाचोक्तम्—पुरुषाधिष्ठितं प्रधानं प्रवर्तते इति।

३. ६।२५ सूत्रे ध्यानं निर्विषयं मन इत्युक्तम्। अत्र साधनदशा, षष्ठाध्याये च स्वरूप-दशाऽभिहितमिति विवेच्यम्।

४. तथा च सूत्रम्—योगाङ्गानुष्ठानाद् अशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः (२।२८)।

५. सांख्यसूत्रकार इति शेषः। यमनियमासनप्राणायामप्रत्याहारनिर्देशपराणि सूत्राणि—३।३२—३।३५, ४।१९, ६।२४, ६।२५ च।

चित्त का जो विषयोपराग है, ध्यानाभ्यास से उसका दूरीकरण हो जाता है ।

ध्याननिष्पत्त्यैव ज्ञानोत्पत्तिर्नारम्भमात्रेणेत्याशयेन ध्याननिष्पत्तेर्लक्षणमाह—

**वृत्तिनिरोधात् तत्सिद्धिः ॥३१॥**

ध्येयातिरिक्तवृत्तिनिरोधरूपेण सम्प्रज्ञातयोगेन तत्सिद्धिर्ध्यानस्य निष्पत्तिर्ज्ञानाख्यफलोपधानरूपा भवतीत्यर्थः । अतस्तावत्पर्यन्तमेव ध्यानं कर्त्तव्यमित्याशयः । इतरवृत्तिनिरोधे सत्येव विषयान्तरसंस्काराख्यप्रतिबन्धापगमाद्ध्येयसाक्षात्कारो भवतीति कृत्वा योगोऽपि[1] ज्ञाने कारणं योगाङ्गध्यानादिवदित्यपि मन्तव्यम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीत्यादि[2] श्रुतिस्मृत्योस्तदवगमादिति ॥३१॥

वृत्तिनिरोध द्वारा ध्यान की निष्पत्ति होती है ।

ध्यानस्यापि साधनान्याह—

**धारणासनस्वकर्मणा तत्सिद्धिः ॥३२॥**

वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः ॥३२॥

धारणा, आसन और स्वकर्म के आचरण से ध्यान की सिद्धि होती है ।

धारणादित्रयं क्रमात् सूत्रत्रयेण लक्षयति—

**निरोधश्छर्दिविधारणाभ्याम् ॥३३॥**

प्राणस्येति प्रसिद्ध्या लभ्यते । प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति योगसूत्रे[3] भाष्यकारेण प्राणायामस्य व्याख्यातत्वात् । छर्दिश्च वमनम्, विधारणस्त्याग इति यावत्, तेन पूरणरेचनयोर्लाभः । विधारणं च कुम्भकम् । तथा च प्राणस्य पूरकरेचककुम्भकैर्यो निरोधो वशीकरणं साधारण्येत्यर्थः । आसनकर्मणोः स्वशब्देन पश्चाल्लक्षणीयतया सूत्रे परिशेषत एव धारणाया लक्ष्यत्वलाभाद्धारणापदं नोपात्तम् । चित्तस्य धारणा तु समाधिवद् ध्यानशब्देनैव गृहीतेत्युक्तम् ॥३३॥

---

१. अत्र देवलोक्तिर्द्रष्टव्या—विषयेभ्यो निवर्त्याऽभिप्रेतार्थे मनसोऽवस्थापनं योग इति (याज्ञ० प्रायश्चित० १०९ अपरार्कोद्धृता) ।

२. कठ० १।२।१२

३. १।३४

प्राण का निरोध प्रच्छर्दन (चेष्टाविशेषपूर्वक प्रश्वास) और विधारण (उचित उपाय से कोष्ठ में वायु का धारण) से होता है।

क्रमप्राप्तमासनं लक्षयति—

**स्थिरसुखमासनम्**[1] ॥३४॥

यत् स्थिरं सत् सुखसाधनं भवति स्वस्तिकादि तदासनमित्यर्थः ॥३४॥

शरीर का जो सुखकर अवस्थान योगानुकूल स्थैर्य का संपादक है, वह आसन कहलाता है। (चित्तरोध का सहायक न होने पर आसन योगाङ्गभूत आसन नहीं होगा)।

स्वकर्म लक्षयति—

**स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम्** ॥३५॥

सुगमम्। तत्र कर्मशब्देन यमनियमयोर्ग्रहणम्; जितेन्द्रियत्वरूपः प्रत्याहारोऽपि सर्वाश्रमसाधारणतया कर्ममध्ये प्रवेशनीयः। तथा च पातञ्जलसूत्रे ज्ञानसाधनतया प्रोक्तान्यष्टौ योगाङ्गान्यत्रापि लब्धानि। यथा तत्सूत्रम्—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति[2]। तेषां च स्वरूपं तत्रैव द्रष्टव्यम् ॥३५॥

स्वकर्म (३२ सूत्रोक्त) का अर्थ है—आश्रमानुरूप शास्त्रविहित कर्मों का अनुष्ठान। (आत्मज्ञान के साधन में आश्रमधर्म की साक्षात् अपेक्षा है, वर्णधर्म की नहीं—यह इससे ध्वनित होता है—द्र० भूमिका)।

मुख्याधिकारिणो नास्ति बहिरङ्गस्य यमादिपञ्चकस्यापेक्षा, केवलाद्धारणाध्यानादित्रयरूपात् संयमादेव ज्ञानं योगश्च भवतीति पातञ्जलसिद्धान्तः[3]। जडभरतादिषु च तथा दृश्यतेऽपि। अतस्तदनुसारेणाचार्योऽप्याह—

**वैराग्यादभ्यासाच्च** ॥३६॥

---

१. स्थिरसुखमासनमिति न नियम (६।२४) इति सूत्रमप्यालोच्यम्; द्र० भाग० २।२।१५

२. २।२९

३. भिक्षुणा ३।७ योगवार्त्तिके मतमिदं प्रपञ्चितम्, उदाहृतं च गरुडपुराणवचनम स्मिन्नर्थे—आसनस्थानविधयो न योगस्य प्रसाधकाः।…शिशुपालः सिद्धिमाप स्मरणाभ्यागौरवादिति। अत एव जडभरतादीनां समाधिविघ्नतया बाह्यकर्मत्यागोऽपि श्रूयते इत्यप्यत्र उक्तम्।

केवलाभ्यासाद् ध्यानरूपादेव वैराग्यसहितज्ज्ञानं तत्साधनयोगश्च भवत्युत्तमाधिकारिणामित्यर्थः। तदुक्तं गारुडेऽपि—

आसनस्थानविधयो न योगस्य प्रसाधकाः।
विलम्बजननाः सर्वे विस्तराः परिकीर्तिताः ॥
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात्[1]।

इति। अथवा वैराग्यध्यानाभ्यासावत्र ध्यानस्यैव हेतुतयोक्तौ, चकारश्च धारणासमुच्चयायेति। तदेवं ज्ञानान्मोक्षो व्याख्यातः ॥३६॥

वैराग्य और अभ्यास से भी वृत्तिनिरोधरूप ध्यान सिद्ध होता है।

अतः परं बन्धो विपर्ययादित्युक्तो[2] बन्धकारणं विपर्ययो व्याख्यास्यते; तत्रादौ विपर्ययस्य स्वरूपमाह—

**विपर्ययभेदाः पञ्च[3] ॥३७॥**

अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च योगोक्ता[4] बन्धहेतुविपर्ययस्यावान्तरभेदा इत्यर्थः। तेन शुक्त्यादिज्ञानरूपाणां विपर्ययाणामसङ्ग्रहेऽपि न क्षतिः। तत्राविद्याऽनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरिति योगे[5] प्रोक्ता। एवमस्मिताप्यात्मानात्मनोरेकताप्रत्ययः, शरीराद्यतिरिक्त आत्मा नास्तीत्येवंरूपः। अविद्या तु नैवंरूपा, आत्मनः शरीराशरीरोभयरूपत्वेऽपि शरीरेऽहम्बुद्ध्युपपत्तेः। रागद्वेषौ तु प्रसिद्धावेव। अभिनिवेशश्च मरणादित्रास इति। रागादीनां विपर्ययकार्यतया विपर्ययत्वम् ॥३७॥

विपर्यय ( २४ सूत्रोक्त ) के पाँच भेद हैं, यथा—अविद्या, अस्मिता, राग, द्वेष और अभिनिवेश ( इनके परिचय के लिये योगसूत्र २। ३–९ द्र० )।

विपर्ययस्य स्वरूपमुक्त्वा तत्कारणस्याशक्तेरपि स्वरूपमाह—

---

१. गरुडपुराणम् १।२२७।४४–४५ ख०। आसनस्थानविषया इति मुद्रितपुराणपाठः। गार्वेसंस्करणे नाकरस्थलं निर्दिष्टम्।

२. सांख्यसूत्रम् ३।२४

३. विपर्यय–अशक्ति-तुष्टि-सिद्धीनां सूत्रोक्ता गणना देवलादिभिरपि कृतेति विज्ञायते। एतद्विषये वायुपुराणगतं विवरणं द्रष्टव्यम्—पञ्चमोऽनुग्रहः सर्गः चतुर्धा स व्यवस्थितः। विपर्ययेणाशक्त्या च तुष्ट्यासिद्ध्या तथैव च ॥५७॥ स्थावरेषु विपर्यासः तिर्यग्योनिष्वशक्तिता ॥६८॥ सिद्ध्यात्मानो मनुष्यास्तु तुष्टिर्देवेषु कृत्स्नशः। इत्येते प्राकृताश्चैव वैकृताश्च नव स्मृताः ॥ (वायु० ६।६९)।

४. योगसूत्रम् २।३

५. योगसूत्रम् २।५

**अशक्तिरष्टाविंशतिधा तु ॥२८॥**

सुगमम्। एतदपि कारिकया व्याख्यातम्—
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।
सप्तदश वधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम्॥[१] इति
बाधिर्यं कुष्ठिताऽन्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्तमुग्धताः[२]॥

इत्येकादशेन्द्रियाणामेकादशाशक्तयः स्वतश्च बुद्धेः सप्तदशाशक्तयः। यथा वक्ष्यमाणानां नवतुष्टीनां विघाता नव, तथा वक्ष्यमाणानामष्टसिद्धीनां च विघाता अष्टाविति मिलित्वा चेमाः स्वतः परतश्चाष्टाविंशतिर्बुद्धेरशक्तय इत्यर्थः। तु शब्द एषां विशेषप्रसिद्धिख्यापनार्थः[३]॥२८॥

अशक्ति (इन्द्रियवैकल्य) २८ प्रकार की है। यथा—११ इन्द्रियों का वध (=विकलता), और १७ बुद्धिवध = २८। ९ तुष्टियों एवं ८ सिद्धियों के विघातक पदार्थ ही १७ बुद्धिवध हैं।

**ययोर्विघाते बुद्धेरशक्ती ते तुष्टिसिद्धी सूत्रद्वयेनाह—**

**तुष्टिर्नवधा ॥२९॥**

**स्वयमेव नवधात्वं वक्ष्यति[४]॥२९॥**

तुष्टि (साधनोद्यमहीनता-जनित एवं अल्पवैराग्यजनित संतोष रूप मनोभाव) नौ प्रकार की है, यथा—१-४ आध्यात्मिक तुष्टियाँ तथा ५-९ बाह्य तुष्टियाँ। (१) प्रकृतितुष्टि = प्रकृति स्वयं ही मोक्ष का संपादन करेगी, मुझे कुछ साधन करना नहीं है—ऐसा समझकर सन्तोष रखना या प्रकृति पर वैराग्य करने पर ही मुक्ति होगी—ऐसा समझकर सन्तोष करना; (२) उपादानतुष्टि = प्रव्रज्यादि के ग्रहणमात्र से मुक्ति हो जाएगी—यह मनोभाव; (३) कालतुष्टि—कालानुसार मुक्ति होगी—यह मनोभाव या बहुकालतक येन केन रूपेण साधन करने पर भी मुक्ति होगी—यह मनोभाव; (४) भाग्यतुष्टि—भाग्य में यदि हो तो अवश्य ही उद्यम के बिना मुक्ति मिलेगी—यह मनोभाव; ५-९ बाह्य विषयों के 'अर्जन-रक्षण-क्षय-भंग-हिंसा' में दुःख अवश्यंभावी है, यह समझ कर

---

१. एकोनपञ्चाशत्तमी कारिका।

२. श्लोकस्यास्याकरस्थलं न ज्ञायते। बहुत्र उद्धृतोऽयम्—जयमङ्गलाटीकायाम्, सांख्यतत्त्वकौमुद्याम्, सांख्यचन्द्रिकायां च। तत्त्वसमाससूत्रव्याख्यानेष्वप्ययमुद्धृतः, अनिरुद्धवृत्तावत्रैवायमुद्धृतः। एषु स्थलेषु पाठान्तराण्यपि दृश्यन्ते।

३. मतमिदं युक्तं नवेति भूमिकायां विवृतम्।

४. ४३ तमे सूत्रे।

जो सामान्य वैराग्य होता है, उस पर ही तुष्ट रहना बाह्य तुष्टि है; यह मनोभाव प्रकृत वैराग्य नहीं है। [ द्र० भूमिका ]।

## सिद्धिरष्टधा ॥४०॥

**एतदपि स्वयं वक्ष्यति[1] ॥४०॥**

सिद्धि ( साधन पथ में वीर्यप्रदायक ) आठ प्रकार की है, यथा—(१) ऊह-सिद्धि = उपदेशादि के विना स्वयं ही तत्त्वज्ञान में ऊहन करने का सामर्थ्य; (२) शब्द = अन्यों के वाक्य सुनकर जो ज्ञानप्रसाद की स्फूर्ति होती है, वह; (३) अध्ययन = शास्त्राध्ययन द्वारा ज्ञानदीप्ति का साधन; (४) सुहृत्-प्राप्ति = मोक्षपथसहायक सुहृत् का लाभ, जिससे ज्ञानाभ्यास में सहायता होती है; (५) दान = ज्ञानादि दान करने का सामर्थ्य अथवा चित्त का निर्मलता गुण जिससे आकृष्ट होकर योगी के पास चेतनरत्न स्वयं उपस्थित होते हैं और अचेतन रत्न उपस्थित किए जाते हैं; (६-८) त्रिविध दुःखों का विघात [ भूमिका में इस पर विशद विचार किया गया है ]।

उक्तानां विपर्ययाशक्तितुष्टिसिद्धीनां विशेषजिज्ञासायां क्रमेण सूत्रचतुष्टयं प्रवर्तते—

## अवान्तरभेदाः पूर्ववत्[2] ॥४१॥

विपर्ययस्यावान्तरभेदा ये सामान्यतः पञ्चोक्तास्ते पूर्ववत् पूर्वाचार्यैर्यथोक्तास्तथैव विशिष्यावधार्याः, विस्तरभयान्नेहोच्यन्त इत्यर्थः। ते चाविद्यादयो मयापि सामान्यत एव व्याख्याताः पञ्चेति। विशेषतस्तु द्वाषष्टिभेदाः, तदुक्तं कारिकायाम्—

भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः[3] ॥

इति। अस्यायमर्थः—अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिष्वनात्मस्वात्मबुद्धिरविद्या तमोऽष्टधा भवति। कार्यकारणाभेदेन केवलविकृतिष्वात्मबुद्धेरप्यत्रान्तर्भावः। एवमविद्याया विषयभेदेनाष्टविधत्वात् तत्समानविषयकस्यास्मिताख्यमोहस्याष्टविधत्वम्। दिव्यादिव्यभेदेन शब्दादीनां विषयाणां दशत्वात् तद्विषयको रागाख्यो महामोहो दशविधः। अविद्यास्मितयोरष्टौ ये विषया ये रागस्य दश विषयास्तद्विघातकेष्वष्टादशस्वष्टादशधा

---

१. ४४ तमे सूत्रे।

२. विपर्यय-अशक्ति-तुष्टि-सिद्धिस्वरूपविषये नानाविधानि मतानि सांख्यसप्तति-टीकासु द्रष्टव्यानि (४७-५१)।

३. अष्टचत्वारिंशी कारिका।

तामिस्राख्यो द्वेषः। एवं तेषामष्टादशानां विनाशादिदर्शनादष्टादशधाऽन्धतामिस्राख्योऽभिनिवेशो भयमिति। एतेषां च तम आदिसंज्ञा तद्धेतुत्वादिति ॥४१॥

विपर्यय के अवान्तरभेद पूर्ववत् ( पूर्वाचार्यों के अनुसार ज्ञेय ) हैं, यथा—मूलतः अविद्या पाँच प्रकार की है—अविद्या ( तमः ), अस्मिता ( मोह ), राग ( महामोह ), द्वेष ( तामिस्र ) और अभिनिवेश ( अन्धतामिस्र )। तमः के ८ भेद हैं, मोह के ८, महामोह के १०, तामिस्र के १८ और अन्धतामिस्र के भी १८ हैं—इस प्रकार ६२ भेद होते हैं [ द्र० भूमिका ]।

**एवमितरस्याः ॥४२॥**

एवं पूर्ववदेवेतरस्या अशक्ते रप्यवान्तरभेदा अष्टाविंशति र्विशेषतोऽवगन्तव्या इत्यर्थः। अशक्तिरष्टाविंशतिधेत्येतस्मिन्नेव (३८) सूत्रेऽष्टाविंशतिधात्वं मया व्याख्यातम् ॥४२॥

इसी रूप से ( पूर्वाचार्यों के अनुसार ) अशक्ति के अवान्तर भेद भी ज्ञातव्य हैं। ( द्र० सूत्र ३।३८ )।

**आध्यात्मिकादिभेदान्नवधा तुष्टिः ॥४३॥**

इदं सूत्रं कारिकया व्याख्यातम्—

आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः[2] ॥

इति। अस्यायमर्थः—आत्मानं तुष्टिमतः सङ्घातमधिकृत्य प्रवर्तन्त इत्याध्यात्मिकास्तुष्टयश्चतस्रः। तत्र प्रकृत्याख्या तुष्टिर्यथा—साक्षात्कारपर्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव तं च प्रकृतिरेव करोत्यहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषः। इयं तुष्टिरम्भ इत्युच्यते। ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाख्या सलिलमित्युच्यते। ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिरोघ इत्युच्यते। ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या तुष्टिः सा भाग्याख्या वृष्टिरित्युच्यत इति चतस्र आध्यात्मिकाः। बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जन-

---

१. विपर्यय-अशक्ति-तुष्टि-सिद्धी राश्रित्य पूर्वाचार्यैर्बहु विचारितम्, बहूनि विचित्राणि नामानि च प्रदत्तानि अवान्तरपदार्थानाम्। विपर्यादीनां चतुर्णाम् अवान्तरभेदव्याख्यानं कृत्वा भेदानां वैचित्र्यं च दृष्ट्वा वाचस्पतिरूचे—'अस्य च युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये इति कृतं परदोषोद्भावनेन नः सिद्धान्तमात्रव्याख्यानप्रवृत्तानाम्' इति (तत्त्वकौ० ५१)।

२. पञ्चाशत्तमी कारिका; आध्यात्मिक्याः, अभिहिताः (पाठा०)।

रक्षणक्षयभोगहिंसादिदोषनिमित्तकोपरमाज्जायन्ते। ताश्च तुष्टयो यथाक्रमं पारं सुपारं पारपारमनुत्तमाम्भ उत्तमाम्भ इति परिभाषिता इति।

कश्चित् त्विमां कारिकामन्यथा व्याख्यातवान्[1]। तद्यथा—विवेकसाक्षात्कारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्यानाभ्यासेनेत्येवं दृष्ट्या या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या। प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्यानादिनेति या तुष्टिः सोपादानाख्या। कृतसंन्यासस्यापि कालेनैव मोक्षो भविष्यत्यलमुद्वेगेनेति या तुष्टिः सा कालाख्या। भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरेवं कुतर्के या तुष्टिः सा भाग्याख्येत्यादिरर्थः इति; तन्न, तद्व्याख्याततुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभाषानौचित्यादिति ॥४३॥

आध्यात्मिकादि-भेद से तुष्टि नौ प्रकार की है ( द्र० सूत्र ३।३९ )।

## ऊहादिभिः सिद्धिः ॥४४॥

ऊहादिभेदैः सिद्धिरष्टधा भवतीत्यर्थः। इदमपि सूत्रं कारिकया व्याख्यातम्—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ सिद्धेः पुर्वोऽङ्कुशस्त्रिविधः[2] ॥

इति। अस्यायमर्थः। अत्राध्यात्मिकादिदुःखत्रयप्रतियोगिकत्वात् त्रयो दुःखविघाता मुख्यसिद्धयः। इतरास्तु तत्साधनत्वाद् गौण्यः सिद्धयः। तत्रोहो यथा—उपदेशादिकं विनैव प्राग्भवीयाभ्यासवशात् तत्त्वस्य स्वयमूहनमिति। शब्दस्तु यथा—अन्यदीयपाठमाकर्ण्य स्वयं वा शास्त्रमाकलय्य यज्ज्ञानं जायते तदिति। अध्ययनं च यथा—शिष्याचार्यभावेन शास्त्राध्ययनाज् ज्ञानमिति। सुहृत्प्राप्तिर्यथा—स्वयमुपदेशार्थं गृहागतात् परमकारुणिकाज् ज्ञानलाभ इति। दानं च यथा—धनादिदानेन परितोषिताज्ज्ञानलाभ इति। एषु[3] च पूर्वस्त्रिविध ऊहशब्दाध्ययनरूपो मुख्यसिद्धेरङ्कुश आकर्षकः। सुहृत्प्राप्तिदानयोरूहादित्रयापेक्षया मन्दसाधनत्वप्रतिपादनायेदमुक्तम्। कश्चित्[4] त्वेतासामष्टसिद्धीनामङ्कुशो निवारकः पूर्वस्त्रिविधो विपर्ययाशक्तितुष्टिरूपो भवति बन्धकत्वादिति

१. कश्चिदिति वाचस्पतिः ( = तत्त्वकौमुदी )।

२. सप्तपञ्चाशत्तमी कारिका।

३. अस्मिन् वाक्ये यत् मतं प्रतिपादितं तत् पूर्णिमाटीकायां खण्डितम् (५१ कारिका)।

४. ५१ कारिकास्था तत्त्वकौमुदी द्र०।

व्याचष्टे; तन्न, तुष्टयभावस्याशक्तितया बाधिर्यादिवत् सिद्धिविरोधितालाभेन तुष्ट्यतुष्ट्यो रुभयोः[1] सिद्धिविरोधित्वासम्भवात् ॥४४॥

ऊह आदि भेद से सिद्धियाँ आठ हैं ( द्र० सूत्र ३।४० )।

ननूहादिभिरेव कथं सिद्धिरुच्यते मन्त्रतपःसमाध्यादिभिरप्यणिमाद्यष्ट-सिद्धेः सर्वशास्त्रसिद्धत्वादिति, तत्राह—

**नेतरादितरहानेन विना ॥४५॥**

इतरादूहनादिपञ्चकभिन्नात् तपआदेस्तात्त्विकी न सिद्धिः; कुत इतरहानेन विना, यतः सा सिद्धिरितरस्य विपर्ययस्य हानं विनैव भवत्यतः संसारापरिपन्थित्वात् सा सिद्ध्याभास एव न तु तात्त्विकी सिद्धिरित्यर्थः। तथा चोक्तं योगसूत्रेण—ते समाधावुपसर्गा व्युत्थाने सिद्धय इति[2]। तदेवं ज्ञानान् मुक्तिरित्यारभ्य[3] विस्तरतो बुद्धिगुणरूपः प्रत्ययसर्गः सकार्यबन्धो मोक्षरूपपुरुषार्थेन सहोक्तः। एतौ च बुद्धि-तद्गुणरूपौ सर्गौ प्रवाहरूपेणा-न्योऽन्यं हेतू बीजाङ्कुरवत्। तथा च कारिका—

न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः[4] ॥

इति। भावो वासनारूपा बुद्धेर्ज्ञानादिगुणाः; लिङ्गं महत्तत्त्वं बुद्धिरिति। समष्टिसर्गः प्रत्ययसर्गश्च समाप्तः[5] ॥४५॥

ऊह, शब्द आदि उपर्युक्त ( ३।४४ सूत्रोक्त ) सिद्धियों के अतिरिक्त तप आदि से तात्त्विक ( कैवल्यानुकूल ) सिद्धि प्राप्त नहीं होती, क्योंकि तप आदि जनित सिद्धियाँ विपर्यय का नाश न कर भी उत्पन्न होती हैं, अतः ऐसी सिद्धियाँ सिद्धि की आभासरूप हैं।

साम्प्रतं व्यक्तिभेदः कर्मविशेषादिति[6] सङ्क्षेपादुक्ता व्यष्टिसृष्टिर्विस्तरतः प्रतिपाद्यते—

---

१. क्वचित् उभयोरिति न पठ्यते।
२. योगसूत्रम् ३।३७
३. सांख्यसूत्रम् ३।२३
४. द्विपञ्चाशत्तमी कारिका।
५. 'तदेवं ज्ञानान्मुक्तिरित्यारभ्य विस्तरतः···प्रत्ययसर्गश्च समाप्तः' इत्यंशः ४६ सूत्रपातनिकारूपेण गार्वेसंस्करणे दृश्यते। अस्मत्स्थापितो ग्रन्थविभागः समीचीन-तर इति प्रतिभाति।
६. सांख्यसूत्रम् ३।१०।

**दैवादिप्रभेदा ॥४६॥**

दैवादिः प्रभेदोऽवान्तरभेदो यस्याः सा तथा सृष्टिरिति शेषः। तदेतत् कारिकया व्याख्यातम्—

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः[1] ॥

इति। ब्राह्म-प्राजापत्यैन्द्र-पैत्र-गान्धर्व-याक्ष-राक्षस-पैशाचा इत्यष्टविधो दैवः सर्गः। पशु-मृग-पक्षि-सरीसृप-स्थावरा इति तैर्यग्योनः पञ्चविधः। मानुष्यसर्गश्चैकप्रकार इति। भौतिको भूतानां व्यष्टिप्राणिनां विराजः सकाशात् सर्ग इत्यर्थः ॥४६॥

सृष्टि में दैव आदि अवान्तर भेद हैं। दैवादि = देवयोनि, तिर्यग्योनि और मनुष्ययोनि।

अवान्तरसृष्टेरप्युक्तायाः पुरुषार्थत्वमाह—

**आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिराविवेकात् ॥४७॥**

चतुर्मुखमारभ्य स्थावरान्ता व्यष्टिसृष्टिरपि विराट्सृष्टिवदेव पुरुषार्था भवति तत्तत्पुरुषाणां विवेकख्यातिपर्यन्तमित्यर्थः ॥४७॥

आत्मार्थ सृष्टि ( भोग के लिये या अपवर्ग के लिये ) ब्रह्मा से स्तम्ब पर्यन्त व्यापिनी है ( ब्रह्मादि प्रत्येक जीव अन्तःकरण रूप उपाधियुक्त आत्मा ही है ); जब तक विवेकज्ञान उत्पन्न नहीं होता तब तक जीव का संसरण चलता ही रहेगा, विवेक के बाद चित्तरोध होकर कैवल्य होता है।

व्यष्टिसृष्टावपि विभागमाह सूत्रत्रयेण—

**ऊर्ध्वं सत्त्वविशाला ॥४८॥**

ऊद्ध्वं भूर्लोकादुपरि सृष्टिः सत्त्वाधिका भवतीत्यर्थः ॥४८॥

सत्त्वबहुल सृष्टि ऊर्ध्वलोक में है [ द्र० भूमिका ]।

**तमोविशाला मूलतः ॥४९॥**

मूलतो भूर्लोकादध इत्यर्थः ॥४९॥

तमोबहुल सृष्टि भूर्लोक के अधोदेश में है [ द्र० भूमिका ]।

**मध्ये रजोविशाला ॥५०॥**

मध्ये भूर्लोक इत्यर्थः ॥५०॥

रजोबहुल सृष्टि मध्यलोक ( भूर्लोक ) में है [ द्र० भूमिका ]।

---

१. त्रिपञ्चाशत्तमी कारिका।

नन्वेकस्या एव प्रकृतेः केन निमित्तेन सत्त्वादिविशालतया विचित्राः सृष्टय इत्याकाङ्क्षायामाह—

**कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥५१॥**

विचित्रकर्मनिमित्तादेव यथोक्ता प्रधानस्य चेष्टा कार्यवैचित्र्यरूपा भवति। वैचित्र्ये दृष्टान्तो गर्भदासवदिति। यथा गर्भावस्थामारभ्य यो दासस्तस्य भृत्यवासनापाटवेन नानाप्रकारा चेष्टा परिचर्या स्वाम्यर्थे भवति तद्वदित्यर्थः ॥५१॥

प्रकृति का कार्यवैचित्र्य जीवगत कर्म की विचित्रता से होता है; जिस प्रकार नानाविध अन्तःकरण और उन अन्तःकरणों के आश्रयभूत देह हैं, तथैव देहोपयोगी विभिन्न प्रकार के लोक भी हैं। अधीन दास की स्वामि-प्रसादार्थ नानाविध चेष्टा की तरह प्रकृति की विचित्र रचना भी कर्मनिमित्तक होती रहती है।

ननु चेद् ऊर्ध्वं सत्त्वविशाला सृष्टिरस्ति तर्हि तत एव कृतार्थत्वात् पुरुषस्य किं मोक्षेणेति, तत्राह—

**आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद् हेयः ॥५२॥**

तत्राप्यूर्द्ध्वगतावपि सत्यामावृत्तिरस्त्यत उत्तरोत्तरयोनियोगादधोऽधो योनिजन्मनः सोऽपि लोको हेय इत्यर्थः ॥५२॥

सत्त्व प्रधान ऊर्ध्वलोक में गति होने पर भी वहाँ से आवृत्ति होती है और पुनः नाना योनियों में जन्मग्रहण करना पड़ता है, अतः ऊर्ध्वलोक भी हेय है।

किञ्च—

**समानं जरामरणादिजं दुःखम्[1] ॥५३॥**

ऊर्द्ध्वाधोगतानां ब्रह्मादिस्थावरान्तानां सर्वेषामेव जरामरणादिजं दुःखं साधारणमतोऽपि हेय इत्यर्थः ॥५३॥

सभी प्रकार के लोकों में जीव को जरामरणादि दुःख समानरूपेण मिलता है। तात्पर्य यह है कि देवादि शरीर यद्यपि सुखबोधबहुल है पर वह क्षयिणु है, अतः मरणादि अवश्यंभावी हैं। किंच आकैवल्य शरीर-धारण करना पड़ता ही है, अतः शारीरिक परिणामों से जनित दुःख भी मिलता ही है।

---

१. जरामरणदुःखशब्दो बहुशो व्यवहृतः सांख्याचार्यैः—जरामरणदुःखयोरत्यन्ताभावोऽपवर्ग इत्युक्तं देवलेन। अत्र जरामरणकृतंदुःखं प्राप्नोति चेतनः पुरुष इतीश्वरकृष्णः।

किं बहुना, कारणे लयादपि न कृतकृत्यतेत्याह—

**न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥५४॥**

विवेकज्ञानाभावे यदा महदादिषु वैराग्यं प्रकृत्युपासनया भवति तदा प्रकृतौ लयो भवति 'वैराग्यात् प्रकृतिलय'[1] इति वचनात्[2]। तस्मात् कारणलयादपि न कृतकृत्यताऽस्ति मग्नवदुत्थानात्। यथा जले मग्नः पुरुषः पुनरुत्तिष्ठति एवमेव प्रकृतिलीनाः पुरुषाः ईश्वरभावेन पुनराविर्भवन्ति। संस्कारादेरक्षयेण पुनरागाभिव्यक्तेर्विवेकख्यातिं विना दोषदाहानुपपत्तेरित्यर्थः ॥५४॥

अव्यक्त प्रकृति में चित्त का ( अविवेकपूर्वक ) लय कर देने मात्र से कृतकृत्यता नहीं होती, क्योंकि जलमग्न व्यक्ति की तरह पुनः उसका उत्थान होता है ।

ननु कारणं केनापि न कार्यतेऽतः स्वतन्त्रा[3] कथं स्वोपासकस्य दुःखनिदानमुत्थानं पुनः करोति, तत्राह—

**अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥५५॥**

प्रकृतेरकार्यत्वेऽप्यप्रेर्यत्वेऽप्यन्येच्छानधीनत्वेऽपि तद्योगः पुनरुत्थानौचित्यं तल्लीनस्य, कुतः पारवश्यात् पुरुषार्थतन्त्रत्वात्। विवेकख्यातिरूपपुरुषार्थवशेन प्रकृत्या पुनरुत्थाप्यते स्वलीन इत्यर्थः। पुरुषार्थादयश्च प्रकृतेर्न प्रेरकाः किन्तु प्रवृत्तिस्वभावायाः प्रवृत्तौ निमित्तानीति न स्वातन्त्र्यक्षतिः। तथा च योगसूत्रम्—निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदिति[4]; वरणभेदः प्रतिबन्धनिवृत्तिः ॥५५॥

प्रकृति स्वप्रतिष्ठ है, अतः प्रकृतिलीन चित्त का पुनरुत्थान नहीं होना चाहिए, ऐसा नहीं कहा जा सकता, क्योंकि लीनचित्त में पारवश्य रहने के कारण साधक का पुनः संसारबन्धन होता है। चित्तपरस्थ चिति का विवेकज्ञान न रहने से प्रकृतिलीन साधक का चित्त पुनरुत्थित होता है; उनका संस्कार भी सम्यक् क्षीण नहीं होता।

प्रकृतिलयात् पुरुषस्योत्थाने प्रमाणमप्याह—

**स हि सर्ववित् सर्वकर्ता ॥५६॥**

---

१. सांख्यकारिका (४५)।

२. पञ्चसु गतिषु मध्ये प्रकृतिलयगतिरन्यतमा (अनुशा० १६।६०-६५)। इतिहासपुराणे प्रकृतिलयविवरणं पुष्कलं वर्तते इति शंकराचार्यवचनतो विज्ञायते (प्रकृतिलय इति पौराणिकैरुच्यते—ईशोपनिषद्भाष्यम् १२)।

३. 'स्वहन्त्रा' इत्यपपाठः।

४. योगसूत्रम् ४।३

स हि पूर्वसर्गे कारणलीनः सर्गान्तरे सर्ववित् सर्वकर्त्तेश्वर आदिपुरुषो भवति, प्रकृतिलये तस्यैव प्रकृतिपदप्राप्त्यौचित्यात्—तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्येत्या[1]दिश्रुतेरित्यर्थः ॥५६॥

इस प्रकार का लीनचित्त पुरुष जब ईश्वरतायुक्त होकर व्यक्त होता है, तब वह सर्ववित् और सर्वकर्ता होता है [ द्र० भूमिका ]।

नन्वेवमीश्वरप्रतिषेधानुपपत्तिस्तत्राह—

**ईदृशेश्वरसिद्धिः सिद्धा ॥५७॥**

प्रकृतिलीनस्य जन्येश्वरस्य सिद्धि र्यः सर्वज्ञ सर्वविद्यस्य ज्ञानमयं तपः"[2] इत्यादिश्रुतिभ्यः सर्वसम्मतैव । नित्येश्वरस्यैव विवादास्पदत्वादित्यर्थ[3]ः ।

अथवा 'स हि' इत्यादिसूत्रद्वयमेवं व्याख्येयम्—पारवश्यमपि[4] प्रतिपादयति स हीति सूत्रेण । स हि परः पुरुषसामान्यं सर्वज्ञानशक्तिमत् सर्वकर्तृताशक्तिमच्च, अयस्कान्तवत् सन्निधिमात्रेण प्रेरकत्वादित्यर्थः । तथा[5] चासमाप्तार्थपुरुषसान्निध्यात् तदर्थमन्येच्छानधीनाया अपि प्रकृतेः प्रवृत्तिरावश्यकीति । नन्वेवमीश्वरप्रतिषेधविरोधस्तत्राह—ईदृशेश्वरसिद्धिः सिद्धा । सान्निध्यमात्रेणेश्वरस्य सिद्धिस्तु श्रुतिस्मृतिषु सर्वसम्मतेत्यर्थः—

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते[6] ॥
सृजते च गुणान् सर्वान् क्षेत्रज्ञस्त्वनुपश्यति ।
गुणान् विक्रियते सर्वानुदासीनवदीश्वरः[7] ॥
इत्यादि श्रुतिस्मृतयश्चैतादृशेश्वरे प्रमाणमिति[8] ॥५७॥

---

१. बृहदा० ४।४।६
२. मुण्डक० १।१।९
३. एतद्विषये भूमिका द्रष्टव्या ।
४. सूत्रद्वयमिदं व्याख्याय पारवश्यमपि प्रतिपादयति इति क्वचित् पठ्यते, सोऽपपाठः ।
५. तदा च (पाठा०) ।
६. कठ० २।४।१२ (न ततो विभुरश्नुते इति भाष्ये क्वचित् पठ्यते, सोऽपपाठः) ।
७. द्र० भूमिका ।
८. जगत्सर्जकेश्वरविषये सांख्यस्य यन् मतं तदस्माभिर्निबन्धान्तरे विस्तरेणोपपादितम् (वेदवाणीपत्रिका १५।५-९ द्रष्टव्या) । सांख्ये जगत्सर्जकेश्वरचर्चाऽसीदिति विज्ञायते, अतएवेश्वरमधिकृत्योक्तम्—सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः इति (ब्रह्म० २४०।१७); विरिञ्चइति यत् प्रोक्तं कापिलज्ञानचिन्तकैः । स प्रजापतिरेवाहं चेतनात् सर्वलोककृत्(शान्ति० ३४२।९४)। धर्मज्ञानवैराग्येश्वर्यादीनां यादृशे उत्कर्षे संपादिते सति चित्तमीश्वरतायुक्तं भवति तत् सांख्यशास्त्रे विवृतम् ।

ईदृश ईश्वर ( सृष्टिकर्ता ) की सिद्धि युक्ति से होती है।

द्वितीयाध्यायादिमारभ्यैतावत्पर्यन्तं सूत्रव्यूहैः प्रधानसृष्टिः समापिता। इतः परं मोक्षोपपत्त्यर्थं प्रधानसृष्टेर्ज्ञानिपुरुषं प्रत्यत्यन्तनिवृत्तिरत्यन्तलयाख्या वक्तव्या; तदुपपत्त्यर्थमादौ प्रधानसृष्टेः प्रयोजनं द्वितीयाध्यायस्यादिसूत्रे दिङ्मात्रेणोक्तं विस्तरतः प्रतिपादयति—

**प्रधानसृष्टिः परार्थं स्वतोऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ॥५८॥**

प्रधानस्य स्वत एव सृष्टिर्यद्यपि तथापि परार्थमन्यस्य भोगापवर्गार्थम्। यथोष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थं कुतोऽभोक्तृत्वादचेतनत्वेन भोगापवर्गासम्भवादित्यर्थः। ननु विमुक्तमोक्षार्थं स्वार्थं वेत्यनेन (२।१) स्वार्थापि सृष्टिरुक्तेति चेत्, सत्यम्; तथापि पुरुषार्थतां विना स्वार्थताऽपि न सिध्यति। स्वार्थो हि प्रधानस्य कृतभोगापवर्गात् पुरुषादात्मविमोक्षणमिति। ननु भृत्यतुल्या चेत् प्रकृतिस्तर्हि कथं स्वामिनो दुःखार्थमपि प्रवर्तत इति चेन्न, सुखार्थप्रवृत्त्यैव नान्तरीयकदुःखसम्भवाद् दुष्टभृत्यतुल्यत्वाद्वेति ॥५८॥

परिणामशीला जडप्रकृति स्वयं विपरिणत होकर जो सृष्टि करती है, वह परार्थ है, जिस प्रकार उष्ट्र दूसरों के लिये कुंकुमादि का वहन करता है [भूमिका में परार्थता, प्रकृति का अभोक्तृत्व और इस उपमा का तात्पर्य प्रतिपादित हुए हैं]।

ननु प्रधानस्याचेतनस्य स्वतः स्रष्टृत्वमेव नोपपद्यते, रथादेः परप्रयत्नेनैव प्रवृत्तिदर्शनादिति, तत्राह—

**अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥५९॥**

यथा क्षीरं पुरुषप्रयत्ननैरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते, एवमचेतनत्वेऽपि परप्रयत्नं विनापि महदादिरूपपरिणामः प्रधानस्य भवतीत्यर्थः। धेनुवद्वत्सायेत्यनेन[1] सूत्रेणास्य न पौनरुक्त्यम्, तत्र करणप्रवृत्तेरेव विचारितत्वात्, धेनूनां चेतनत्वाच्चेति ॥५९॥

प्रकृति यद्यपि अचेतन है, पर उसकी प्रवृत्ति ( परिणाम ) परार्थ होती है। प्रकृति की इस इच्छाशून्य प्रवृत्ति के लिये 'दुग्ध का दधिरूप में परिणत होना' रूप उपमा दी जा सकती है।

दृष्टान्तान्तरप्रदर्शनपूर्वकमुक्तार्थहेतुमाह—

**कर्मवद् दृष्टेर्वा कालादेः ॥६०॥**

---

१. सांख्यसूत्रम् २।३७।

कालादेः कर्मवद्वा स्वतः प्रधानस्य चेष्टितं सिद्ध्यति दृष्टत्वात् । अथैको गच्छति ऋतुरितरश्च प्रवर्तत इत्यादिरूपं कालादिकर्म स्वत एव भवत्येवं प्रधानस्यापि चेष्टा स्यात् कल्पनाया दृष्टानुसारित्वादित्यर्थः ॥६०॥

जिस प्रकार काल आदि का कर्म स्वतः चलता है ( पुरुषविशेष के संकल्प-पूर्वक नियन्त्रण के विना )—ऐसा देखा जाता है, उसी प्रकार प्रधान की परिणामक्रिया भी स्वतः होती है । प्रकृति का अन्यतम उपादान (अवयव) रजः है, जो क्रियाशील है, अतः प्रधान का परिणामस्वभाव आगन्तुकहेतुजन्य नहीं है ।

ननु तथापि ममेदं भोगादिसाधनमिति प्रतिसन्धानाभावान् मूढायाः प्रकृतेः कदाचित् प्रवृत्तिरपि न स्याद्विपरीता च प्रवृत्तिः स्यात् , तत्राह—

**स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ॥६१॥**

यथा प्रकृष्टभृत्यस्य स्वभावात् संस्कारादेव प्रतिनियताऽवश्यकी च स्वामिसेवा प्रवर्तते न तु स्वभोगाभिप्रायेण, तथैव प्रकृतेश्चेष्टितं संस्कारादेवेत्यर्थः ॥५१॥

अपने परिणामशील स्वभाव के कारण ही प्रकृति अबुद्धिपूर्वक चेष्टा करती है ( महदादि-विकारों में परिणत होती है ); जिस प्रकार एक भृत्य अपनी इच्छा आदि के विना प्रभु के कार्य में प्रवृत्त होता है ( यह उपमा है ) ।

**कर्माकृष्टेर्वाऽनादितः ॥६२॥**

वाशब्दोऽत्र समुच्चये । यतः कर्मानाद्यतः कर्मभिराकर्षणादपि प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः ॥६२॥

अथवा यह भी कहा जा सकता है कि अनादि कर्म द्वारा आकृष्ट होकर प्रकृति का यथायथ परिणाम होता है ( जीवगत करणवैचित्र्य की उपपत्ति के लिये यह सूत्र है; परमार्थतः कर्म, कर्मसंस्कार, कर्माधार मन आदि प्रवाहरूपेण अनादि हैं ) ।

तदेवं प्रधानस्य परार्थतः स्रष्टृत्वे सिद्धे परप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षः सिद्ध्यतीत्याह प्रघट्टकेन—

**विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥६३॥**

विविक्तपुरुषज्ञानात् परवैराग्येण पुरुषार्थसमाप्तौ प्रधानस्य सृष्टिर्निवर्तते । यथा पाके निष्पन्ने पाचकस्य व्यापारो निवर्तत इत्यर्थः । इयमेवात्यन्तिकप्रलय इत्युच्यते । तथा च श्रुतिः—तस्याभिध्यानाद्योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरिति[1] ॥६३॥

१. श्वेताश्व० १।१०

जब चित्त में यह बोध उत्पन्न हो जाता है कि जड प्रकृति से चिद्रूप पुरुष पृथक् है, तब प्राकृत महदादि के परिणाम की निवृत्ति होती है—कृतार्थ होकर ये तत्त्व अपने कारण में लीन होने के लिये स्वभावतः प्रवृत्त हो जाते हैं। पाचक अन्ननिष्पत्ति के बाद निवृत्त होता है—यह महदादिनिवृत्ति की उपमा है।

नन्वेवमेकपुरुषस्योपाधौ विवेकज्ञानोत्पत्त्या प्रकृतेः सृष्टिनिवृत्तौ सर्वमुक्तप्रसङ्ग इति, तत्राह—

इतर इतरवत् तद्दोषात् ॥६४॥

इतरस्तु विविक्तबोधरहित इतरवद् बद्धवदेव प्रकृत्या तिष्ठति; कुतस्तद्दोषात्—तस्य प्रधानस्यैव तत्पुरुषार्थासमापनाख्यदोषादित्यर्थः। तदुक्तं योगसूत्रे—कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति[1]। तथा च पूर्वसूत्रे या प्रधाननिवृत्तिरुक्ता सा विविक्तबोद्धृपुरुषं प्रत्येवेति भावः। विश्वमायाश्रुतिरपि[2] ज्ञानिनं प्रत्येव मन्तव्या, अजामिति[3] श्रुत्यैकवाक्यत्वादिति ॥६४॥

जिसमें विवेकज्ञान उत्पन्न होता है, उसके महदादि-परिणामक्रम की निवृत्ति होती है, अन्य अविवेकी पुरुष बद्ध होकर ही रहते हैं, क्योंकि उनमें गुणसंगरूप दोष विद्यमान है। ( पुरुषार्थ की चरितार्थता न होने के कारण ऐसे बद्ध पुरुष चिरकाल तक बद्ध रहेंगे )।

सृष्टिनिवृत्तेः फलमाह—

द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥६५॥

द्वयोः प्रधानपुरुषयोरेवौदासीन्यमेकाकिता, परस्परवियोग इति यावत्, सोऽपवर्गः। अथवा पुरुषस्यैव कैवल्यमहं मुक्तः स्यामित्येव पुरुषार्थतादर्शनादित्यर्थः ॥६५॥

पुरुष और प्रकृति का परस्पर औदासीन्य ( जड और चेतन का विरुद्ध स्वभाव जानकर दृश्यवर्ग से अपने को पृथक् करने की चेष्टा से उत्पन्न वियोग ) होने से अपवर्ग (दुःख से मुक्ति) सिद्ध होता है; अथवा केवल पुरुष का ही यदि प्रकृति से पृथक् होकर स्वस्थिति हो तो भी कैवल्य की सिद्धि होगी [सूत्रार्थ पर भूमिका में विशद विचार किया गया है]।

---

१. २।२२ सूत्रम्।

२. ३।६३ भाष्योद्धृता श्वेताश्वतरश्रुतिः।

३. श्वेताश्व० ४।५

नन्वेकपुरुषमुक्तावेव विवेकाकारवृत्त्या विरक्ता प्रकृतिः कथमन्यपुरुषार्थं पुनः सृष्टौ प्रवर्तताम्। न च प्रकृतेरंशभेदान्नैष दोष इति वाच्यम्, मुक्तपुरुषोपकरणैरपि पृथिव्यादिभिरन्यस्य भोग्यसृष्टिदर्शनादिति ; तत्राह—

**अन्यसृष्ट्युपरागेऽपि न विरज्यते प्रबुद्धरज्जुतत्त्वस्यैवोरगः ॥६६॥**

एकस्मिन् पुरुषे विविक्तबोधाद्विरक्तमपि प्रधानं नान्यस्मिन् पुरुषे सृष्ट्युपरागाय विरक्तं भवति किन्तु तं प्रति सृजत्येव। यथा प्रबुद्धरज्जुतत्त्वस्यैवोरगो भयादिकं न जनयति मूढं प्रति तु जनयत्येवेत्यर्थः। उरगतुल्यत्वं च प्रधानस्य रज्जुतुल्ये पुरुषे समारोपणादिति। एवंविधं रज्जुसर्पादिदृष्टान्तानामाशयमबुद्ध्वैवाबुधाः केचिद्वेदान्तिब्रुवाः प्रकृतेरत्यन्ततुच्छत्वं मनोमात्रत्वं वा तुलयन्ति। एतेन प्रकृतिसत्यतावादिसाङ्ख्योक्तदृष्टान्तेन श्रुतिस्मृत्यर्था बोधनीयाः, न केवलं दृष्टान्तवत्त्वेनायमर्थः सिद्ध्यति ॥६६॥[२]

कृतभोगापवर्ग किसी पुरुष के प्रति प्रधान की निवृत्ति होने पर भी अन्य असिद्ध पुरुषों के प्रति वह निवृत्त नहीं होता; अचरितार्थ पुरुष का महदादिरूप दृश्य का दर्शन होता रहता है। जिस पुरुष को रज्जु में सर्पज्ञान निवृत्त हो जाता है, वही उस सर्प से भीत नहीं होता, अन्यों में वह सर्प भय को उत्पन्न करता ही है, यह इस विषय की उपमा है।

**कर्मनिमित्तयोगाच्च ॥६७॥**

सृष्टौ निमित्तं यत् कर्म तस्य सम्बन्धादप्यन्यपुरुषार्थं सृजतीत्यर्थः ॥६७॥

अकृत-भोगापवर्ग पुरुष में संसरण-हेतुभूत कर्म (कर्मसंस्कार, अविवेकमूलक कर्माशय) रह जाता है, अतः कर्म के साथ योग रहने के कारण उस पुरुष के प्रति

---

१. व्यक्तरूपेणाव्यक्तरूपेण वा गुणा स्तिष्ठन्ति, न तेषामत्यन्ताभावो जायते। कृतार्थं पुरुषं प्रति ते नष्टाः सन्तः अव्यक्तीभूता भवन्ति, अन्ये अकृतार्थाः पुरुषा गुणबद्धास्तिष्ठन्त्येव, असंख्याताश्च पुरुषाः। अतएव सदसदात्मकमव्यक्तमिति पुराणादिषु बहुधोक्तम् (वायु० ४।१८)। अतएव गुणत्रयरूपं प्रधानमजातं ध्रुवमक्षयं नित्यमित्युच्यते पुराणेषु (वायु० ४।२०)। आपस्तम्बधर्मसूत्रटीकाया मेतदर्थकं वाक्यमिदं द्रष्टव्यम्-गुहेति प्रकृतिनाम; यत् तत् स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृतिः प्रसूतिः। आत्मा गुहा योनिरनाद्यनन्तं क्षेत्रं तथैवामृतमक्षरं च—इति पुराणे दर्शनात् (१।८।२२।४ उज्ज्वला)। अतएव सदसच्चैव तत् सर्वमव्यक्तं त्रिगुणं स्मृतमिति गीयते (अश्व० ३९।२४)। महाप्रलये यथा महान् प्रधाने लीयते, तथा प्रधानं कस्मिन्नपि न लीयते (ब्रह्म० २३।२५-२६) इति।

२. भाष्यपाठभेदो भूमिकायां द्र०।

सृष्टि-प्रवाह समाप्त नहीं होता—बद्ध पुरुषों के शरीरधारणपूर्वक लोकों में गमनागमन होते ही रहेंगे।

ननु सर्वेषां पुरुषाणामप्रार्थकतया नैरपेक्ष्याविशेषेऽपि कञ्चित् प्रत्येव प्रधानं प्रवर्तते कञ्चित् प्रति निवर्तत इत्यत्र किं नियामकम्। न च कर्म नियामकं कस्य पुरुषस्य किं कर्मेत्यत्र नियामकाभावादिति, तत्राह—

**नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥६८॥**

पुरुषाणां नैरपेक्ष्येऽप्ययं मे स्वाम्ययमेवाहमित्यविवेकादेव प्रकृतिः सृष्ट्यादिभिः पुरुषानुपकरोतीत्यर्थः। तथा च यस्मै पुरुषायात्मानमविविच्य दर्शयितुं वासना वर्तते तं प्रत्येव प्रधानं प्रवर्तत इत्येव नियामकमिति भावः[1] ॥६८॥

मूल में पुरुष (द्रष्टा) और प्रकृति (दृश्य) परस्पर अनपेक्ष हैं। (पुरुष शुद्ध है, दृश्यसम्बन्धशून्य है—पुरुष की ईदृश निरपेक्षता रहने पर भी) प्रकृत्युपकार (प्रकृतिकृत महदादिरूप सृष्टि का होना) में अविवेक ही निमित्त है, अर्थात् जब तक अविवेक रहेगा तब तक महदादि-परिणाम होते रहेंगे।

प्रवृत्तिस्वभावत्वात् कथं विवेकेऽपि निवृत्तिरुपपद्यताम्, तत्राह—

**नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात् ॥६९॥**

पुरुषार्थमेव प्रधानस्य प्रवृत्तिस्वभावो न तु सामान्येन। अतः प्रवृत्तस्यापि प्रधानस्य पुरुषार्थसमाप्तिरूपे चरितार्थत्वे सति निवृत्तिर्युक्ता। यथा परिषद्भ्यो नृत्यदर्शनार्थं प्रवृत्ताया नर्तक्यास्तत्सिद्धौ निवृत्तिरित्यर्थः ॥६९॥

जब महदादि की चरितार्थता हो जाती है तब गुणवैषम्यरूप महदादि की निवृत्ति होती है। (चरितार्थ होने पर स्वतः निवृत्त होना भी गुणत्रय का स्वभाव है); नर्तकी नृत्यसमाप्ति के बाद जिस प्रकार स्वतः निवृत्त हो जाती है, यह उपमा यहाँ ग्राह्य होनी चाहिए।

---

१. नेदं मन्तव्यं यत् प्रधानस्य प्रवृत्तिरिच्छापूर्विका भवति, जडत्वात् मूलायाः प्रकृतेः। ये च पुरुषा बद्धास्ते अनादिबद्धा एव, अतएव सा वासनां कृत्वा पुरुषं बध्नातीति कल्पनमयुक्तम्। सांख्यदृष्टिमज्ञात्वा बौद्ध आह—'अभिलाषानुसारेण प्रकृतिश्चेत् प्रयच्छति'…इति, एतदसारम्। साम्यावस्थं प्रधानं वैषम्यावस्थापन्नं सत् महदादीनि वस्तूनि उत्पादयति इत्यत्र हेत्वभावरूपो दोषः शङ्कराचार्येण प्रदत्तः (शारीरक भाष्यम् २।२।८०९); इदं मतमपि सांख्यदृष्ट्यज्ञानमूलकमिति प्रकृतिस्वभावविज्ञानतो स्फुटं विज्ञायते [द्र० भूमिका]।

निवृत्तौ हेत्वन्तरमाह—

**दोषबोधेऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥७०॥**

पुरुषेण परिणामित्वदुःखात्मकत्वादिदोषदर्शनादपि लज्जितायाः प्रकृतेः पुनर्न प्रत्युपसर्पणं कुलवधूवत्। यथा स्वामिना मे दोषो दृष्ट इत्यवधारणेन लज्जिता कुलवधूर्न स्वामिनमुपसर्पति तद्वदित्यर्थः। तदुक्तं नारदीये—

सविकारापि मौढ्येन चिरं भुक्त्वा[1] गुणात्मना।
प्रकृतिर्ज्ञातदोषेयं लज्जयेव निवर्तते[2] ॥

इति। एतदेवोक्तं कारिकयापि—

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य[3] ॥ इति ॥७०॥

जब प्रकृति के दोष का साक्षात् ज्ञान हो जाता है (प्रकृति जड है, परप्रकाश्य है, विकारशील है इत्यादि जानकर), तब वह ज्ञाता की ओर प्रवृत्त नहीं होती (गुण के प्रति वितृष्णता उत्पन्न होती है); एक कुलवधू अपने स्वामी से तब स्वतः निवृत्त हो जाती है जब वह जान जाती है कि स्वामी ने मेरे दोषों को जान लिया है— यह उपमा यहाँ ग्राह्य है।

ननु पुरुषार्थं चेत् प्रधानप्रवृत्तिस्तर्हि बन्धमोक्षाभ्यां पुरुषस्य परिणामापत्तिरिति, तत्राह—

**नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥७१॥**

दुःखयोग-वियोगरूपौ बन्धमोक्षौ पुरुषस्य नैकान्ततस्तत्त्वतः, किन्तु चतुर्थसूत्रवक्ष्यमाणप्रकारेणाविवेकादेवेत्यर्थः[4] ॥७१॥

बन्ध और मोक्षरूप दो अवस्थाएँ वस्तुतः आत्मसम्बद्ध नहीं हैं; अविवेक के कारण ही ऐसा प्रतीत होता है कि पुरुष वस्तुतः बद्ध है या मुक्त है।

परमार्थतस्तु यथोक्तौ बन्धमोक्षौ प्रकृतेरेवेत्याह—

**प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥७२॥**

---

१. भुक्त्वेति पाठोऽसाधुः।

२. द्र० भूमिका।

३. एकषष्टितमी कारिका।

४. आविवेकाच्च प्रवर्तनमविशेषाणाम् (३।४) इति सूत्रं द्र०।

प्रकृतेरेव तत्त्वतो दुःखेन बन्धमोक्षौ ससङ्गत्वाद् दुःखसाधनैर्धर्मादिभिर्लिप्तत्वात्। यथा पशू रज्ज्वा लिप्ततया बन्धमोक्षभागी तद्वदित्यर्थः। एतदुक्तं कारिकया—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः[1]॥

इति। द्वयोरेकतरस्य वौदासीन्यमपवर्ग इति सूत्रे[2] च यः पुरुषस्यापवर्ग उक्तः स प्रतिबिम्बरूपस्य मिथ्यादुःखस्य वियोग एवेति ॥७२॥

तत्त्वतः बन्ध और मोक्ष प्रकृति के ही हैं (प्राकृत चित्त ही बद्ध या मुक्त होता है)। जिस प्रकार कोई पशु रज्जुसंग से बद्ध होता है, उसी प्रकार दुःखसाधनभूत धर्मादि से लिप्त होकर प्रकृति (प्रकृतिविकारभूत चित्त) बद्ध होता है (यह बन्धन प्रवाहरूपेण अनादि है)।

तत्र कैः साधनैर्बन्धः कैर्वा मोक्ष इत्याकाङ्क्षायामाह—

**रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्विमोचयत्येकरूपेण ॥७३॥**

धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः सप्तभी रूपैः स्वधर्मैर्दुःखहेतुभिः प्रकृतिरात्मानं दुःखेन बध्नाति कोशकारवत् कोशकार[3]कृमिर्यथा स्वनिर्मितेनावासेनात्मानं बध्नाति तद्वत्। सैव च प्रकृतिरेकरूपेण ज्ञानेनैवात्मानं दुःखान्मोचयतीत्यर्थः ॥७३॥

जिस प्रकार कोशकार (कृमि) अपने को स्वनिर्मित गृह में बद्ध करता है, उसी प्रकार प्रकृति धर्म, विराग, ऐश्वर्य, अधर्म, अज्ञान, अवैराग्य, अनैश्वर्य रूप सात रूपों से अपने को बाँधती है (प्राकृत चित्त धर्मादि द्वारा बद्ध होता है)। ज्ञान नामक एक रूप से ही मोक्ष मिलता है (ज्ञानाभ्यास से चित्त मुक्त होता है)।

ननु बन्धमुक्ती अविवेकादिति[4] यदुक्तं तदयुक्तम्, अविवेकस्याहेयानुपादेयत्वात्। लोके दुःखस्य तदभावसुखादेरेव च स्वतो हेयोपादेयत्वात्। अन्यथा दृष्टहानिरित्याशङ्क्य चतुर्थसूत्रोक्तं स्वयं विवृणोति—

---

१. द्विषष्टितमी कारिका; सांख्यसप्तत्यां खलु पुरुषस्थले कश्चिदिति पठ्यते। नापि मुच्यते इति पाठान्तरमपि दृश्यते।

२. ३।६५ सूत्रम्।

३. कृतिरित्यपपाठः।

४. ३।७१ सूत्रं द्रष्टव्यम्।

**निमित्तत्वमविवेकस्य न दृष्टहानिः ॥७४॥**

अविवेकस्य पुरुषेषु बन्धमोक्षनिमित्तत्वमेव पुरोक्तम्[1], नत्वविवेक एव ताविति नातो दृष्टहानिरित्यर्थः। एतच्च प्रथमाध्यायसूत्रेषु[2] स्पष्टम्। अविवेक-निमित्तात् प्रकृतिपुरुषयोः संयोगस्तस्माच्च संयोगादुत्पद्यमानस्य प्राकृतदुःखस्य पुरुषे यः प्रतिबिम्बः स एव दुःखभोगो दुःखसम्बन्धस्तन्निवृत्तिरेव च मोक्षाख्यः पुरुषार्थ इति ॥७४॥

बन्ध-मोक्ष में अविवेक ही निमित्त है अर्थात् जब तक चित्त में अविवेक है, तब तक जीव बद्ध रहता है; विवेक से अविवेक का नाश होने पर वैराग्यबल से चित्त का शाश्वत रोध होना ही मोक्ष है; इस प्रकार अविवेक की ही निमित्तता है।

तदेवमादिसर्गमारभ्यात्यन्तिकलयपर्यन्तोऽखिलपरिणामः प्रधान-तद्विकाराणामेव, पुरुषस्तु कूटस्थपूर्णचिन्मात्र एवेत्यध्यायद्वयेन विस्तरतो विवेचितम्, तस्य विवेकस्य निष्पत्त्युपायेषु सारभूतमभ्यासमाह—

**तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेकसिद्धिः ॥७५॥**

प्रकृतिपर्यन्तेषु जडेषु नेति नेतीत्यभिमानत्यागरूपात् तत्त्वाभ्यासाद्-विवेकनिष्पत्तिर्भवति। इतरत् सर्वमभ्यासस्याङ्गमात्रमित्यर्थः। तथा च श्रुतिः—'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति[3]', 'स एष आत्मा नेति नेती'त्यादिरिति[4]।

अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते[5]॥

इति। यथा—

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥
जराशोकसमाविष्टं रोगायतनमातुरम्।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत्॥

---

१. १।५५ सूत्रं द्र०। सूत्रान्तरेष्वपि मतमिद प्रतिपादितम्।

२. १।५५–५७

३. बृहदा० २।३।६

४. बृहदा० ३।९।२६,।४।२।४, ४।४।२२ इत्यादिषु 'स एष नेति नेतीत्यात्मा…' इति पठ्यते (४।५।१५)

५. वायौ पठ्यते—अव्यक्तादिविशेषान्ते विकारेऽस्मिन्नचेतने। चेतनाचेतनान्यत्व-विज्ञानं ज्ञानमुच्यते (५९।५४)। अग्नि० ३७९।३ ख–४क इत्यत्रापि स्वल्प-पाठभेदेन श्लोकोऽयमुपलभ्यते; द्र० मत्स्य० १४५।५५ अपि।

नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते[1] ॥

इति । एतदेव कारिकयाऽप्युक्तम्—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्[2] ॥

इति । नास्मीत्यात्मनः कर्तृत्वनिषेधः । न मे इति सङ्गनिषेधः, नाहमिति तादात्म्यनिषेधः । केवलमित्यस्य विवरणमविपर्ययाद्विशुद्धमिति, अन्तराऽन्तरा[3] विपर्येणाविप्लुतमित्यर्थः । इदमेव केवलत्वं सिद्धिशब्देन सूत्रे प्रोक्तम् । विवेकख्यातिरविप्लवा हानोपाय[4] इति योगसूत्रेणेतादृशज्ञानस्यैव मोक्षहेतुत्वसिद्धिरिति ॥७५॥

सांख्यीय भूत-तन्मात्रादितत्त्वों के निदिध्यासनपूर्वक ज्ञान होने पर उनसे पृथक्भूत पुरुष का जो अवधारण होता है (पुरुष इन जड महदादितत्त्वों से पृथक् है—इस प्रकार) उससे विवेकज्ञान सिद्ध होता है । यह ज्ञानाभ्यास त्यागप्रधान (मैं ग्राह्य नहीं हूँ, ग्रहणादि नहीं हूँ—इत्याकार) है, इससे अन्त में विवेक (द्रष्टा-दृश्य का भेदज्ञान) का अधिगम होता है ।

विवेकसिद्धौ विशेषमाह—

**अधिकारिप्रभेदान्न नियमः[5] ॥७६॥**

मन्दाद्यधिकारिभेदसत्त्वादभ्यासे क्रियमाणेऽप्यस्मिन्नेव जन्मनि विवेकनिष्पत्तिर्भवतीति नियमो नास्तीत्यर्थः । अत उत्तमाधिकारमभ्यासपाटवेनात्मनः सम्पादयेदिति भावः ॥७६॥

अधिकारी-प्रभेद रहने के कारण 'एक जन्म के अभ्यास से (या एक निश्चित काल में) ही मुक्ति होगी' ऐसा कोई नियम निश्चित नहीं किया जा सकता है ।

विवेकनिष्पत्त्यैव निस्तारो नान्यथेत्याह—

**बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः ॥७७॥**

---

१. मनु० ६।७६–७८; अन्यत्रापि इमे श्लोकाः पठ्यन्ते, क्वचिद् पाठभेदा अवलोक्यन्ते । शान्ति० ३२९।४२–४३ इत्यत्र आद्यौ श्लोकौ पठ्येते नारदपरि० उप० ४६-४७ अपि० द्र० ।

२. चतुःषष्टितमी कारिका ।

३. अतोऽन्तरा (पाठा०) ।

४. २।२६ सूत्रम् ।

५. १।७० सूत्र–६।२२ सूत्रे (अधिकारित्रैविध्यान्न नियमः) चात्र द्रष्टव्ये । किमर्थं एकस्यैव उपदेशस्य स्थानत्रये उल्लेखः कृत इति भूमिकायां विचारितम् ।

सकृत् सम्प्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्थो मध्यमविवेकेऽपि सति पुरुषे बाधितानामपि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवतीत्यर्थः। विवेकनिष्पत्तिश्चापुनरुत्थानादसम्प्रज्ञातादेव भवतीत्यतस्तस्यां सत्यां न भोगोऽस्तीति प्रतिपादयितुं मध्यविवेकत इत्युक्तम्। मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवणमननध्यानमात्ररूप इति विभागः ॥७७॥

बाधितानुवृत्ति (प्रारब्धवश नष्ट अज्ञानादि का उदय होना) के कारण मध्यविवेकी (जिसका विवेकज्ञान सम्पूर्ण नहीं हुआ है) साधक में भी उपभोग होता है, अर्थात् ऐसे साधक के चित्त में भी क्वचित् भोगसंस्कार उदित हो सकता है। (यहाँ वासना का उदयमात्र विवक्षित है, जो योगिकृत ज्ञान-प्रचारादि-कर्मों का निमित्त होता है—यह अक्लिष्ट कर्म है)।

**जीवन्मुक्तश्च[1] ॥७८॥**

जीवन्मुक्तोऽपि मध्यविवेकावस्थ एव भवतीत्यर्थः ॥७८॥

मध्यविवेकी जीवन्मुक्त कहलाता है [भूमिका में जीवन्मुक्तस्वरूपसम्बन्धी सांख्यीय दृष्टि प्रतिपादित हुई है]।

जीवन्मुक्ते प्रमाणमाह—

**उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ॥७९॥**

शास्त्रेषु विवेकविषये गुरुशिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिरित्यर्थः। जीवन्मुक्तस्यैवोपदेष्टृत्वसम्भवादिति ॥७९॥

चूँकि अलौकिकतत्त्व-प्रतिपादक मोक्षविद्या का उपदेश देना संसारी लोगों के द्वारा सम्भव नहीं है, अतः यह स्वीकार्य होता है कि इस विद्या के उपदेशक के रूप में जीवन्मुक्त पुरुष अवश्य ही हैं।

**श्रुतिश्च ॥८०॥**

श्रुतिश्च जीवन्मुक्तेऽस्ति—

दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे।
कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद् घटः[2] ॥

---

१. भिक्षुणा विज्ञानामृतभाष्ये जीवन्मुक्तस्वरूपं व्याख्यातम् (४।१ पादो द्र०)।

२. अनिरुद्धवृत्तौ (३।८२) श्लोकोऽयम् उद्धृतः; द्र० भूमिका।

ब्रह्मैव सन् ब्रह्माप्येतीत्यादिरिति[1]। नारदीयस्मृतिरपि—

पूर्वाभ्यासबलात् कार्ये न लोको न च वैदिकः।
अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते[2] ॥ इति ॥८०॥

श्रुति से भी जीवन्मुक्त और उनके कार्य सिद्ध होते हैं।

ननु श्रवणमात्रेणाऽप्युपदेष्टृत्वं स्यात्, तत्राह—

**इतरथाऽन्धपरम्परा ॥८१॥**

इतरथा मन्दविवेकस्याप्युपदेष्टृत्वेऽन्धपरम्परापत्तिरित्यर्थः। सामग्र्येणात्मतत्त्वमज्ञात्वा चेदुपदिशेत् कस्मिश्चिदंशे स्वभ्रमेण शिष्यमपि भ्रान्तीकुर्यात्, सोऽप्यन्यं सोऽप्यन्यमित्येवमन्धपरम्परेति ॥८१॥

यदि यह न माना जाए कि तत्त्वसाक्षात्कारी जीवन्मुक्त पुरुष हैं, तो 'अन्धपरम्परा' न्याय का प्रसंग होगा, अर्थात् अन्धपरम्परा में जिस प्रकार रूपविषयक ज्ञान सत्य नहीं हो सकता, उसी प्रकार असाक्षात्कारी लोगों में भी आत्मज्ञान-सम्बन्धित अतीन्द्रिय पदार्थों का ज्ञान प्रायेण भ्रान्त ही होगा। पर यतः मोक्षशास्त्र के अभ्यास से कोई भी व्यक्ति दुःखातीत होता है, अतः मूलतः यह विद्या साक्षात्कारी जीवन्मुक्तों द्वारा उपदिष्ट हुई है, ऐसा कहना न्याय्य है।

ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात्, तत्राह—

**चक्रभमणवद् धृतशरीरः ॥८२॥**

कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव कियत्कालं चक्रं भ्रमति। एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः ॥८२॥

जिस प्रकार कुम्भकार का चक्र अपने वेगसंस्कार से कुछ काल तक स्वतः घूमता रहता है (कुम्भकार के व्यापार की निवृत्ति के बाद भी) उसी प्रकार आत्मसाक्षात्कारी जीवन्मुक्त का शरीर पूर्वसंस्कार से कुछ कालतक जीवित रहता है (इस समय योगी जीवनधारणातिरिक्त नूतन कर्म नहीं करते, पूर्वसंस्कार का क्षय ही होता रहता है) [द्र० भूमिका]।

ननु ज्ञानहेतुसम्प्रज्ञातयोगेन भोगादिवासनाक्षये कथं शरीरधारणम्? न च योगस्य संस्काराभिभावकत्वे किं मानमिति वाच्यम्, व्युत्थाननिरोध-

---

१. बृहदा० ४।४।६
२. द्र० भूमिका।

संस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणाम इति योगसूत्रत[1]स्तत्सिद्धेः। चिरकालीनस्य विषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकतया लोकेऽप्यनुभवाच्चेति; तत्राह—

**संस्कारलेशतस्तत्सिद्धिः ॥८३॥**

शरीरधारणहेतवो ये विषयसंस्कारास्तेषामल्पावशेषात् तस्य शरीरधारणस्य सिद्धिरित्यर्थः। अत्र चाविद्यासंस्कारलेशस्य सत्ता नापेक्ष्यते। अविद्याया जन्मादिरूपकर्मविपाकारम्भमात्रे हेतुत्वात्, योगभाष्ये व्यासैस्तथा व्याख्यातत्वात्[2], वीतरागजन्मादर्शनादिति न्यायाच्च[3]; न तु प्रारब्धफलककर्मभोगेऽपीति। यत्र च नियमेनाऽविद्याऽपेक्ष्यते स प्रयासविशेषरूपो भोगो मूढेष्वेवास्ति, जीवन्मुक्तानां तु भोगाभास एवेति प्रागुक्तम्। यत् तु कश्चिद्—अविद्यासंस्कारलेशोऽपि जीवन्मुक्तस्य तिष्ठतीत्याह; तन्न—धर्माधर्मोत्पत्तिप्रङ्गात्, अन्धपरम्पराप्रसङ्गात्, अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च। एतच्च ब्रह्ममीमांसाभाष्ये प्रपञ्चितमिति[4] ॥८३॥

उस समय शरीरधारणभूत जाति और आयु के संस्कार रहने के कारण उस संस्कारमात्र से शरीर-धारणरूप क्रिया चलती है—चित्तनिरोध को शाश्वतिक करना ही अवशिष्ट कर्म रहता है, अतः शरीर भी धृत रहता है।

शास्त्रवाक्यार्थमुपसंहरति—

**विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता नेतरान्नेतरात् ॥८४॥**

उक्ताया विवेकसिद्धितः परवैराग्यद्वारा सर्ववृत्तिनिरोधेन यदा निःशेषतो बाधिताबाधितसाधारण्येनाखिलदुःखं निवर्त्तते तदैव पुरुषः कृतकृत्यो भवति। नेतराज्जीवन्मुक्त्यादेरपीत्यर्थः। नेतरादिति वीप्साऽध्यायसमाप्तौ ॥८४॥

विवेकज्ञानकी पूर्णता होने पर दुःखाधार चित्त चिरकाल के लिये अपने कारण में लीन हो जाता है (चित्त अव्यक्तता को प्राप्त हो जाता है, अतः दुःख की अत्यन्त-निवृत्ति हो जाती है), यही परमपुरुषार्थ-सिद्धिरूप कृतकृत्यता है। यह कृतकृत्यता

---

१. ३।९ सूत्रम्।

२. २।१३ भाष्यं सवार्त्तिकं द्र०। ४।११ भाष्ये अन्यत्रापि चाविद्याकार्याणि विवृतानि।

३. न्यायसूत्रम् ३।१।२५

४. चतुर्थाध्याय-प्रथमपादीयं भाष्यं द्र०।

विवेकपूर्वक शाश्वत चित्तरोध से ही हो सकती है, अन्य किसी उपाय से नहीं— अन्य सभी प्रकार की अवस्थाओं में क्लेशसंस्कार किसी-न-किसी रूप में रह जाता है।

अत्यन्तलयपर्यन्तः कार्योऽव्यक्तस्य नात्मनः।
प्रोक्त एवं विवेकोऽत्र परवैराग्यसाधनम् ॥

इति विज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये वैराग्याध्यायस्तृतीयः ॥

---

## चतुर्थोऽध्यायः

शास्त्रसिद्धाख्यायिकाजात[1]मुखेनेदानीं विवेकज्ञानसाधनानि प्रदर्शनीयानीत्येतदर्थं चतुर्थाध्याय आरभ्यते ।

**राजपुत्रवत्[2] तत्त्वोपदेशात् ॥१॥**

पूर्वपादशेषसूत्रस्थविवेकोऽनुवर्त्तते । राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायत इत्यर्थः । अत्रेयमाख्यायिका—कश्चिद्राजपुत्रो गण्डर्क्षजन्मना पुरान्निःसारितः शबरेण केनचित् पोषितोऽहं शबर इत्यभिमन्यमान आस्ते; तं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति—न त्वं शबरो राजपुत्रोऽसीति । स यथा झटित्येव चण्डालाभिमानं[3] त्यक्त्वा तात्त्विकं राजभावमेवालम्बते राजाहमस्मीति । एवमेवादिपुरुषात् परिपूर्णचिन्मात्रेणाभिव्यक्तादुत्पन्नस्त्वं तस्यांश इति कारुणिकोपदेशात् प्रकृत्यभिमानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव न तु तद्विलक्षणः संसारीत्येवं स्वस्वरूपमेवालम्बत इत्यर्थः । तथा गारुडे—

यथैकहेममणिना सर्वं हेममयं जगत् ।
तथैव ज्ञातमीशेन ज्ञातेनाप्यखिलं भवेत् ॥
ग्रहाविष्टो द्विजः कश्चिच्छूद्रोऽहमिति मन्यते ।
ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा ॥
मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते ।
मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते[4] ॥ इति ॥१॥

---

१. अन्यत्याः काश्चन आख्यायिकाः भाग० ११।७-९ इत्यत्र दृश्यन्ते । आख्यायिका वाङ्मयमतिप्राचीनम्, चरकसंहितायां (शारीर० ४।४; सूत्र० १५।७), तैत्तिरीयारण्यके (१।६।३), अर्थशास्त्रादिषु च अस्य स्मरणात् । षष्टितन्त्रशास्त्रे आख्यायिकासत्ताऽसीदिति सप्ततिवाक्यतो विज्ञायते । आख्यायिकालक्षणं बहुत्र स्मर्यते (अमर० १।६।६ सर्वानन्दटीका; काव्यालङ्कारः १।२५) ।

२. बृहदारण्यकवार्त्तिके सुरेश्वर आह—तथाविद्यानिरास्येव व्याधभावनयाञ्चितः । राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ॥ (पृ० ७१ आनन्दगिरीयं व्याख्यानमत्यत्र द्र०; पृ० ९००, पृ० १८६५ अपि द्र०) ।

३. चाण्डालाभिमानं (पाठा०) ।

४. द्र० भूमिका; प्रथमश्लोके जातं—जातेनेत्यपपाठौ ।

तत्त्व संबन्धी उपदेश सुनने से विवेक की उत्पत्ति होती है। इस विषय में यह आख्यायिका है कि कोई राजपुत्र वन में ही रहने के कारण अपना प्रकृत रूप न जानकर शबर रूप में ही रहता था, पर बाद में किन्हीं अमात्यादि के उपदेश से अपने स्वरूप को पहचाना और स्वराज्य में प्रतिष्ठित हुआ। (शास्त्रादि से स्वरूप का यथार्थ परिचय जानने पर उसके अधिगम के लिये चेष्टा करने की प्रवृत्ति होती है)।

स्त्रीशूद्रादयोऽपि ब्राह्मणेन ब्राह्मणस्योपदेशं श्रुत्वा कृतार्थाः स्युरित्येतदर्थमाख्यायिकान्तरं दर्शयति—

**पिशाचवदन्यार्थोपदेशेऽपि ॥२॥**

अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्य विवेकज्ञानं जातमेवमन्येषामपि भवेदित्यर्थः ॥२॥

एक के लिये किया गया उपदेश अन्य के लिये भी उपकारी होता है, जिस प्रकार श्रीकृष्ण ने अर्जुन के लिये उपदेश किया, पर उस उपदेश को समीपस्थ किसी पिशाच ने सुन लिया जिससे उसके हृदय में उत्कृष्ट ज्ञान उत्पन्न हुआ।

यदि च सकृदुपदेशाज् ज्ञानं न जायते तदोपदेशावृत्तिरपि कर्त्तव्येतीतिहासान्तरेणाह—

**आवृत्तिरसकृदुपदेशात्[1] ॥३॥**

उपदेशावृत्तिरपि कर्तव्या छान्दोग्यादौ श्वेतकेत्वादिकं प्रत्यारुणि[2]-प्रभृतीनामसकृदुपदेशेतिहासादित्यर्थः ॥३॥

ज्ञान के दृढ़तासंपादन के लिये उपदेश की आवृत्ति (बार-बार सुनना) करनी चाहिए; देखा जाता है कि श्वेतकेतु आदि के प्रति आरुणि आदि ऋषियों ने बारबार उपदेश दिया था।

वैराग्यार्थं निदर्शनपूर्वकमात्मसङ्घातस्य भङ्गुरत्वादिकं प्रतिपादयति—

**पितापुत्रवदुभयोर्दृष्टत्वात् ॥४॥**

स्वस्य पितापुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योर्दृष्टत्वादनुमितत्वाद्वैराग्येण विवेको भवतीत्यर्थः। तदुक्तम्—

---

१. ब्रह्मसूत्रम् ४।१।१ एतदनुरूपमेव। सूत्रमिदं भास्करेण स्मृतम्—तथा च व्याससूत्रं कपिलसूत्रं चावृत्तिरसकृदुपदेशात् (ललितासहस्रनामभाष्यम् पृ० १९४)।

२. द्र० छान्दोग्य० ६।१ ख०।

आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययौ[1] । इति ॥४॥

जिस प्रकार कोई व्यक्ति अपने पिता और पुत्र को देख पाता है, उसी प्रकार अपनी उत्पत्ति और मरण को भी सभी जान सकते हैं। इस ज्ञान से वैराग्य उत्पन्न होता है जो विवेक को निष्पन्न करता है।

इतः परमुत्पन्नज्ञानस्य विरक्तस्य च ज्ञाननिष्पत्त्यङ्गान्याख्यायिकोक्तदृष्टान्तैर्दर्शयति—

**श्येनवत् सुखदुःखी त्यागवियोगाभ्याम् ॥५॥**

परिग्रहो न कर्तव्यो यतो द्रव्याणां त्यागेन लोकः सुखी वियोगेन च दुःखी भवति श्येनवदित्यर्थः। श्येनो हि सामिषः केनाप्यपहृत्यामिषाद्वियोज्य दुःखी क्रियते, स्वयं चेत् त्यजति तदा दुःखाद्विमुच्यते। तदुक्तम्—

सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः।
तदामिषं परित्यज्य स सुखं समविन्दत[2] ॥
इति। तथा मनुनाप्युक्तम्—
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते[3] ॥ इति ॥५॥

परिग्रह (अनावश्यक संचय) नहीं करना चाहिए, क्योंकि उससे दुःख की वृद्धि होती है। श्येन के पास यदि आमिष (मांस) हो तो मांसाशी प्राणी द्वारा वह मारा जाता है, पर यदि वह मांस को छोड़ देता है तो सुखी हो जाता है। द्रव्य के त्याग से दुःखबोध होता है पर उसी से परम सुख भी मिलता है (अन्य से उत्पीड़न नहीं मिलता), अतः अल्प द्रव्य का स्वामी होकर (शरीरयात्रार्थ) चित्तरोधपूर्वक सर्वत्याग करने की चेष्टा करनी चाहिए (तभी अपरिग्रह की पूर्णता होती है)।

**अहिनिर्ल्वयनीवत्[4] ॥६॥**

---

१. द्र० भूमिका।
२. भाग० ११।९।२
३. मनु० ६।७८
४. क्वचित् निर्ल्वयिनीति पठ्यते; निर्ल्वयनीत्येव साधुः पाठः, बृहदारण्यके (४।४।७) तथा दर्शनात्, व्याख्यातत्वाच्च भाष्यकारैः। नितरां लूयते स्वशरीराद् बहिः क्रियते सरीसृपै रिति निर्ल्वयनी भुजङ्गमुक्ता त्वगिति गणरत्नमहोदधिकारः (२।१४७; समीक्षात्मके संस्करणे किमपि पाठान्तरमस्य न दृश्यते)। अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति इति आत्मोपनिषद्युक्तम् (१७)।

यथाऽहि जीर्णां त्वचं परित्यजत्यनायासेन हेयबुद्ध्या तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः—जीर्णां त्वचमिवोरग इति[1] ॥६॥

जिस प्रकार सर्प अपना निर्मोक (केंचुली) ममत्वशून्य बुद्धि से छोड़ता है, उसी प्रकार अनात्मभूत प्राकृत उपाधि को भी हेय बुद्धि से छोड़ने की चेष्टा करनी चाहिए।

त्यक्तं च प्रकृत्यादिकं पुनर्न स्वीकुर्यादित्यत्राह—

**छिन्नहस्तवद्वा ॥७॥**

यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते तथैवैतत् त्यक्तं पुनर्नाभिमन्येतेत्यर्थः। वाशब्दोऽप्यर्थे ॥७॥

जिस प्रकार छिन्न हस्त को ग्रहण करने की इच्छा किसी को नहीं होती, तथैव हेयबुद्धि से त्यक्त पदार्थों को ग्रहण करने की इच्छा नहीं करनी चाहिए।

## असाधनानुचिन्तनं बन्धाय भरतवत् ॥८॥

विवेकस्य यदन्तरङ्गसाधनं न भवति स चेद्धर्मोऽपि स्यात् तथापि तदनुचिन्तनं तदनुष्ठाने चित्तस्य तात्पर्यं न कर्तव्यं यतस्तद्बन्धाय भवति विवेकविस्मारकतया भरतवत्। यथा भरतस्य राजर्षेर्धर्म्यमपि दीनानाथहरिणशावकस्य पोषणमित्यर्थः। तथा च जडभरतं प्रकृत्य विष्णुपुराणे—

चपलं चपले तस्मिन् दूरगं दूरगामिनि।
आसीच्चेतः समासक्तं तस्मिन् हरिणपोतके[2] ॥८॥

जो विवेक का साधनभूत नहीं है, उसका अनुचिन्तन करने से (चाहे वह सामान्य दृष्टि से कुछ उपादेय ही क्यों न हो) बन्धन होने की संभावना हो जाती है, जैसा कि राजर्षि भरत में देखा गया है (उन्होंने अनाथ हरिणशिशु का पालन उस पर मुग्ध होकर किया था, जिससे उनको संसारगति मिली थी)।

## बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत्[3] ॥९॥

१. रामायणम् ३।९।३२ अस्याकरस्थलमिति गार्वेसंस्करण उक्तम्। नेदमत्र दृश्यते। शान्तिपर्वणि 'विमुक्तः सर्वपापेभ्यो मुक्तत्वच इवोरग' इति पठ्यते (२५०।११)।

२. पूर्वार्धः २।१३।३० श्लोके, उत्तरार्धस्तु २।१३।२२ इत्यत्र अंशतः प्राप्यते। अत्र २।१३।२३ श्लोकोऽपि द्र०।

३. कुमारीशङ्खोपमा भागवते (११।९।५-६) द्र०।

नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात् सुखं तु कुतः साधनाभावादिति; उच्यते—चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुखमाशया पिहितं तिष्ठति तदेवाशाविगमे लब्धवृत्तिकं भवति तेजःप्रतिबद्धजलशैत्यवदिति, न तत्र साधनापेक्षा। एतदेव चात्मसुखमि[1]त्युच्यत इति ॥११॥

आशा (अयुक्त आकांक्षा) का त्याग करने पर ही कोई सुखी हो सकता है; जिस प्रकार पिङ्गला वेश्या अपने दयित को चाहने के कारण उसकी अपेक्षा करती हुई क्लिष्ट हुई थी और इस आशा को छोड़ने के बाद ही सुखी हुई थी, उसी प्रकार आशा छोड़ने पर ही कोई सुखी हो सकता है।

योगप्रतिबन्धकत्वादारम्भोऽपि भोगार्थं न कर्तव्योऽन्यथैव तदुपपत्तेरित्याह—

## अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥१२॥

सुखी भवेदिति शेषः। शेषं सुगमम्; तदुक्तम्—
गृहारम्भो हि दुःखाय न सुखाय कथञ्चन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥१२॥[2]

भोग के लिये किसी नूतन कार्य का आरम्भ साधक को नहीं करना चाहिए; साँप जिस प्रकार अन्य निर्मित बिल में ही रहकर सुखी होता है (अपने निवासार्थ कुछ न बना कर) उसी प्रकार योगी को भी रहना चाहिए।

शास्त्रेभ्यो गुरुभ्यश्च सार एव ग्राह्योऽन्यथाभ्युपगमवादादिभिरंशतोऽसारभागेऽन्योऽन्यविरोधेनार्थबाहुल्येन चैकाग्रताया असम्भवादित्याह—

## बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥१३॥

कर्त्तव्यमिति शेषः। अन्यत् सुगमम्। तदुक्तम्—
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥[3]

इति। मार्कण्डेयपुराणे च—
सारभूतमुपासीत ज्ञानं यत् स्वार्थसाधकम्।
ज्ञानानां बहुता यैषा योगविघ्नकरी हि सा ॥

---

१. चार्थे सुखम् (पाठा०)।

२. शान्ति० १७८।१०; भागवते पठ्यते—गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्मनः। सर्पः परकृतं वेश्म प्रविश्य सुखमेधते (११।९।१५)।

३. भाग० ११।८।१०

इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात्[1] ॥ इति ॥१३॥

बहुसंख्यक शास्त्रों का अध्ययन एवं गुरुओं की उपासना करने पर भी सार-ग्रहण की मनोवृत्ति रखनी चाहिए । भ्रमर जिस प्रकार पुष्प से मधुमात्र का संचय करता है, उसी प्रकार बह्वर्थ-युक्त शास्त्रों से मुख्यतः तत्त्वार्थ का ज्ञान ही संपादित करना चाहिए ।

साधनान्तरं यथा तथा भवत्वेकाग्रतयैव समाधिपालनद्वारा विवेक-साक्षात्कारो निष्पादनीय इत्याह—

**इषुकार[2]वन्नैकचित्तस्य समाधिहानिः ॥१४॥**

यथा शरनिर्माणायैकचित्तस्येषुकारस्य पार्श्वे राज्ञो गमनेनापि न वृत्त्य-न्तरनिरोधो हीयत एवमेकाग्रचित्तस्य सर्वथापि न समाधिहानिर्वृत्त्यन्तर-निरोधक्षतिर्भवति । ततश्च विषयान्तरसञ्चाराभावे ध्येयसाक्षात्कारोऽप्यवश्यं भवतीत्येकाग्रतां कुर्यादित्यर्थः । तदुक्तम्—

तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे[3] । इति ॥१४॥

साधक की सदैव एकालम्बनपरायणता (जो एकाग्र-भूमिका का मुख्य साधन है) यदि हो तो सामान्य बाधा के उपस्थित होने पर या क्लिष्ट वृत्ति के उदय होने पर समाधि की हानि (लक्ष्य से विच्युति) नहीं होती । जिस प्रकार एक एकाग्र इषुकार (बाण बनाने वाला) की एकाग्रता राजा के आगमन से भी नहीं टूटी, उसी प्रकार यहाँ भी समझना चाहिए ।

सत्यां शक्तौ ज्ञानबलाच्चेच्छास्त्रकृतनियमो वृथा लङ्घ्यते तदा ज्ञाना-निष्पत्त्याऽनर्थक्यं योगिनो भवतीत्याह—

**कृतनियमलङ्घनादानर्थक्यं लोकवत् ॥१५॥**

यः शास्त्रेषु कृतो योगिनां नियमस्तस्योल्लङ्घने ज्ञाननिष्पत्त्याख्योऽर्थो न भवति लोकवत् । यथा लोके भैषज्यादौ विहितपथ्यादीनां लङ्घने तत्तत्सिद्धिर्न भवति तद्वदित्यर्थः । अशक्त्या ज्ञानरक्षार्थं वा लङ्घने तु न ज्ञानप्रतिबन्धः ।

---

१. मार्क० ४१।१८-१९ (शास्त्रसाधकम्, इति मुद्रितपुराणपाठः) ।

२. शान्ति० १७८।१२ इत्यत्र इषुकारकथा स्मृता; भागवतेऽपि (११।९।१३) । शारीरकभाष्येऽपि दृष्टान्तोऽयं प्रदत्तः—इषुकारन्यायेन मुग्धो भविष्यति (३।२।१०) इति । द्र० बृहदारण्यकभाष्यवार्त्तिक-(१।५।१०) टीका ।

३. भाग० ११।९।१३

अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः ।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते[1] ॥

इति[2] मोक्षधर्मादिभ्यः, वसिष्ठादिस्मृतिभ्यश्च । अत एव विष्णुपुराणादौ वृथाकर्मत्यागिन एव पाषण्डतया निन्दिताः—'पुंसां जटाधरणमौण्ड्यवतां वृथैवेत्यादिनेति[3] ॥१५॥

मोक्षशास्त्रसिद्ध नियमों के लंघन करने से परमार्थ की सिद्धि नहीं होती (ज्ञानाभ्यास का उत्कर्ष नष्ट हो जाता है)। देखा जाता है कि लोक में भी औषधादि-जनित फलप्राप्ति तभी होती है जब विहित पथ्य का उल्लंघन न किया जाए। नियम-उल्लंघनपूर्वक यथारुचि साधन करने से उसका उचित फल नहीं मिलता।

नियमविस्मरणेऽप्यानर्थक्यमाह—

**तद्विस्मरणेऽपि भेकीवत् ॥१६॥**

सुगमम् । भेक्याश्चेयमाख्यायिका—कश्चिद्राजा मृगयां गतो विपिने सुन्दरीं कन्यां ददर्श । सा च राज्ञा भार्याभावाय प्रार्थिता नियमं चक्रे—यदा मह्यं त्वया जलं प्रदर्श्यते तदा मया गन्तव्यमिति । एकदा तु क्रीडया परिश्रान्ता राजानं पप्रच्छ—कुत्र जलमिति । राजापि समयं विस्मृत्य जलमदर्शयत् । तत्र सा भेकराजदुहिता कामरूपिणी भेकी भूत्वा जलं विवेश; ततश्च राजा जालादिभिरन्विष्यापि न तामविन्ददिति ॥१६॥

शास्त्रीय नियम के विस्मरण होने पर भी हानि होती है। इस विषय में आख्यायिका है कि एक सुन्दरी कन्या से किसी राजा ने किसी एक शर्त पर विवाह किया। उस शर्त को बाद में राजा विस्मृत हो गए, जिससे वह कन्या अपने पूर्वरूप (भेकीरूप) को प्राप्त हुई और राजा दुःखित हुए।

श्रवणवद् गुरुवाक्यमीमांसाया अप्यावश्यकत्व इतिहासमाह—

**नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥१७॥**

परामर्शो गुरुवाक्यतात्पर्यनिर्णायको विचारस्तं विनोपदेशवाक्यश्रवणेऽपि तत्त्वज्ञाननियमो नास्ति, प्रजापतेरुपदेशश्रवणेऽपीन्द्रविरोचनयोर्मध्ये[4]

---

1. अश्वमेध २६।१६ (ब्रह्मचारी भवत्ययमिति मुद्रितभारतपाठः)।
2. 'इति…स्मृतिभ्यश्च' इत्यस्य स्थाने क्वचित् कोशे इत्थं पठ्यते—'न पपाठ गुरुप्रोक्तं कृतोपनयनः श्रुतिम् । न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥ इत्याद्यनुगीतादिवाक्येभ्यः ।' न पपाठेति श्लोकः विष्णुपुराणे (२।१३।३९) दृश्यते।
3. विष्णु० ३।१८।१०२, द्र० ३।१८।९९ अपि।
4. छान्दोग्य० ८।७-८

विरोचनस्य परामर्शाभावेन भ्रान्तत्वश्रुतेरित्यर्थः। अतो गुरूपदिष्टस्य मननमपि कार्यमिति। दृश्यते चेदानीमप्येकस्यैव तत्त्वमस्युपदेशस्य नानारूपैरर्थे-[1] सम्भावना[2]—अखण्डत्वमवैधर्म्यलक्षणाभेदोऽविभागश्चेति ॥१७॥

केवल उपदेशश्रवण से ही कृतकृत्यता नहीं होती; बल्कि उपदेश का तात्पर्य निर्णय कर मनन करना भी आवश्यक होता है। विरोचन नामक असुर और इन्द्रदेव ने प्रजापति से समान उपदेश प्राप्त किया, पर यथावत् विचारादि न करने के कारण विरोचन भ्रान्त हुए।

अतएव च परामर्शो दृश्यत इत्याह—

**दृष्टस्तयोरिन्द्रस्य ॥१८॥**

तच्छब्देनोक्तोच्यमानयोः परामर्शः। तयोरिन्द्रविरोचनयोर्मध्ये परामर्श इन्द्रस्य दृष्टश्चेत्यर्थः[3] ॥१८॥

उपर्युक्त श्रौत आख्यायिका में यह देखा गया है कि प्रजापति से सुनने के बाद चूँकि विचारपूर्वक मनन इन्द्र ने ही किया था, अतः उनमें ही प्रकृत ज्ञान उत्पन्न हुआ।

सम्यग्ज्ञानार्थिना च गुरुसेवा बहुकालं कर्त्तव्येत्याह—

**प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात् तद्वत् ॥१९॥**

तद्वदिन्द्रस्येवान्यस्यापि गुरौ प्रणतिवेदाध्ययनसेवादीन् कृत्वैव सिद्धिस्तत्त्वार्थस्फूर्त्तिर्भवति नान्यथेत्यर्थः। तथा च श्रुतिः—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः[4] ॥ इति ॥१९॥

---

१. अर्थैः (पाठा०)।

२. तत्त्वमसीति वाक्यस्य बहवोऽर्थाः साम्प्रदायिकैः कल्पिताः, तथाहि—(१) तत्-त्वम्पदे जीव-ब्रह्मणोरैक्यम् जहदजहल्लक्षणा बलेन, (२) तत्त्वमस्यादिवाक्यं स्वरूपावबोधकम् (भास्करकृतब्रह्मसूत्रभाष्यं १।१।१); (३) स आत्मा अतत्त्वमसि इति च्छेदो मध्वमते (छान्दोग्यभाष्यं ६।१६); न्यायामृत (२।२८) च अस्य व्याख्या द्र०; (४) अभिन्नताज्ञापकमिदं वाक्यं न साम्यज्ञापकमिति निम्बार्कः (२।३।४२ भाष्यम्); (५) वल्लभकृतम् अणुभाष्यम् (२।३।२९); (६) श्रीभाष्यम् (२।३।४५); श्रीजीवकृतः तत्त्वसन्दर्भः (५२ अनुच्छेदः) चात्र द्रष्टव्याः।

३. छान्दोग्य० ८।९–१२ खण्डाः द्र०।

४. श्वेताश्व० ६।२३

सम्यक् दर्शनाकांक्षी को चाहिए कि इन्द्र की तरह वह भी गुरु में प्रणत भाव रखे और ब्रह्मचर्य एवं उपसर्पण (श्रद्धा से गुरु के पास जाकर सेवा करना) करे। दीर्घकाल तक ऐसा करने पर ही साधन में सिद्धिलाभ (तत्त्वज्ञानाधिगम) हो सकता है।

**न कालनियमो वामदेववत् ॥२०॥**

ऐहिकसाधनादेव भवतीत्यादिर्ज्ञानोदये कालनियमो नास्ति वामदेववत्। वामदेवस्य जन्मान्तरीयसाधनेभ्यो गर्भेऽपि यथा ज्ञानोदयस्तथान्यस्यापीत्यर्थः। तथा च श्रुतिः—तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति, तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीत्यादिरिति[1]। 'अहं मनुरभवमि'त्यादिकमवैधर्म्यलक्षणाभेदपरं सर्वव्यापकताख्यब्रह्मतापरं वा। 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादिस्मरणात्[2]। 'स इदं सर्वं भवती'ति त्वौपाधिकपरिच्छेदस्यात्यन्तोच्छेदपरमिति ॥२०॥

ज्ञान (आत्मज्ञान) के उदय के विषय में कोई कालनियम नहीं है। देखा जाता है कि वामदेव को गर्भ में ही ज्ञानोदय हुआ था (ऐतरेय उप० २।४।५ तथा बृहदा० १।४।१०)।

ननु सगुणोपासनाया अपि ज्ञानहेतुत्वश्रवणात् तत एव ज्ञानं भविष्यति किमर्थं दुष्करसूक्ष्मयोगचर्येति, तत्राह—

**अध्यस्तरूपोपासनात् पारम्पर्येण यज्ञोपासकानामिव ॥२१॥**

सिद्धिरित्यनुषज्यते। अध्यस्तरूपैः पुरुषाणां ब्रह्मविष्णुहरादीनामुपासनात् पारम्पर्येण ब्रह्मादिलोकप्राप्तिक्रमेण सत्त्वशुद्धिद्वारा वा ज्ञाननिष्पत्तिर्न साक्षात्। यथा याज्ञिकानामित्यर्थः ॥२१॥

सगुण-उपासना भी ज्ञान का हेतु है, अतः दुष्कर अध्यात्मयोग का अनुशीलन करना व्यर्थ है, ऐसा कहना असंगत है, क्योंकि अध्यस्त रूपों (ब्रह्मा, विष्णु, शिव आदि) की उपासना से ब्रह्मलोककी प्राप्ति होती है और सत्त्वशुद्धि के क्रमिक उत्कर्ष के अनुसार ज्ञान की निष्पत्ति होती है—चरम सिद्धि की प्राप्ति सगुण उपासना से साक्षात् रूप से नहीं होती। यज्ञकर्मकारी के लिये भी यही बात है, अर्थात् कर्म से चित्तशुद्धि होती है एवं उस सत्त्वशुद्धि के क्रमिक उत्कर्ष से विवेकपूर्वक चित्तरोध करने से परमार्थ की सिद्धि होती है।

ब्रह्मादिलोकपरम्परयापि ज्ञाननिष्पत्तौ नास्ति नियम इत्याह—

---

१. बृहदा० १।४।१०

२. गीता ११।४०

**इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥२२॥**

निर्गुणात्मन इतरस्याध्यस्तरूपस्य ब्रह्मलोकपर्यन्तस्य लाभेऽप्यावृत्तिरस्ति कुतो देवयानपथेन ब्रह्मलोकं गतस्यापि द्युपर्जन्यधरान[1]रयोषिद्रूपाग्निपञ्चके पञ्चाहुतितो जन्मश्रवणात्, छान्दोग्यपञ्चमप्रपाठके असौ वाव लोको गौतमाग्निरित्यादिनेत्यर्थः[2]। यच्च ब्रह्मलोकादनावृत्तिवाक्यं[3] तत् तत्रैव प्रायेणोत्पन्नज्ञानपुरुषविषयकमिति ॥२२॥

अध्यस्त रूपों की उपासना से ब्रह्मलोक की प्राप्ति होने पर भी संसार में पुनरावृत्ति होती है, क्योंकि देवयान पथ से ब्रह्मलोक में गमनकारी का पुनर्जन्म पञ्चाग्नि-योग (द्यु-पर्जन्य-पृथिवी-पुरुष-योषिद्रूपेण) से होता है ऐसा श्रौतमत है।

ज्ञाननिष्पत्तिर्विरक्तस्यैवेत्यत्र निदर्शनमाह—

**विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥२३॥**

विरक्तस्यैव हेयानां प्रकृत्यादीनां हानमुपादेयस्य चात्मन उपादानं भवति। यथा दुग्धजलयोरेकीभावापन्नयोर्मध्येऽसारजलत्यागेन सारभूतक्षीरोपादानं हंसस्यैव न तु काकादेरित्यर्थः ॥२३॥

जिस प्रकार हंस जलमिश्रित दुग्ध से दूध को पृथक् कर सकता है उसी प्रकार वैराग्यसंपन्न साधक हेय का हान (त्याग) एवं उपादेय का उपादान (ग्रहण) करने में दक्ष होता है।

सिद्धपुरुषसङ्गादप्येनदुभयं भवतीत्याह—

**लब्धातिशययोगाद्वा तद्वत् ॥२४॥**

लब्धोऽतिशयो ज्ञानकाष्ठा येन तत्सङ्गादप्युक्तं भवति हंसवदेवेत्यर्थः। यथाऽलर्कस्य दत्तात्रेयसङ्गमात्रादेव स्वयं विवेकः प्रादुरभूदिति[4] ॥२४॥

जिसका ज्ञान अपना चरम उत्कर्ष पर पहुँच गया है, ऐसे महापुरुष के संग से भी कोई व्यक्ति विवेक का निष्पादन कर सकने में समर्थ होता है, जिस प्रकार अलर्कनृप ने महायोगी दत्तात्रेय के संग के कारण विवेक प्राप्त किया था।

---

१. अमरेत्यपपाठः।

२. छा० ५।४।१; अष्टमखण्डं यावत् पञ्चाग्निविद्या प्रपञ्चिता।

३. द्र० विज्ञानामृतभाष्यम् (४।४।१७-२२)।

४. मार्क० ३८-४३ अ० द्र०। ध्यानयोगेनायं सिद्धिमवापेति स्मर्यते (अश्वमेध० ३०।२८-२९)।

रागिसङ्गो न कार्य इत्याह—

**न कामचारित्वं रागोपहते शुकवत् ॥२५॥**

रागोपहते पुरुषे कामतः संगो न कर्तव्यः, शुकवत्। यथा शुकपक्षी प्रकृष्टरूप इति कृत्वा कामचारं न करोति रूपलोलुपैर्बन्धनभयात् तद्वदित्यर्थः ॥२५॥

पतन की संभावना होने के कारण सकाम पुरुषों के साथ यथारुचि संग नहीं करना चाहिए। रूपलोलुपों के भय से सुन्दर शुकपक्षी यथेच्छ व्यापार नहीं करती है।

रागिसंगे तु दोषमाह—

**गुणयोगाद्बद्धः शुकवत् ॥२६॥**

तेषां संगे तु गुणयोगात् तदीयरागादियोगाद्बद्धः स्यात् शुकवदेव—यथा शुकपक्षी व्याधस्य गुणै रज्जुभिर्बद्धो भवति तद्वदित्यर्थः। अथवा गुणितया गुणलोलुपैर्बद्धो भवति शुकवदित्यर्थः। अत्रैवोक्तं सौभरिणा—

स मे समाधिर्जलवासमित्रमत्स्यस्य संगात् सहसैव नष्टः।
परिग्रहः संगकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः[1] ॥ इति ॥२६॥

रागी (सकाम) पुरुषों के साथ संग करने से उसके रागादि-गुणों का प्रभाव संगकारी पर भी पड़ता है, जिससे साधक में बन्धन होने की संभावना होती है, जिस प्रकार सुन्दर शुक पक्षी का बन्धन होता है। (गुण = रज्जु गुण से)

वैरागस्याप्युपायमवधारयति द्वाभ्याम्—

**न भोगाद्रागशान्तिर्मुनिवत् ॥२७॥**

यथा मुनेः सौभरेर्भोगान्न रागशान्तिरभूत्, एवमन्येषामपि न भवतीत्यर्थः। तदुक्तं सौभरिणैव—

आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगि[2] ॥ इति ॥२७॥

भोग करते रहने से विषयानुराग की उपशान्ति (विषयों के प्रति वैराग्यभाव) नहीं होती, जैसा कि सौभरि मुनि में देखा जाता है। पुराणों में कहा गया है कि सौभरि का चित्त प्रचुर भोग-विलास पर भी शान्त नहीं हुआ था।

अपितु—

**दोषदर्शनादुभयोः ॥२८॥**

---

१. विष्णु० ४।२।४८

२. विष्णु० ४।२।४७; परमात्मसंगीति मुद्रितपुराणपाठः।

उभयोः प्रकृतितत्कार्ययोः परिणामित्वदुःखात्मकत्वादि-दोषदर्शनादेव रागशान्तिर्भवति मुनिवदेवेत्यर्थः। सौभरेर्हि संगदोषदर्शनादेव संगे वैराग्यं श्रूयते—

दुःखं यदेवैकशरीरजन्म तथार्द्धसंख्यं तदिदं प्रसूतम्।
परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत्[1]। इति ॥२८॥

प्रकृति और उसके कार्य में दोष-दर्शन करने की शक्ति जब किसी में होती है तभी उसके राग का उपशम होता है। प्रकृति और उसके कार्य परिणामी हैं, दुःखद हैं, इत्यादि बोध होने पर ही उन पर दोष-दर्शन होता है।

रागादिदोषोपहतस्योपदेशग्रहणेऽप्यनधिकारमाह—

**न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत्[2] ॥२९॥**

उपदेशरूपं यज्ज्ञानवृक्षस्य बीजं तस्याङ्कुरोऽपि रागादिमलिनचित्ते नोत्पद्यते, अजवत्; यथाजनाम्नि नृपे भार्याशोकमलिनचित्ते वसिष्ठेनोक्तस्याप्युपदेशबीजस्य नाङ्कुर उत्पन्न इत्यर्थः[3] ॥२९॥

मलिन चित्त में उपदेश रूप बीज का प्ररोह (अंकर रूप में उद्गम) नहीं होता (राग-द्वेषयुक्त चित्त उपदेश सुनकर भी साधन मार्ग में अग्रसर नहीं हो पाता), जिस प्रकार अज (नामक नृपति) जब भार्यावियोग से दुःखित हो गए तब वसिष्ठ का उपदेश उनके चित्त को शान्त करने में समर्थ नहीं हुआ। (हमारी दृष्टि में यहाँ अज का अर्थ अंकुरजननशक्तिशून्य बीज है—द्र० भूमिका)।

किं बहुना—

**नाभासमात्रमपि मलिनदर्पणवत् ॥३०॥**

आपातज्ञानमपि मलिनचेतस्युपदेशान्न जायते विषयान्तरसङ्कारादिभिः प्रतिबन्धात्। यथा मलैः प्रतिबन्धान्मलिनदर्पणेऽर्थो न प्रतिबिम्बति तद्वदित्यर्थः[4] ॥३०॥

---

१. विष्णु० ४।२।४९ (शतार्धसंख्यमिति मुद्रितपुराणपाठः)।

२. अत्र अजेतिशब्देन अजसंज्ञानि बीजानि प्ररोहासमर्थान्येव ग्राह्याणि इति भूमिकायां विचारितम्; क्वचित् अङ्कुरवत् इति पठ्यते।

३. रामायणे अजनृपस्य नामैव वर्तते (१।७०।४३)—नाभागस्य बभूवाजः अजाद् दशरथोऽभवद् इति। रघुवंशे अजविलापो वर्णितः (अष्टमे सर्गे)।

४. एतदनन्तरं क्वचिदधिकं पठ्यते—तदुक्तं याज्ञवल्क्येन—मलिनो हि यथाऽदर्शो रूपालोकस्य न क्षमः। तथा विकलकरण आत्मा ज्ञानस्य न क्षमः (या० स्मृ० ३।१४१) इति। अविपक्वकरण इति मुद्रितस्मृतिपाठः।

जिस प्रकार समल दर्पण में प्रतिबिम्ब नहीं होता, उसी प्रकार मलिन चित्त में उपदेशहेतुक ज्ञान उत्पन्न नहीं होता।

यदि वा कथञ्चिज् ज्ञानं जायते तथाप्युपदेशानुरूपं न भवेदित्याह—

**न तज्जस्यापि तद्रूपता पङ्कजवत् ॥३१॥**

तस्मादुपदेशाज्जातस्यापि ज्ञानस्योपदेशानुरूपता न भवति सामग्र्येणानवबोधात्, पङ्कजवत्; यथा बीजस्योत्तमत्वेऽपि पङ्कदोषाद्बीजानुरूपता पङ्कजस्य न भवति तद्वदित्यर्थः। पङ्कस्थानीयं शिष्यचित्तम् ॥३१॥

मलिन चित्त में उपदेश से क्वचित् सामान्यज्ञान होने की संभावना होती है। जिस प्रकार पंक के दोष के कारण शुद्ध बीज रहने पर भी पद्म बीजानुरूप नहीं होता, उसी प्रकार चित्तस्तर के तामस होने के कारण शास्त्रोपदेश का अपेक्षित फल नहीं होता।

ननु ब्रह्मलोकादिष्वैश्वर्येणैव पुरुषार्थतासिद्ध्या किमर्थमेतावता प्रयासेन मोक्षाय ज्ञाननिष्पादनम्, तत्राह—

**न भूतियोगेऽपि कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥३२॥**

ऐश्वर्ययोगेऽपि कृतकृत्यता कृतार्थता नास्ति क्षयातिशयदुःखैरनुगमात्। उपास्यसिद्धिवत्, यथोपास्यानां ब्रह्मादीनां सिद्धियोगेऽपि न कृतकृत्यता तेषामपि योगनिद्रादौ योगाभ्यासश्रवणात्, तथैव तदुपासनया प्राप्ततदैश्वर्यस्यापीत्यर्थः। उपास्यसिद्धिवदिति वीप्साऽध्यायसमाप्तौ ॥३२॥

विभूति की प्राप्ति होने पर भी कृतकृत्यता (परम पुरुषार्थ = दुःख की आत्यन्तिक निवृत्ति) नहीं होती, क्योंकि ऐश्वर्य की त्रिगुणात्मकता के कारण उसमें क्षय आदि दोष अवश्य होते हैं; देखा जाता है कि उपास्य ब्रह्मा, विष्णु आदि देव के सिद्धियुक्त होने पर भी उनकी कृतकृत्यता नहीं होती (उनकी भी परार्धकाल में मुक्ति की बात शास्त्र में सुनी जाती है)।

अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम्।<br>
आख्यायिकाभिः सम्प्रोक्तमत्राध्याये समासतः ॥

इति विज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये आख्यायिकाध्यायश्चतुर्थः।

# पञ्चमोऽध्यायः

स्वशास्त्रसिद्धान्तः पर्याप्तः। इतः परं स्वशास्त्रे परेषां पूर्वपक्षानपाकर्तुं पञ्चमाध्याय आरभ्यते। तत्रादावादिसूत्रेऽथशब्देन (१।१ सू०) यन्मङ्गलं कृतं तद् व्यर्थमित्याक्षेपं समाधत्ते—

**मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ॥१॥**

मङ्गलाचरणं यत् कृतं तस्यैतैः प्रमाणैः कर्तव्यतासिद्धिरित्यर्थः। इतिशब्दो हेत्वन्तराकाङ्क्षानिरासार्थः ॥१॥

शास्त्रारम्भ में जो मङ्गलाचरण किया जाता है, उसके तीन हेतु हैं—शिष्टाचार, फलदर्शन (मङ्गलाचरण से ग्रन्थसमाप्ति रूप फल का होना) तथा श्रुति का आदेश।

ईश्वरासिद्धेरिति यदुक्तं (१।९२ सू०) तन्नोपपद्यते कर्मफलदातृतया तत्सिद्धेरिति ये पूर्वपक्षिणस्तान्निराकरोति—

**नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः ॥२॥**

ईश्वराधिष्ठिते कारणे कर्मफलरूपपरिणामस्य निष्पत्तिर्न युक्ता। आवश्यकेन कर्मणैव फलनिष्पत्तिसम्भवादित्यर्थः ॥२॥

कर्मफल की निष्पत्ति ईश्वर के अधिष्ठान रूप हेतु से नहीं होती; (प्राकृतिक नियमानुसार) कर्म द्वारा कर्मफल की प्राप्ति होती है [ब्रह्माण्ड की व्यक्तता में प्रजापति हिरण्यगर्भ का अधीशत्व है, पर जीवगत प्रत्येक कर्म से जो फल (सुखदुःख ही वास्तव फल हैं) उद्भूत होते हैं, उनमें ग्राह्य-ग्रहणादि ही हेतु हैं—इस फलप्राप्ति में प्रजापति का कोई संकल्प नहीं है; प्राकृतिक नियम ही फलप्राप्ति का साक्षात् हेतु है]। [द्र० भूमिका]।

ईश्वरस्य फलदातृत्वं न घटतेऽपीत्याह सूत्रैः—

**स्वोपकारादधिष्ठानं लोकवत् ॥३॥**

ईश्वराधिष्ठातृत्वे स्वोपकारार्थमेव लोकवदधिष्ठानं स्यादित्यर्थः ॥३॥

ईश्वर के अधिष्ठान से फल मिलता है, ऐसा मानने से यह भी मानना होगा कि उनमें स्वोपकार (अपने लिये कुछ करने की इच्छा) की मनोवृत्ति है, जैसा कि लोक में देखा जाता है कि स्वोपकारबुद्धि से ही कोई किसी का संचालन-नियमन आदि करता है।

भवत्वीश्वरस्याप्युपकारः, का क्षतिरित्याशङ्क्याह—

**लौकिकेश्वरवदितरथा ॥४॥**

ईश्वरस्याप्युपकारस्वीकारे लौकिकेश्वरवदेव सोऽपि संसारी स्यात्, अपूर्णकामतया दुःखादिप्रसङ्गादित्यर्थः ॥४॥

सृष्टिकर्ता ईश्वर का उपकार (अमुक जीव को अमुक सुखदुःखभोग मिले— इस प्रकार का ससंकल्प कर्म) मानने पर वे लौकिकेश्वर (शक्तिमान् संसारी व्यक्ति के सदृश) ही सिद्ध होंगे (ईश्वर में निःसंकल्पता, आप्तकामता आदि गुणों की असिद्धि प्राप्त होगी)। महदात्मा में आत्मा का अवलोकनकारी सास्मितसमाधिमान् (जिनमें विवेकख्याति की सम्यक् पूर्णता नहीं है) सर्वलोकाश्रय प्रजापति को 'लौकिकेश्वर' की तरह सोचना संगत नहीं है।

तथैव भवत्वित्याशङ्क्याह—

**पारिभाषिको वा ॥५॥**

संसारसत्त्वेऽपि चेदीश्वरस्तर्हि सर्गाद्युत्पन्नपुरुषे परिभाषामात्रमस्माकमिव भवतामपि स्यात्। संसारित्वाप्रतिहतेच्छत्वयोर्विरोधान्नित्यैश्वर्यानुपपत्तेरित्यर्थः ॥५॥

यदि लौकिकेश्वरसदृश ही ईश्वर को मान लिया जाए तो यह 'ईश्वर' प्रतिवादी का एक पारिभाषिक पदार्थ होगा, अध्यात्मविदों की परम्परा में स्वीकृत सृष्टिकर्ता ईश्वर नहीं होगा (सुतरां कर्मसिद्धि में उनका अधिष्ठान है या नहीं, इस पर विचार करना व्यर्थ होगा)।

ईश्वरस्याधिष्ठातृत्वे बाधकान्तरमाह—

**न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥६॥**

किञ्च रागं विना नाधिष्ठातृत्वं सिद्ध्यति प्रवृत्तौ रागस्य प्रतिनियतकारणत्वादित्यर्थः। उपकार इष्टार्थसिद्धिः। रागस्तूत्कटेच्छेति न पौनरुक्त्यम् ॥६॥

फलसिद्धि में अधिष्ठान रूप से साक्षात् हेतु वही चेतन जीव हो सकता है, जिसका तदनुरूप राग हो (क्योंकि संकल्प तभी उत्पन्न हो सकता है)। अध्यात्मविद्या-संमत ईश्वर में ईदृश राग (जिससे साशय संकल्प होता है) नहीं है (सार्वज्ञ्यादि से युक्त होने के कारण)।

नन्वेवमस्तु रागोऽपीश्वरे, तत्राह—

**तद्योगेऽपि न नित्यमुक्तः ॥७॥**

रागयोगेऽपि स्वीक्रियमाणे स नित्यमुक्तो न स्यात्, ततश्च ते सिद्धान्तहानिरित्यर्थः। किञ्च प्रकृतिं प्रत्यैश्वर्यं प्रकृतिपरिणामभूतेच्छादिना न सम्भवति, अन्योऽन्याश्रयात्। नित्येच्छादिकं च प्रकृतौ न युक्तं श्रुतिस्मृतिसिद्धसाम्यावस्थानुपपत्तेः। अतः प्रकारद्वयमवशिष्यते, तद्यथा—ऐश्वर्यं किं प्रधानशक्तित्वेनास्मदभिमतानामिच्छादीनां साक्षादेव चेतनसम्बन्धात्। किं वाऽयस्कान्तमणिवत् सन्निधिसत्तामात्रेण प्रेरकत्वादिति ॥७॥

ईश्वर के अधिष्ठान से जीवकृत कर्मों की फलसिद्धि होती है—ऐसा माननेवाले ईश्वर को नित्यमुक्त मानते हैं। जिसमें राग है, वह नित्यमुक्त नहीं हो सकता।

तत्राद्यं पक्षं दूषयति—

**प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥८॥**

प्रधानशक्तेरिच्छादेः पुरुषे योगात् पुरुषस्यापि धर्मसङ्गापत्तिः। तथा च स यत् तत्र पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्या[1]दिश्रुतिविरोध इत्यर्थः ॥८॥

प्रधान (प्रकृति) की जो इच्छादि शक्तियाँ (रजोगुण के कारण) हैं, तत्संबन्धाधीन ईश्वर की ईश्वरता है, ऐसा मानने पर ईश्वर में संग की आपत्ति होगी।

अन्त्ये त्वाह—

**सत्तामात्राच्चेत् सर्वैश्वर्यम् ॥९॥**

अयस्कान्तवत् सन्निधिसत्तामात्रेण चेच्चेतनैश्वर्यं तर्हि सर्वेषामेव तत्तत्सर्गेषु भोक्तॄणां पुंसामविशेषेणैश्वर्यमस्मदभिप्रेतमेव सिद्धम्, अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसर्जनादिति। ततश्चैक एवेश्वर इति भवत्सिद्धान्तहानिरित्यर्थः ॥९॥

प्रकृति के सन्निधान मात्र से ईश्वरता होती है, ऐसा कहने पर सभी आत्मा ईश्वर हो जाएँगे क्योंकि सान्निध्य सब आत्मा के साथ है। [२–९ युक्तियों का तात्पर्य भूमिका में विवृत हुआ है]।

स्यादेतत्—ईश्वरसाधकप्रमाणविरोधेनैतेऽसत्तर्का एव। अन्यथैवंविधासत्तर्कसहस्रैः प्रधानमपि बाधितुं शक्यत इति, तत्राह—

**प्रमाणाभावान्न तत्सिद्धिः ॥१०॥**

तत्सिद्धिर्नित्येश्वरे तावत् प्रत्यक्षं नास्तीत्यनुमानशब्दावेव प्रमाणे वक्तव्ये, ते च न सम्भवत इत्यर्थः ॥१०॥

---

1. बृहदा० ४।३।१६ (किञ्चित् पश्यतीति श्रुतिपाठः)।

जिस नित्यमुक्त ईश्वर को सृष्टिकर्ता के रूप में मानकर उसके अधिष्ठान से कर्मफलनिष्पत्ति की सत्ता मानी जाती है, उस प्रकार के नित्य ईश्वर में कोई प्रमाण नहीं है।

असम्भवमेव प्रतिपादयति सूत्राभ्याम्—

**सम्बन्धाभावान्नानुमानम् ॥११॥**

सम्बन्धो व्याप्तिः। अभावोऽसिद्धिः। तथा च महदादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानेष्वप्रयोजकत्वेन व्याप्यात्वासिद्ध्या नेश्वरेऽनुमानमित्यर्थः ॥११॥

ईदृश ईश्वर में कोई अनुमान नहीं है, क्योंकि 'व्याप्ति का अभाव' है। तात्पर्य यह है कि सृष्टिक्रिया के साथ नित्यमुक्त चित्त का कोई ऐसा संबन्ध नहीं है, जिससे जगत् की उत्पत्ति से नित्यमुक्त ईश्वर का अनुमान किया जा सके।

नापि शब्द इत्याह—

**श्रुतिरपि प्रधानकार्यत्वस्य ॥१२॥**

प्रपञ्चे प्रधानकार्यत्वस्यैव श्रुतिरस्ति न चेतनकारणत्वे। यथा—

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः।[1]

तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियतेत्यादिरित्यर्थः[2]। या च 'तदैक्षत बहु स्यामि'त्यादिश्चेतनकारणताश्रुतिः[3] सा सर्गादावुत्पन्नस्य महत्तत्त्वोपाधिकस्य महापुरुषस्य जन्यज्ञानपरा। किं वा बहुभवनानुरोधात् प्रधान एव कूलं पिपतिषतीतिवद् गौणी, अन्यथा 'साक्षी चेता केवलो निर्गुणश्चे'त्यादि[4]श्रुत्युक्तापरिणामित्वस्य पुरुषेऽनुपपत्तेरिति।

अयं चेश्वरप्रतिषेध ऐश्वर्ये वैराग्यार्थमीश्वरज्ञानं विनापि मोक्षप्रतिपादनार्थं च प्रौढ़िवादमात्रमिति प्रागेव व्याख्यातम्[5]; अन्यथा जीवव्यावृत्तस्येश्वरनित्यत्वादेर्गौणत्वकल्पनागौरवम्। औपाधिकानां नित्यज्ञानेच्छादीनां

---

१. श्वेताश्व० ४।५; तैः आ० १०।१० इत्यत्र पठ्यते—बह्वीं प्रजां जनयन्तीं सरूपाम्।

२. बृहदा० १।४।७

३. छान्दोग्य० ६।२।३

४. श्वेताश्व० ६।११

५. १।९२ सूत्रभाष्यं द्र०।

महदादिपरिणामानां चाङ्गीकारेण कौटस्थ्याद्युपपत्तेरित्यादिकं ब्रह्ममीमांसायां[१] द्रष्टव्यमिति[२] ॥१२॥

उपादानदृष्टि से ग्राह्य-ग्रहणरूप यह जगत् प्रधानकारणक है; गुणत्रय ही इस व्यक्त जगत् का उपादान है—ऐसी श्रुति है।

नाविद्यातो बन्ध इति (१।२०) यत् सिद्धान्तितं प्रथमपादे तत्र परमतं विस्तरतः प्रघट्टकेन दूषयति—

**नाविद्याशक्तियोगो निःसङ्गस्य ॥१३॥**

परे प्राहुः—प्रधानं नास्ति किन्तु ज्ञाननाश्यानाद्यविद्याख्या शक्तिश्चेतने तिष्ठति, तत एव चेतनस्य बन्धस्तन्नाशे च मोक्ष इति। तत्रेदमुच्यते—निःसङ्गतया चेतनस्याविद्याशक्तियोगः साक्षान्न सम्भवतीति। अविद्या ह्यन्यस्मिंस्तदाकारता, सा च विकारविशेषोऽधिकारहेतुसंयोगरूपं सङ्गं विना न सम्भवतीत्यर्थः ॥१३॥

निर्गुण पुरुष स्वभावतः असंग है, अतः अविद्यारूप शक्ति के साथ पुरुष का स्वाभाविक योग नहीं हो सकता (द्र० सूत्र १।२० भी)।

नन्वविद्यावशादेवाविद्यायोगो वक्तव्यः। तथा चापारमार्थिकत्वान्न तया संग इति तत्राह—

**तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥१४॥**

अविद्यायोगादविद्यासिद्धौ चान्योऽन्याश्रयत्वमात्माश्रयत्वम्, अनवस्था वेति शेषः ॥१४॥

अविद्या का योग भी अविद्यावश होता है, ऐसा नहीं कहा जा सकता क्योंकि ऐसा कहना न्यायदुष्ट है [द्र० भूमिका]।

ननु बीजाङ्कुरवदनवस्था न दोषायेत्याशङ्क्याह—

**न बीजाङ्कुरवत् सादिसंसारश्रुतेः ॥१५॥**

बीजाङ्कुरवदप्यनवस्था न सम्भवति पुरुषाणां संसारस्याविद्याद्यखिलानर्थरूपस्य सादित्वश्रुतेः, प्रलयसुषुप्त्यादावभावश्रवणादित्यर्थः। विज्ञान-

---

१. विज्ञानामृतभाष्यम् (१।१।४–६) द्र०।

२. प्रधानकार्यविषये भारतवचनम्—पुरुषः प्रकृतिबुद्धिर्विषयाश्चेन्द्रियाणि च। अहंकारोऽभिमानश्च समूहो भूतसंज्ञकः॥ एतस्याद्या प्रवृत्तिस्तु प्रधानात् संप्रवर्तते। (शान्ति० २०५।२४–२५)।

घन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीत्यादि[1]श्रुतिभिर्हि प्रलयादौ बुद्धिवृत्त्यभावेन तदौपाधिकाविद्याविद्याद्यखिलसंसारशून्यं चिन्मात्रत्वं पुरुषाणां सिद्धमिति। तस्मादविद्याप्याविद्यकीति वाङ्मात्रम् ॥१५॥

बीजाङ्कुर न्याय से पूर्वोक्त दोष का समाधान नहीं किया जा सकता, क्योंकि सृष्टि का आरम्भ है (प्रत्येक सर्ग के आरम्भ-नाश हैं, पर यह सर्गपरम्परा चलती रहेगी)। प्रलय में अन्तःकरण विषयाभाव से लीन हो जाता है, अतः पुनः अन्तःकरण की व्यक्तता का हेतु क्या होगा—इसका समाधान अविद्यावादी नहीं कर सकता।

नन्वस्माकमविद्या पारिभाषिकी न तु योगोक्तानात्मन्यात्मबुद्ध्यादिरूपा, तथा च भवतां प्रधानवदेवास्माकमपि तस्या अखण्डानादितया पुरुषनिष्ठत्वेऽपि नाऽसंगताहानिरित्याशङ्कायां परिकल्पितमविद्याशब्दार्थं विकल्प्य दूषयति—

**विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ॥१६॥**

यदि विद्यान्यत्वमेवाविद्याशब्दार्थस्तर्हि तस्य ज्ञाननाश्यतया ब्रह्मण आत्मनोऽपि बाधो नाशः प्रसज्यते विद्याभिन्नत्वादित्यर्थः ॥१६॥

यदि अविद्या का अर्थ 'विद्या से अन्य' है, तो ब्रह्मबाध की प्रसक्ति होगी। विद्याभिन्न अविद्या का जिस प्रकार ज्ञान से नाश होता है, उसी प्रकार विद्याभिन्न ब्रह्म का नाश भी प्राप्त होगा।

**अबाधे नैष्फल्यम् ॥१७॥**

यदि त्वविद्यारूपमपि विद्यया न बाध्येत तर्हि विद्यावैफल्यम्, अविद्यानिवर्त्तकत्वाभावादित्यर्थः ॥१७॥

इस आक्षेप के समाधान के लिये यदि कहा जाए कि विद्या से अविद्या का बाध नहीं होता तो विद्या की विफलता होगी (अविद्या की निवृत्ति न कर सकने के कारण)।

पक्षान्तरं दूषयति—

**विद्याबाध्यत्वे जगतोऽप्येवम् ॥१८॥**

यदि पुनर्विद्यया चेतने बाध्यत्वमेवाविद्यात्वमुच्यते तथा सति जगतः प्रकृतिमहदाद्यखिलप्रपञ्चस्याप्येवमविद्यात्वं स्यात्। अथात आदेशो नेति नेति[2], अस्थूलमनण्वित्या[3]दिश्रुतिभिर्मिथ्याज्ञानस्येव प्रकृत्यादेरप्यात्मनि बाधितत्वादित्यर्थः। तथा चाखिलप्रपञ्चस्यैवाविद्यात्वे सत्येकस्य ज्ञानेनाविद्यानाशादन्यैरपि

---

१. बृहदा० २।४।१२

२. बृहदा० २।३।६

३. बृहदा० ३।८।८

प्रपञ्चो न दृश्येतेति भावः। विद्यानाश्यत्वं चाविद्यात्वं वक्तुं न शक्यते, विद्यानाश्यत्वेन विद्यानाश्यग्रहासम्भवादात्माश्रयादिति ॥१८॥

यदि माना जाए कि विद्या से जो बाधित होता है वही अविद्या है तो जगत् (ग्राह्यग्रहणात्मक) भी अविद्यारूप ही होगा।

**तद्रूपत्वे सादित्वम् ॥१९॥**

भवतु वा यथाकथञ्चिद्विद्याबाध्यत्वमेवाविद्यात्वम्, तथापि तादृशवस्तुनः सादित्वमेव पुरुषेषु, न त्वनादित्वं सम्भवति। विज्ञानघन एवेत्याद्युक्तश्रुतिभिः[1] प्रलयादौ पुरुषस्य चिन्मात्रत्वसिद्धेरित्यर्थः। अस्मन्मते च प्रलये पुरुषस्यासंसारित्वेऽपि स्वतन्त्रनित्यप्रधानसंयोगात् पुनर्बन्ध उपपादितस्तथा प्रधानसंयोगेऽपि प्रागभवीयाविवेक एव वासनादृष्टादिद्वारा निमित्तमित्यप्युक्तम्। तस्माद्योगदर्शनोक्तादन्या नास्त्यविद्या, सा च बुद्धिधर्म एव न पुरुषधर्म[2] इति सिद्धम् ॥१९॥

यदि किसी प्रकार यह मान लिया जाए कि विद्याबाध्यत्व ही अविद्यात्व है, तो उस अविद्या का सादित्व भी सिद्ध होगा क्योंकि प्रलय में चित्त का लय होता है, अतः चित्तगत अविद्यारूप वृत्ति भी लीन हो जाती है। पुनः सर्गादि में अविद्या का उदय होता है—ऐसा मानने पर अविद्या को सादि मानना होगा (सांख्यमत में यह दोष नहीं है) [द्र० भूमिका]।

अत्रैवाध्याये कर्मनिमित्ता प्रधानप्रवृत्तिरिति यदुक्तं तत्र परपूर्वपक्षं समाधत्ते प्रघट्टकेन—

**न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥२०॥**

अप्रत्यक्षतया धर्मापलापो न सम्भवति प्रकृतिकार्येषु वैचित्र्यान्यथानुपपत्त्या तदनुमानादित्यर्थः ॥२०॥

यद्यपि प्रधान का परिणाम (चित्त का तारतम्यभाव) कर्मनिमित्तक है, तथापि धर्म (पुण्य, सदाचार) का अपलाप नहीं किया जा सकता, क्योंकि प्रकृति के कार्यों की विचित्रता से अप्रत्यक्ष धर्म का अनुमान होता है।

प्रमाणान्तरमप्याह—

**श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥२१॥**

---

१. बृहदा० २।४।१२

२. द्र० व्यासभाष्यं २।५

पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेत्यादिश्रुतेः[1] स्वर्गकामोऽश्वमेधेन यजेतेति[2] विध्यादिरूपाल्लिङ्गाद्योगिप्रत्यक्षादिभिश्च तत्सिद्धिरित्यर्थः ॥२१॥

श्रुति, लिङ्ग तथा योगिप्रत्यक्षादि से धर्म की सिद्धि होती है।

प्रत्यक्षाभावाद्धर्मासिद्धिरिति परस्य हेतुमाभासीकरोति—

**न नियमः प्रमाणान्तरावकाशात् ॥२२॥**

प्रत्यक्षाभावाद्वस्त्वभाव इति नियमो नास्ति प्रमाणान्तरेणापि वस्तूनां विषयीकरणादित्यर्थः ॥२२॥

प्रत्यक्ष प्रमाण न रहने से ही किसी का अस्तित्व सिद्ध नहीं होता, ऐसा कहना संगत नहीं है, क्योंकि अन्य प्रमाण (अनुमान आदि) से भी वस्तु-सत्ता की सिद्धि होती है। (अनुमानादि से धर्म की सिद्धि होती है)।

धर्मवदधर्ममपि साधयति—

**उभयत्राप्येवम् ॥२३॥**

धर्मवदधर्मेऽप्येवं प्रमाणानीत्यर्थः ॥२३॥

जिस प्रकार प्रमाण से धर्म की सिद्धि होती है, उसी प्रकार अधर्म की भी सिद्धि होती है। (२०-२३ सूत्र की अन्य व्याख्या भी हैं)।

ननु विध्यन्यथाऽनुपपत्तिरूपयाऽर्थापत्त्या धर्मसिद्धिः, सा च नास्त्यधर्मे इति कथं श्रौतलिङ्गातिदेशोऽधर्मे इति चेन्न—

**अर्थात् सिद्धिश्चेत् समानमुभयोः ॥२४॥**

यतः समानमुभयोर्धर्माधर्मयोर्लिङ्गमस्ति 'परदारान्न गच्छेदि'ति निषेधविध्यादेरेवाधर्मलिङ्गत्वादित्यर्थः ॥२४॥

यद्यपि विधि को देखकर अर्थापत्ति-प्रमाण से धर्म की सिद्धि होती है, पर अधर्म की सिद्धि नहीं होती—ऐसा कहना व्यर्थ है, क्योंकि धर्म और अधर्म के विषय में समान रूप से ज्ञापक शास्त्रवचन मिलते हैं।

ननु धर्मादिकं चेत् स्वीकृतं तर्हि पुरुषाणां धर्मादिमत्त्वेन परिणामाद्यापत्तिरित्याशङ्कां परिहरति—

---

१. बृहदा० ३।२।१३; ४।४।५ अपि द्र०।

२. तु० आश्व० श्रौ० सू० १०।६।१

**अन्तःकरणधर्मत्वं धर्मादीनाम् ॥२५॥**

आदिशब्देन वैशेषिकशास्त्रोक्ताः सर्व आत्मविशेषगुणा गृह्यन्ते। न चैव प्रलयेऽन्तःकरणाभावाद्धर्मादिकं क्व तिष्ठत्विति वाच्यम्, आकाशवदन्तःकरणस्यात्यन्तविनाशाभावात्। अन्तःकरणं हि कार्यकारणोभयरूपमिति प्रागेव व्याख्यातम्। अतः कारणावस्थे प्रकृत्यंशविशेषेऽन्तःकरणे धर्माधर्मसंस्कारादिकं तिष्ठतीति ॥२५॥

धर्म, अधर्म आदि अन्तःकरण के धर्म हैं।

स्यादेतत्—प्रकृतिकार्यवैचित्र्याच्छ्रुत्यादेश्च धर्मादिसिद्धिरिति यदुक्तम्, तदयुक्तम्। त्रिगुणात्मकप्रकृतेस्तत्कार्याणां च भवतां श्रुत्यैव बाधात्—साक्षी चेता केवलो निर्गुणश्च[1], अथात आदेशो नेति नेति[2], अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्[3] इत्यादिना। न निरोधो न चोत्पत्तिः[4], वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिना[5] चेति। तदेतत परिहरति—

**गुणादीनां च नात्यन्तबाधः ॥२६॥**

गुणानां सत्त्वादीनां तद्धर्माणां च सुखादीनां तत्कार्याणामपि महदादीनां स्वरूपतो नास्ति बाधः, किन्तु संसर्गत एव चेतने बाधोऽयस्यौष्ण्यबाधवत्। तथा कालत एवावस्थादिभिर्बाधो गुणाद्यखिलपरिणामिन इत्यर्थः ॥२६॥

सत्त्वादिगुणत्रय और उनके धर्मभूत पदार्थों का स्वरूपतः अत्यन्त बाध नहीं होता (गुण का व्यक्त परिणाम अव्यक्त हो जाता है, गुणकार्य का अभाव नहीं होता)।

कुतः पुनः स्वरूपत एव बाधो न भवति स्वप्नमनोरथादिपदार्थवदित्याकाङ्क्षायामाह—

**पञ्चावयवयोगात्[6] सुखसंवित्तिः ॥२७॥**

अत्र विशिष्य पक्षीकरणाय विवादविषयैकदेशस्य सुखमात्रस्य ग्रहणं सर्वविषयोपलक्षकम्। सुखादिसंवित्तिरितिपाठस्तु समीचीनः। पञ्चावयवाश्च

---

१. श्वेताश्व० ६।११
२. बृहदा० २।३।६
३. कठ० १।३।१५
४. माण्डूक्यकारिका २।३२, ब्रह्मबिन्दु० १०
५. छान्दोग्य० ६।१।४
६. एतत्सूत्रार्थविषये भूमिका द्रष्टव्या।

न्यायस्य प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि, तेषां योगान्मेलनात् सुखाद्यखिलपदार्थसिद्धिरित्यर्थः। प्रयोगश्चायम्—सुखं सत्, अर्थक्रियाकारित्वात्, यद्यदर्थक्रियाकारि तत् तत् सत्, यथा चेतनः, पुलकादिरूपार्थक्रियाकारि च सुखम्, तस्मात् सदिति। चेतनानां चाविकारित्वेऽपि विषयप्रकाश एवार्थक्रियेति। नास्तिकं प्रति च व्यतिरेक्यनुमानं कर्तव्यं तत्र च शशशृङ्गादिर्दृष्टान्त इति ॥२७॥

सुख ( गुणवृत्तिविशेष ) आदि का संवेदन है, यह न्यायशास्त्रीय पञ्चावयव वाक्य से सिद्ध किया जा सकता है, यथा—अर्थक्रियाकारी होने के कारण सुख सत् पदार्थ है, अर्थक्रियाकारी पदार्थ सत् होता है, सुख पुलकादि रूप अर्थक्रियाकारी है, अतः वह सत् है। (इस प्रकार यह सिद्ध होता है कि सुख दुःखाभावरूप नहीं है)।

प्रत्यक्षातिरिक्तं प्रमाणमेव न भवति व्याप्यत्वाद्यसिद्धेरिति चार्वाकः पुनः शङ्कते—

**न सकृद्ग्रहणात् सम्बन्धसिद्धिः ॥२८॥**

सकृत् सहचारग्रहणात् सम्बन्धो व्याप्तिर्न सिध्यति भूयस्त्वं चाननुगतम्। अतो व्याप्तिग्रहासम्भवान्नानुमानेनार्थसिद्धिरित्यर्थः ॥२८॥

एक बार साहचर्य देखने से किन्हीं दो पदार्थों में संबन्ध ( अविनाभावरूप संबन्ध = व्याप्ति ) की सिद्धि नहीं होती।

समाधत्ते—

**नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥२९॥**

धर्मसाहित्यं धर्मतायां साहित्यम्, सहचार इति यावत्। तथा चोभयोः साध्यसाधनयोरेकतरस्य साधनमात्रस्य वा नियतोऽव्यभिचरितो यः सहचारः स व्याप्तिरित्यर्थः। उभयोरिति समव्याप्तिपक्षे प्रोक्तम्, नियमश्चानुकूलतर्केण ग्राह्य इति न व्याप्तिग्रहासम्भव इति भावः ॥२९॥

एक पदार्थ से अन्य का या उभय के साथ उभय का जो नियत धर्मसाहित्य ( सहावस्थान = एकत्रस्थिति ) है, वह व्याप्ति कहलाता है। साध्य-साधन में साधन का जो नियतसाध्यसाहचर्य है, वह व्याप्ति है। उभय का साहचर्य समव्याप्ति स्थल में होता है, यथा—जन्यता एवं अनित्यता में।

व्याप्तिर्वक्ष्यमाणशक्त्यादिरूपं पदार्थान्तरं न भवतीत्याह—

**न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥३०॥**

नियतधर्मसाहित्यातिरिक्ता व्याप्तिर्न भवति व्याप्तित्वाश्रयस्य वस्तुनोऽपि कल्पनाप्रसङ्गात्। अस्माभिस्तु सिद्धवस्तुन एव व्याप्तित्वमात्रं क्लृप्तमित्यर्थः ॥३०॥

यह 'अव्यभिचरित संबन्ध' रूप व्याप्ति कोई पृथक् तत्त्व नहीं है ( यह कोई अतिरिक्त शक्तिरूप पदार्थ नहीं है ), यह नियत धर्मसाहित्य ही है; ऐसा न मानने पर उसके आश्रयभूत एक अन्य वस्तु की कल्पना करनी होगी।

परमतमाह—

**निजशक्त्युद्भवमित्याचार्याः ॥३१॥**

अपरे त्वाचार्या व्याप्यस्य स्वशक्तिजन्यं शक्तिविशेषरूपं तत्त्वान्तरमेव व्याप्तिरित्याहुः। निजशक्तिमात्रं तु यावद्द्रव्यस्थायितया न व्याप्तिः, देशान्तरगतस्य धूमस्यापि वह्न्यव्याप्यत्वात्। देशान्तरगमनेन च सा शक्तिर्नश्यत इति नोक्तलक्षणेऽतिव्याप्तिः। स्वमते तूत्पत्तिकालावच्छिन्नत्वेन धूमो विशेषणीय इति भावः ॥३१॥

आचार्य कहते हैं कि व्याप्ति व्याप्त का स्वशक्तिजन्य शक्तिविशेषरूप है ( भिक्षु के अनुसार यह परमत और अनिरुद्ध के अनुसार स्वमत है ) [ द्र० भूमिका ]।

**आधेयशक्तियोग इति पञ्चशिखः ॥३२॥**

बुद्ध्यादिषु प्रकृत्यादिव्याप्यताव्यवहारादाधारताशक्ति र्व्यापकताऽधेयताशक्तिमत्त्वं च व्याप्यत्वमिति पञ्चशिख इत्यर्थः ॥३२॥

पञ्चशिख का कहना है कि आधेयशक्तियोग का नाम व्याप्ति है। आधेयशक्तियोग का अर्थ है व्याप्यत्व का निश्चय—धूम स्वभावतः अग्निसहचारी है—ऐसा बोध। आधेय = आधार में रहनेवाला; यहाँ धूम।

नन्वाधेयशक्तिः किमर्थं कल्प्यते व्याप्यस्य वस्तुनः स्वरूपशक्तिरेव व्याप्तिरस्तु, तत्राह—

**न स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः ॥३३॥**

स्वरूपशक्तिस्तु नियमो व्याप्तिर्न भवति पौनरुक्त्यप्रसङ्गात्। घटः कलश इतिवद् बुद्धिर्व्याप्येत्यत्राप्यर्थाभेदेनेत्यर्थः। स्वरूपमिति वक्तव्ये शक्तिपदोपादानं व्याप्ते र्व्याप्यधर्मतोपपादनाय ॥३३॥

व्याप्ति एक शक्ति है जो वस्तु का स्वरूप है, ऐसा नहीं है, क्योंकि इससे पुनरुक्ति का प्रसंग होगा। [ द्र० भूमिका ]।

पौनरुक्त्यं स्वयमेव विवृणोति—

**विशेषणानर्थक्यप्रसक्तेः ॥३४॥**

पूर्वसूत्र एव व्याख्यातप्रायमिदम् ॥३४॥

व्याप्ति को 'स्वरूपशक्ति' मानने पर 'शक्तिमान् मल्ल' ऐसा प्रयोग नहीं होगा, 'शक्तिमान्' यह विशेषण अनर्थक और पुनरुक्त होगा। [ द्र० भूमिका ]।

दूषणान्तरमाह—

**पल्लवादिष्वनुपपत्तेश्च ॥३५॥**

पल्लवादिषु वृक्षादिव्याप्यताऽस्ति स्वरूपशक्तिमात्रन्तु तस्य लक्षणं न सम्भवति। छिन्नपल्लवेऽपि स्वरूपशक्तेरनपायेन तदानीमपि व्याप्यतापत्तेरित्यर्थः। आधेयशक्तिस्तु छेदकाले विनष्टेति न तदानीं व्याप्तिरिति भावः ॥३५॥

स्वरूपशक्तिवाद मानने पर दोष होगा, क्योंकि पल्लव ( वृक्षशाखा ) में वृक्षव्याप्यता है, अतः छिन्न पल्लव में वृक्षव्याप्यता के नाश न होने के कारण उसमें वृक्षव्याप्यता का बोध होना चाहिए, पर ऐसा नहीं होता। [ द्र० भूमिका ]।

ननु किं पञ्चशिखेन निजशक्त्युद्भवो व्याप्तिरेव नोच्यते तर्हि धूमस्य वह्न्याधेयत्वाभावाद्वह्न्यव्याप्यतापत्तिरिति, तत्राह—

**आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥३६॥**

आधेयशक्तेर्व्याप्तिसिद्धौ निजशक्त्युद्भवोऽपि व्याप्तित्वेन सिद्ध एव समानन्यायात् युक्तिसाम्यादित्यर्थः। अननुगमस्तु नानार्थशब्दवन्न दोषाय। एवं स्वमतेऽपि नानाविधसहचारा एव व्याप्तयो बोध्यः। न चैवमप्यनुमितिहेतुत्वे व्याप्तीनामननुगमः स्यादिति वाच्यम्; तृणारणिमण्यादिवत् कार्यगतवैजात्याद्युपपत्तेरिति। पञ्चावयवयोगाद् गुणादिसिद्धिरिति[1] यदुक्तं तदुपपादनाय व्याप्तिनिर्वचनेनानुमानप्रामाण्ये बाधकमपास्तम् ॥३६॥

३२वें सूत्र में व्याप्ति = आधेयशक्तियोग कहा गया है। आधेयशक्ति के सिद्ध होने पर 'निजशक्त्युद्भव' होना सिद्ध होता है, क्योंकि शक्ति-सिद्धि-पक्ष में युक्ति का साम्य है। जिस युक्ति से आधेयशक्ति का रहना सिद्ध होता है, उसीसे निज-शक्ति का उद्भव भी सिद्ध होता है। अतः यह मानना पड़ता है कि धूम और वह्नि की व्याप्तिरूप स्वीय शक्ति रहने पर भी वह आधेयशक्ति के योग के विना उद्भूत नहीं होती। [ द्र० भूमिका ]।

---

१. ५।२७ सूत्रार्थो द्रष्टव्यः।

इदानीं पञ्चावयवरूपशब्दस्य ज्ञानजनकत्वोपपत्तये शब्दशक्त्या-दिनिर्वचनेन तदनुपपत्तिरूपं शब्दप्रामाण्ये परेषां बाधकमपास्यते—

**वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः ॥३७॥**

अर्थे वाच्यताख्या शक्तिः, शब्दे वाचकताख्या शक्तिरस्ति सैव तयोः सम्बन्धोऽनुयोगितावत् । तज्ज्ञानाच्छब्देनार्थोपस्थितिरित्यर्थः ॥३७॥

शब्द और अर्थ का वाच्य-वाचक-संबन्ध है; शब्द वाचक है, अर्थ वाच्य है ।

शक्तिग्राहकाण्याह—

**त्रिभिः सम्बन्धसिद्धिः ॥३८॥**

आप्तोपदेशो वृद्धव्यवहारः प्रसिद्धपदसामानाधिकरण्यम्—इत्येतैस्त्रि-भिरुक्तसम्बन्धो गृह्यत इत्यर्थः ॥३८॥

इस संबन्ध का ज्ञान तीन उपायों से होता है; (१) आप्तोपदेश—आप्त के वाक्य से; (२) वृद्धव्यवहारपरम्परा, जैसा कि प्रयोजक वृद्ध के वाक्य से प्रयोज्य वृद्ध की प्रवृत्ति को देखकर बालक को होता है; (३) प्रसिद्ध पद का सामानाधिकरण्य—वाक्य-गत ज्ञातार्थक शब्दों के साथ पठित अज्ञातार्थक शब्दों का ज्ञान होता है ( वाक्यज्ञापित अर्थ को देखकर ) [द्र० भूमिका] ।

**न कार्ये नियम उभयथा दर्शनात् ॥३९॥**

स च शक्तिग्रहः कार्य एव भवतीति नियमो नास्ति लोके कार्यवदकार्येऽपि वृद्धव्यवहारादिदर्शनादित्यर्थः । यथा हि गामानयेत्यादिकार्यपरवाक्याद् वृद्धस्य गवानयनादिव्यवहारो दृश्यते, एवमेव पुत्रस्ते जात इत्यादिसिद्धपर-वाक्यादपि पुलकादिव्यवहारो दृश्यत इति । सिद्धार्थशब्दप्रामाण्यसिद्धौ च विवेके वेदान्तप्रामाण्यं सिद्धमित्याशयः ॥३९॥

शक्तिग्रह कार्य ( साध्य ) अर्थ में ही होता है, ऐसी बात नहीं, साध्य और सिद्ध इन दोनों में शक्ति सिद्ध है । इसी दृष्टि से सिद्धार्थबोधक वेदवाक्य का प्रामाण्य माना जाता है ।

ननु भवतु लोके सिद्धे शक्तिग्रहोऽर्थप्रत्ययादिदर्शनात्, वेदे तु कथं भविष्यत्यकार्यबोधनवैयर्थ्यादिति; तत्राह—

**लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ॥४०॥**

लोके शब्दशक्तिव्युत्पन्नस्य पुरुषस्य तदनुसारेणैव वेदार्थप्रतीतिः । न हि लोके शक्तिर्भिन्ना वेदे च भिन्ना—'य एव लौकिकास्त एव वैदिकाः'

इति[1] न्यायात् । अतो लोके सिद्धार्थपरत्वसिद्धौ वेदेऽपि तत् सिद्ध्यतीत्यर्थः ॥४०॥

लौकिकशब्दार्थ में जो व्युत्पन्न है, उसको वेदार्थ की प्रतीति होती है, क्योंकि जो लौकिक शब्द हैं, वही वैदिक शब्द हैं ।

अत्र शङ्कते—

**न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्यातीन्द्रियत्वात् ॥४१॥**

ननु त्रिभिराप्तोपदेशादिभिर्वेदशब्देन शक्तिग्रहः सम्भवति वेदस्यापौरुषेयत्वेन तदर्थेष्वाप्तोपदेशाभावात् । तथा वेदार्थस्यातीन्द्रियतया तत्र वृद्धव्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य च ग्रहीतुमशक्यत्वादित्यर्थः ॥४१॥

( शंका ) वेद अपौरुषेय है ( वेद का कोई प्रथम रचयिता नहीं है ), तथा वेदार्थ अतीन्द्रिय है ( वेदप्रतिपाद्य धर्म और ब्रह्म अतीन्द्रिय हैं ), अतः वेदार्थ की प्रतीति नहीं हो सकती ।

तत्रातीन्द्रियार्थत्वमादौ निराकरोति—

**न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥४२॥**

यदुक्तं तन्न । यतो देवतोद्देश्यकद्रव्यत्यागादिरूपस्य यज्ञदानादेः स्वरूपत एव धर्मत्वं वेदविहितत्वं वैशिष्ट्यात् प्रकृष्टफलकत्वात् । यज्ञादिकं चेच्छादिरूपत्वान्नातीन्द्रियम् । न तु यज्ञादिविषयकापूर्वस्य धर्मत्वं येन वेदविहितस्यातीन्द्रियता स्यादित्यर्थः । ननु तथापि देवताद्यतीन्द्रियार्थघटितत्वमस्तीति चेन्न, अतीन्द्रियेष्वपि पदार्थतावच्छेदकेन सामान्यरूपेण प्रतीतेर्वक्ष्यमाणत्वादिति ॥४२॥

यह शंका असमीचीन है, क्योंकि वेदोक्त यज्ञादि स्वरूपतः अतीन्द्रिय नहीं हैं । याग और दान वेदविहित है, वे फलजनक होने के कारण धर्म हैं, यज्ञोत्पन्न 'अपूर्व' धर्म नहीं है, वह धर्मातिरिक्त है । यागादि इच्छा से ही कृत होते हैं, अतः वे अलौकिक, अपौरुषेय और अतीन्द्रिय नहीं हैं ।

---

१. य एव लौकिकाःशब्दास्त एव वैदिकास्त एवैषामर्था इति शबरः (बिब० इण्डिका० संस्क० ७९) । न समन्वयात् इति प्रतिशाख्य (वाज० प्रा०)-व्याख्यानावसरे उवट आह—य एव वैदिकास्त एव लौकिकास्त एव तेषामर्थाः । अनन्तदेवोऽपि—य एव वैदिकास्त एव लौकिकास्त एव तेषामर्था इत्याहात्र ।

यच्चोक्तमपौरुषेयत्वेनाप्तोपदेशाभाव इति, तदपि निराकरोति—

**निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥४३॥**

अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी याऽर्थेषु शक्तिरस्ति सैवाऽऽप्तैर्वृद्धपरम्पराभिर्व्युत्पत्त्या'स्य शब्दस्यायमर्थः' इत्येवं रूपया व्यवच्छिद्यते शिष्येभ्योऽर्थान्तराद् व्यावर्त्योपदिश्यते, न त्वाधुनिकशब्दवत् स्वयं सङ्केत्यते येन पौरुषेयत्वापेक्षा स्यादित्यर्थः ॥४३॥

वेद के अपौरुषेय होने पर भी, अर्थ में वेद की जो स्वाभाविकी शक्ति है, वही वृद्धपरम्पराजनित व्युत्पत्ति से शिष्यबुद्धि में यथार्थतः आहित होती है, अतः अपौरुषेय वेद के अर्थज्ञान में कोई बाधा नहीं होती।

ननु तथाप्यतीन्द्रियदेवताफलादिषु कथं शक्तिग्रहो वैदिकपदानां स्यात्, तत्राह—

**योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥४४॥**

प्रत्यक्षाप्रत्यक्षेषु पदार्थेषु सामान्यधर्मपुरस्कारेण तत्सिद्धिः शक्तिग्रहो भवति साधारण्येन पदानां प्रतीतिजनकत्वस्यानुभवसिद्धत्वात्। विशेषस्त्वतीन्द्रियोऽपूर्व एव वाक्यार्थो न च तस्य ग्रहणं प्रागपेक्ष्यत इत्यर्थः ॥४४॥

यद्यपि देवता और यज्ञफल अतीन्द्रिय हैं, तथापि सामान्यधर्मपुरस्कार से प्रत्यक्ष और अप्रत्यक्ष में शक्तिग्रह ( 'इस शब्द का यह अर्थ है' ऐसा ज्ञान ) होता है। (अर्थप्रतीतिजनक पद से प्रत्यक्ष-अप्रत्यक्ष अर्थ की प्रतीति होती है, और पदशक्ति सामान्य धर्मकी बोधिका है, यथा 'गो' शब्द से गोजाति का बोध—यह अर्थ भी हो सकता है )।

शब्दप्रामाण्यप्रसंगेनैव शब्दगतं विशेषमवधारयति—

**न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥४५॥**

'स तपोऽतप्यत तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्ते'त्यादि[1]श्रुतेर्वेदानां न नित्यत्वमित्यर्थः। वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि ॥४५॥

चूँकि वेद में ही कहा गया है कि वेद का निर्माण प्रजापति द्वारा किया गया है, इसलिए वेद नित्य नहीं है।

---

१. तुल० शतपथ ब्रा० ११।५।८।३; ६।१।१।८ इति च। अनिरुद्धेनेदं वाक्यमुद्धृतं-ततश्च भिक्षुणापि।

तर्हि किं पौरुषेया वेदाः, नेत्याह—

**न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् ॥४६॥**

ईश्वरप्रतिषेधादिति शेषः। सुगमम् ॥४६॥

नित्य न होने पर भी वेद पौरुषेय नहीं है, क्योंकि वेदकर्ता पुरुष का अभाव है (कर्ता का स्मरण परम्परा में न रहने के कारण)।

अपरः कर्त्ता भवत्वित्याकाङ्क्षायामाह—

**मुक्तामुक्तयोरयोग्यत्वात् ॥४७॥**

जीवन्मुक्तधुरीणो विष्णुर्विशुद्धसत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात् सहस्रशाखवेदनिर्माणायोग्यः। अमुक्तस्त्वसर्वज्ञत्वादेवायोग्य इत्यर्थः ॥४७॥

न मुक्त पुरुष वेद का प्रणेता हो सकता है (क्योंकि वह चित्त का रोध करता है) और न बद्ध पुरुष ही प्रणेता हो सकता है (वेदप्रतिपाद्य सूक्ष्मतम विषय का ज्ञान बद्धचित्त को नहीं हो सकता)।

नन्वेवमपौरुषेयत्वान्नित्यत्वमेवागतम्, तत्राह—

**नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥४८॥**

स्पष्टम् ॥४८॥

जिस प्रकार अङ्कुरादि अनित्य हैं, पर पौरुषेय (पुरुषकृत) नहीं, उसी प्रकार वेद अनित्य (उदय-लय-शील) है, पर पौरुषेय नहीं है।

नन्वङ्कुरादिष्वपि कार्यत्वेन घटादिवत् पौरुषेयत्वमनुमेयम्, तत्राह—

**तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥४९॥**

यत् पौरुषेयं तच्छरीरजन्यमिति व्याप्तिर्लोके दृष्टा तस्या बाधादिरेवं सति स्यादित्यर्थः ॥४९॥

जो जो पौरुषेय है वह वह शरीरधारी प्राणी द्वारा कृत (अनित्य) है—यह नियम मानकर यदि कहा जाए कि वेद चूँकि अपौरुषेय है इसलिए वह नित्य है, तो ऐसा कहना बाधित है, क्योंकि अंकुर अपौरुषेय होता हुआ भी अनित्य है। (नित्य = अपरिणामी)।

नन्वादिपुरुषोच्चरितत्वाद्वेदा अपि पौरुषेया एवेत्याह—

**यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥५०॥**

दृष्ट इवादृष्टेऽपि यस्मिन् वस्तुनि कृतबुद्धिर्बुद्धिपूर्वकत्वबुद्धिर्जायते तदेव पौरुषेयमिति व्यवह्रियत इत्यर्थः। एतदुक्तं भवति—न पुरुषोच्चरिततामात्रेण पौरुषेयत्वं श्वासप्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयत्वव्यवहाराभावात्, किन्तु बुद्धिपूर्वकत्वेन; वेदास्तु निःश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयम्भुवः सकाशात् स्वयं भवन्ति; अतो न ते पौरुषेयाः। तथा च श्रुतिः—तस्यैतस्य महतो भूतस्य निःश्वसित[1]मेतद्यदृग्वेद[2] इत्यादिरिति ॥५०॥

पौरुषेय उसको कहा जाता है जिसके अदृष्ट होने पर भी 'वह बुद्धिपूर्वक रचित है' ऐसा बोध ज्ञाता में उत्पन्न होता है (वेद के ज्ञान में वह पुरुषकृत है, ऐसा बोध उत्पन्न नहीं होता, अतः वह अपौरुषेय है)।

नन्वेवं यथार्थवाक्यार्थज्ञानपूर्वकत्वाच्छुकवाक्यस्येव वेदानामपि प्रामाण्यं न स्यात्, तत्राह—

**निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥५१॥**

वेदानां निजा स्वाभाविकी या यथार्थज्ञानजननशक्तिस्तस्या मन्त्रायुर्वेदादावभिव्यक्तेरुपलम्भादखिलवेदानामेव स्वत एव प्रामाण्यं सिद्ध्यति न वक्तृयथार्थज्ञानमूलकत्वादिनेत्यर्थः। तथा च न्यायसूत्रम्—मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमिति[3] ॥५१॥

वेद का जो अपना स्वाभाविक ज्ञानजननशक्ति है, उससे वेद का स्वतः प्रामाण्य सिद्ध होता है।

गुणादीनाञ्च नात्यन्तबाधः (५।२६) इति प्रतिज्ञायां न्यायेन सुखादिसिद्धेरित्येको हेतुरुपन्यस्तः प्रपञ्चितश्च[4]। साम्प्रतं तस्यामेव हेत्वन्तरमाह—

**नासतः ख्यानं नृशृङ्गवत्[5] ॥५२॥**

आस्तां तावत् पञ्चावयवेन सुखादिसिद्धिः। ज्ञानमात्रादपि तत्सिद्धिः। अत्यन्तासत्त्वे सुखादीनां ज्ञानमेव नोपपद्यते नरशृङ्गादीनामभानादित्यर्थः।

---

१. निश्वसित (पाठा०)।
२. बृहदा० २।४।१०; ४।५।११
३. न्यायसूत्रं २।१।६७
४. केषुचित् संस्करणेषु 'गुणादीनां' 'प्रपञ्चितश्च' इत्यंशः ५१ सूत्रभाष्यान्तर्गतत्वेन मुद्रितः। अस्मन्मते तु अंशोऽयं ५२ सूत्रपातनिकारूप एव।
५. तदुक्तं सांख्यसूत्रे नासतःख्यातिः नृशृङ्गवत्, नानिर्वचनीयस्य तदभावात्, नान्यथाख्यातिः स्ववचोव्याघातादिति (मञ्जूषा पृ० २२९ सभापतिसंस्क०)।

तथा च ब्रह्मसूत्रम्—नाभाव उपलब्धेरिति[1]। शुक्तिरजतस्वप्नमनोरथादौ च मनःपरिणामरूप एवार्थः प्रतीयते नात्यन्तासन्निति वक्ष्यति ॥५२॥

असत् (अविद्यमान) वस्तु का ज्ञान नहीं होता, जिस प्रकार नरशृंग का ज्ञान नहीं होता (अतः ज्ञात होने के कारण गुण-गुणधर्मादि की सत्ता है); स्वप्नादि में मानस संस्कार का ज्ञान होता है, जो नरशृंगवत् अलीक नहीं है)।

नन्वेवं गुणादिरत्यन्तं सन्नेव भवतु तथा च नात्यन्तबाध इत्यन्तपद-वैयर्थ्यमिति; तत्राह—

**न सतो बाधदर्शनात् ॥५३॥**

अत्यन्तसतोऽपि गुणादेर्भानं न युक्तम्, विनाशादिकाले बाधदर्शनात्। चैतन्ये भासमानस्य जगतश्चैतन्य एव बाधदर्शनाच्च। अथात आदेशो नेति नेति[2], नेह नानास्ति किञ्चन[3], यत्र देवा न देवा माता न मातेत्यादि[4]श्रुतिभिर्न्यायैश्चेत्यर्थः ॥५३॥

जो अत्यन्त सत् है, उसका भी बाध (अदर्शन) होता है; सत् गुणत्रय अव्यक्तावस्था में अलक्ष्यीभूत हो जाता है।

नन्वेवमपि सदसद्भ्यां भिन्नमेव जगद्भवतु, तथाप्यत्यन्तबाधप्रतिषेधो-पपत्तिरिति; तत्राह—

**नानिर्वचनीयस्य तदभावात् ॥५४॥**

सत्त्वेनासत्त्वेन चानिर्वचनीयम्, तादृशस्यापि भानं न घटते तदभावात्, सदसद्भिन्नवस्त्वप्रसिद्धेरित्यर्थः। दृष्टानुसारेणैव कल्पनाया औचित्यादिति भावः ॥५४॥

'अनिर्वचनीय' नामक किसी पदार्थ का मान नहीं होता है; ज्ञात पदार्थ या तो विद्यमान (सत्) होगा या अविद्यमान (असत्) होगा या 'विपर्यस्तज्ञान' मानना होगा। ज्ञात वस्तु के लिये 'सत् भी नहीं कहा जा सकता, असत् भी नहीं कहा जा सकता' ऐसा कहना अज्ञानमूलक है, अतः 'अनिर्वचनीय' नामक कोई पदार्थ नहीं है।

---

१. २।२।२८

२. बृहदा० २।३।६

३. बृहदा० ४।४।१९

४. ब्रह्मोप० (२) इत्यत्र पठ्यते—यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता···। बृहदारण्यके च—अत्र पिता ऽपिता भवति माता ऽमाता लोका अलोका देवा अदेवा वेदा अवेदा···(४।३।२२)।

नन्वेवं किमन्यथाख्यातिरेवेष्टा; नेत्याह—

**नाऽन्यथाख्यातिः स्ववचोव्याघातात् ॥५५॥**

अन्यद्वस्त्वन्यरूपेण भासत इत्यपि न युक्तं स्ववचोव्याघातात्। अन्यत्रान्यरूपस्य नृशृङ्गतुल्यत्वमन्यथा शब्देनोच्यतेऽन्यथा च तस्य भानमुच्यत इति स्ववच एव व्याहतम्। असतो भानासम्भवस्यान्यथाख्यातिवादिभिरपि वचनादित्यर्थः। पुरोवर्त्तिन्यसत्त्वेऽन्यत्र तत्सत्ताया भानाप्रयोजकत्वमिति भावः। न च सर्वत्रासतो भाने सामग्री न सम्भवति सन्निकर्षाद्यभावादित्यतः क्वचित् सत्तामात्रमपेक्ष्यत इति वाच्यम्, अनादिवासनाधाराया एव भ्रमहेतुत्वसम्भवादिति ॥५५॥

'अन्यथाख्याति' संगत नहीं है, क्योंकि ऐसा मानने पर अपने वचन का ही विरोध उपस्थित होता है। अन्यथा ख्याति = एक वस्तु का अन्य वस्तु के रूप में ज्ञान (भूमिका में ख्यातिवाद पर विचार द्रष्टव्य है)।

नात्यन्तबाध (५।२६) इति पूर्वोक्तं विवृण्वानः स्वसिद्धान्तमुपसंहरति–

**सदसत्ख्याति बाधाबाधात्[1] ॥५६॥**

सदसत्ख्यातिरेव सर्वेषां गुणादीनाम्, कुतो बाधाबाधात्, तत्र स्वरूपेणाबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्येऽस्ति यथा पटादिषु लौहित्यादेस्तद्वत्। तथाऽवस्थाभिरपि बाधोऽखिलपरिणामिनां कालादिष्वित्यर्थः।

बाधश्च प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वम्। असत्त्वं त्वभावः सोऽप्यधिकरणस्वरूप इति। न च सदसत्त्वयोर्विरोध इति वाच्यम्, प्रकारभेदेनाविरोधात्। यथाहि लौहित्यं विम्बरूपेण सत् स्फटिकगत[2]प्रतिविम्बरूपेण चासदिति दृष्टम्। यथा वा रजतं वणिग्वीथीस्थरूपेण सच्छुक्त्यध्यस्तरूपेण चासत्, तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तरूपेण चासदिति। तदुक्तम्—

> अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।
> ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥[3]

---

१. अतएव सदसत्ख्यातिर्बाधाबाधाभ्यामिति सांख्यसूत्रे उक्तम् (मञ्जूषा पृ० २२१)।

२. स्फटिकघटप्रतीत्यादि पाठान्तरं क्वचिद् दृश्यते, तदसत्।

३. द्र० भूमिका।

इति। एवमेवावस्थाभेदेनापि सदसत्त्वमविरुद्धम्। यथाहि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नप्यङ्कुराद्यवस्थाभिरसन् भवति, तथैव प्रकृत्यादिकं सदसदात्मकमिति। तदुक्तम्[1]—

अव्यक्तं कारणं यत् तन्नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः॥[2]

इति। एतच्चास्माभिर्ब्रह्ममीमांसाभाष्ये[3] योगवार्त्तिके च[4] प्रपञ्चितमिति दिक्॥५६॥

सदसत्ख्यातिवाद ही युक्त है—क्योंकि इस दृष्टि का कोई बाधक हेतु नहीं है। रजत वणिक्गृह में सत् और शुक्ति में असत् (अध्यस्त होने के कारण) ही है। इस प्रकार अवस्थाभेद से सत्त्व-असत्त्व की व्यवस्था की जा सकती है।

अयं विचारः पर्याप्तः; इदानीं शब्दविचारः प्रसङ्गागत आगन्तुकतयाऽन्ते प्रस्तूयते—

**प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः॥५७॥**

प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकपदं स्फोट इति योगैरभ्युपगम्यते[5], कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव; स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। स शब्दोऽप्रामाणिकः, कुतः प्रतीत्यप्रतीतिभ्याम्। स शब्द किं प्रतीयते न वा? आद्ये येन वर्णसमुदायेनानुपूर्वीविशेषविशिष्टेन सोऽभिव्यज्यते तस्यैवार्थप्रत्यायकत्वमस्तु किमन्तर्गडुना तेन। अन्त्ये त्वज्ञातस्फोटस्य नास्त्यर्थप्रत्यायनशक्तिरिति व्यर्थो स्फोटकल्पनेत्यर्थः॥५७॥

---

१. नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च, कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यत इति। एतत्सूत्रोक्तं च प्रपञ्चस्य सदसत्त्वं स्मर्यते—इत्यधिकः पाठः क्वचिद् दृश्यते।

२. श्लोकोऽयं बहुषु पुराणेषु दृश्यते—विष्णु० १।२।९; वायु० ४।१८।११ ब्रह्माण्ड० १।३।८-९

३. नाभाव उपलब्धेः (ब्रह्मसू० २।२।२८), भावे चोपलब्धेः (२।१।१५), सत्त्वाच्चावरस्य (२।१।१७), असद्व्यपदेशादिति चेन्न (२।१।१८), वैधर्म्याच्च न स्वप्नादिवत् (२।२।२९), सन्ध्ये सृष्टिराह हि (३।२।१) इतीमानि सूत्राणि सभाष्याण्यालोच्यानि।

४. योगवा० २।१२

५. योगसंमतस्फोटाभ्युपगमविषये ३।१७ योगसूत्रव्याख्यानानि द्रष्टव्यानि, विशेषतश्च भाष्यविवरणम्।

वाचक पद (शब्द) वस्तुतः स्फोटरूप है, ध्वनिरूप नहीं है, ऐसा कहना असंगत है, क्योंकि ध्वनि की ही प्रतीति होती है, स्फोटरूप ध्वनिव्यंग्य तत्त्व की प्रतीति नहीं होती।

पूर्वं वेदानां नित्यत्वं प्रतिषिद्धमिदानीं वर्णनित्यत्वमपि प्रतिषेधति—

**न शब्दनित्यत्वं कार्यताप्रतीतेः ॥५८॥**

स एवायं गकार इत्यादिप्रत्यभिज्ञाबलाद्वर्णनित्यत्वं न युक्तम्, उत्पन्नो गकार इत्यादिप्रत्ययेनानित्यत्वसिद्धेरित्यर्थः। प्रत्यभिज्ञा च तज्जातीयताविषयिणी, अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तेरिति ॥५८॥

शब्द (ध्वनि, कण्ठताल्वादि से जात) नित्य नहीं है, क्योंकि वह कार्य है, ऐसा ज्ञात होता है।

शङ्कते—

**पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥५९॥**

ननु पूर्वसिद्धसत्ताकस्यैव शब्दस्य ध्वन्यादिभिर्योऽभिव्यक्तिस्तन्मात्रमुत्पत्तिः प्रतीतेर्विषयः। अभिव्यक्तौ दृष्टान्तो दीपेनेव घटस्येति ॥५९॥

(शंका) यदि कहा जाए कि नित्य निरवयव प्राक्सिद्ध 'स्फोट' (शब्द) ध्वनि से अभिव्यक्त होता है, जिस प्रकार पूर्वसिद्ध अन्धकारावृत घट दीप से प्रकटित होता है—नूतन निर्मित नहीं होता।

परिहरति—

**सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥६०॥**

अभिव्यक्तिर्यद्यनागतावस्थात्यागेन वर्तमानावस्थालाभ इत्युच्यते तदा सत्कार्यसिद्धान्तः। तादृशनित्यत्वं च सर्वकार्याणामेवेति सिद्धसाधनमित्यर्थः। यदि च वर्त्तमानतया सत एव ज्ञानमात्ररूपिण्यभिव्यक्तिरुच्यते, तदा घटादीनामपि नित्यतापत्तिः। कारणव्यापारेण ज्ञानस्यैवोत्पत्तिप्रतीतिविषयत्वौचित्यादिति भावः ॥६०॥

(समाधान) पर ऐसा नहीं कहा जा सकता। क्योंकि इसमें सिद्धसाधन-दोष है [स्फोटवाद और उसका खण्डन भूमिका में विचारित हुए हैं]।

आत्माऽद्वैते पूर्वानुक्तमपि बाधकमुपन्यसनीयमित्येतदर्थमात्माऽद्वैतनिरासः पुनरारभ्यते—

**नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥६१॥**

यद्यप्यात्मनामन्योऽन्यं भेदवाक्यवदभेदवाक्यान्यपि सन्ति तथापि नाद्वैतं नात्यन्तमभेदः। अजादिवाक्यस्थैः[1] प्रकृतित्यागात्यागादिलिङ्गैर्भेदस्यैव सिद्धेरित्यर्थः। न ह्यत्यन्ताभेदे तानि लिङ्गान्युपपद्यन्ते। अभेदवाक्यानि तु साम्यादिश्रुत्यैकवाक्यतया वैधर्म्यादिलक्षणाभेदपरतयोपपद्यन्ते। अभिमानादिनिवृत्त्यन्यथानुपपत्त्यापि तत्परत्वावधारणाच्चेति ॥६१॥

आत्मा की अद्वैतता (एकसंख्यक आत्मा ही है—यह मत) नहीं है, क्योंकि हेतु से आत्मभेद की प्रतीति होती है। देखा जाता है कि कोई आत्मा बद्ध है और कोई मुक्त है, अतः आत्मा एकसंख्यक नहीं हो सकता।

आत्मनामभेदे लिङ्गं बाधकमुक्तम्। आत्मैवेदं सर्वं,[2] ब्रह्मैवेदं सर्वमिति[3] श्रुत्याऽऽत्मनोऽनात्मभिरद्वैतं तु प्रत्यक्षमपि बाधकमस्तीत्याह—

**नाऽनात्मनापि प्रत्यक्षबाधात् ॥६२॥**

अनात्मनापि भोग्यप्रपञ्चेनात्मनो नाद्वैतं प्रत्यक्षेणापि बाधात्। आत्मनः सर्वभोग्याभेदे घटपटयोरप्यभेदः स्यात् घटादेः पटाद्यभिन्नात्माभेदात्। स च भेदग्राहकप्रत्यक्षबाधित इत्यर्थः ॥६२॥

अनात्म वस्तु (भोग्य विषय) के रहने के कारण आत्माद्वैत मत असंगत है। प्रत्यक्षतः देखा जाता है कि भोग्य अनात्म-पदार्थ हैं। भोग्य और भोक्ता आत्मा का अभेद नहीं हो सकता, क्योंकि तब भोग्य पदार्थों के नानात्व का बोध भी नहीं रहेगा; नानात्व बोध का अपलाप अनुभवविरुद्ध है।

**नोभाभ्यां तेनैव ॥६३॥**

उभाभ्यां समुच्चिताभ्यामप्यात्मानात्मभ्यां नात्यन्ताभेदस्तेनैव हेतुद्वयेनेत्यर्थः ॥६३॥

आत्मा और अनात्मवस्तु का अत्यन्त अभेद नहीं हो सकता (पूर्वोक्त युक्ति के कारण)।

नन्वेवमात्मैवेदमि[4]त्यादिश्रुतीनां का गतिरिति, तत्राह—

---

१. द्र० श्वेताश्व० ४।५

२. छान्दोग्य० ७।२५।२

३. द्र० मुण्डक० २।२।११; नृसिंहतापनी ७।१७

४. छान्दोग्य० ७।२५।२

**अन्यपरत्वमविवेकानां तत्र ॥६४॥**

अविवेकानामविवेकिपुरुषान् प्रति तत्राद्वैतेऽन्यपरत्वमुपासनार्थकानुवाद इत्यर्थः। लोके हि शरीरशरीरिणोर्भोग्यभोक्त्रोश्चाविवेकेनाभेदो व्यवह्रियतेऽहं गौरो ममात्मा भद्रसेन इत्यादिः। अतस्तमेव व्यवहारमनूद्य तानेव प्रति तथोपासनां श्रुतिर्विदधाति सत्त्वशुद्ध्याद्यर्थमिति। अत एव परमार्थदशायामुपास्यानामात्मत्वं प्रतिषेधति श्रुतिः—

यन्मनसा न मनुते येनाहुर्मनो मतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते[1]॥

इत्यादिनेति ॥६४॥

किसी-किसी शास्त्रवचन में आत्माद्वैत की बात सुनी जाती है, पर ऐसा वचन अन्यपरक है (उसका तात्पर्य अन्य विषय में है)। अविवेकी (विवेकज्ञानपूर्वक जो यथावत् नहीं जान सकता) व्यक्ति में उपासना-बुद्धि की प्रतिष्ठा के लिये ईदृश आत्माद्वैत-परक वचन कहे गये हैं। शरीर-शरीरी में अविवेक से अभेद बुद्धि होती है, उस बुद्धि को मानकर श्रुति में आत्माभेदपूर्वक उपासनापरक वचन कहे गये हैं।

एकात्मवादिनां जगदुपादानकारणमपि न सम्भवतीत्याह—

**नात्माऽविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥६५॥**

केवल आत्मा आत्माश्रिता वाऽविद्या समुच्चितं वा कपालद्वयवदुभयं न जगदुपादानं सम्भवति, आत्मनोऽसङ्गत्वात्। सङ्गाख्यो हि यः संयोगविशेषस्तेनैव द्रव्याणां विकारो भवति। अतोऽसङ्गत्वात् केवलस्यात्मनोऽद्वितीयस्य नोपादानत्वं नाविद्याद्वारापि सम्भवति, असङ्गत्वेनाविद्यायोगस्य प्रागेव निरस्तत्वात्। प्रत्येकोपादानत्ववदेवोभयोपादानत्वमप्यसङ्गत्वादेवासम्भवीत्यर्थः।

यदि चाविद्या द्रव्यरूपा पुरुषाश्रिता गगने वायुवदिष्यते तदात्माद्वैतहानिः; तथा प्रकृतिरेव सेति सिद्धसाधनं च। तादृशं चाविभागेनाद्वैतमस्माकमपीष्टमेव। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मे'त्या[2]दिश्रुत्यापि चाविभागरूपमेवाद्वैतं प्रतिपाद्यते। 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति श्रुत्यन्तरात्[3]।

---

१. केनोप० १।५

२. छान्दोग्य० ६।२।१ इत्यत्र वाक्यमिदमुक्तम्। अत्र ब्रह्मपदं नास्ति। एकमेवाद्वितीयं ब्रह्म ब्रह्मासीदिति गोपालोत्तरतापिन्याम् (९)।

३. बृहदा० ४।३।२३

तथा चोक्तम्—

आसीज् ज्ञानमयोऽप्यर्थ एकमेवाविकल्पितम् ।
तयोरेकतरो ह्यर्थः प्रकृतिश्चोभयात्मिका ॥
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ।[1]

इति । अविकल्पितमविभक्तम् । तस्माद्वेदान्तानामखण्डात्माद्वैतं नार्थः । तथाप्याधुनिका वेदान्तिनोऽत्रत्य पूर्वपक्षजातमेव ब्रह्ममीमांसासिद्धान्ततया कल्पयन्ति । तत् तु ब्रह्मसूत्रानुक्तत्वेन प्रत्युत तद्विरोधेन चास्माभिस्तत्रैव निराकृतमिति । अत्र च ब्रह्ममीमांसासिद्धान्तो न दूष्यते, अपितु वेदान्तेष्वापाततः सम्भावितोऽर्थ एव निराक्रियत इति स्मर्तव्यम् । एवमुत्तरसूत्रेष्वपि ॥६५॥

केवल आत्मा या केवल अविद्या या इन दोनों का मिलन जगत् का उपादान नहीं हो सकता, क्योंकि केवल आत्मा निर्गुण-निर्धमक है (असंगता के कारण दोनों का स्वाभाविक योग नहीं हो सकता; केवल आत्मा भी निर्गुणत्व के कारण उपादानकारण नहीं हो सकता; अविद्या चित्तवृत्तिविशेष है, अतः वह अकेली ही उपादान नहीं हो सकती) ।

प्रकाशस्वरूप आत्मेति स्वयं सिद्धान्तितम् , तत्र सत्यं विज्ञानमानन्दं ब्रह्मेति[2] श्रुतेरानन्दोऽप्यात्मनः स्वरूपमिति पूर्वपक्षं निराकरोति—

**नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥६६॥**

एकधर्मिण आनन्दचैतन्योभयरूपत्वं न भवति दुःखज्ञानकाले सुखाननुभवेन सुखज्ञानयोर्भेदादित्यर्थः । न च ज्ञानविशेषः सुखमिति वक्तुं शक्यते, आत्मस्वरूपज्ञानस्याखण्डत्वात् । अत एव चैतन्यानुभवकाले सुखस्यावरणमपि वक्तुं न शक्यते । अखण्डत्वेनानन्दावरणे दुःखं जानामीत्यनुभवानुपपत्तेः । न ह्यात्मनोंऽशभेदोऽस्ति येनानन्दांशावरणेऽपि चैतन्यांशो भायादिति । न च श्रुतिबलेनैतेऽसत्तर्का इति वाच्यम्-'नानन्दं न निरानन्दमि'-त्यादिश्रुत्या[3], 'अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकमित्या'दिस्मृत्या[4] चानन्दाभावस्यापि प्रतिपादितत्वेन तर्कस्यैवात्रादर्तव्यत्वादिति ॥६६॥

---

१. द्र० भूमिका ।

२. बृहदा० ३।९।२८

३. महोपनिषद् ५।९८

४. द्र० भूमिका ।

एक (एक स्वरूप = अखण्ड स्वगतभेदहीन आत्मा) का आनन्दरूपत्व और चिद्रूपत्व संभव नहीं हैं, क्योंकि इन दोनों में भेद है। (आनन्दसत्त्वगुणमय भाव; चिद्रूपता = निर्विकार ज्ञातृत्व; ये दो अविनाभावी नहीं हैं)।

नन्वेवमानन्दरूपताश्रुतेः का गतिस्तत्राह—

**दुःखनिवृत्तेर्गौणः ॥६७॥**

दुःखनिवृत्त्याऽऽत्मनि श्रौत आनन्दशब्दो गौण इत्यर्थः। तदुक्तम्—'सुखं दुःखसुखात्यय' इति[1]। न निरानन्दमिति[2] श्रुतिस्त्वौपाधिकानन्दपरा सत्यसङ्कल्पत्वादिश्रुतिवदिति। यत् तु निरुपाधिप्रियत्वेनात्मनः सुखरूपत्वानुमानं कश्चिदाह; तन्न, दुःखाभावरूपतयापि प्रेमोपपत्तेः। सुखत्वादिवदात्मत्वस्यापि प्रेमप्रयोजकत्वाच्च, अन्यथा परसुखेऽपि प्रेमापत्तेरिति ॥६७॥

शास्त्र में निर्गुण आत्मा को आनन्दरूप कहा गया है, पर उसका तात्पर्य गौणार्थ में है, अर्थात् आत्मस्वरूप में अवस्थान होने पर दुःख की निवृत्ति होती है, अतः दुःखनिवृत्ति को लक्ष्यकर 'आनन्द' शब्द का प्रयोग किया गया है; स्वरूपतः आत्मा सुखात्मक नहीं है।

गौणप्रयोगे बीजमाह—

**विमुक्तिप्रशंसा मन्दानाम् ॥६८॥**

मन्दानज्ञान् प्रति दुःखनिवृत्तिरूपामात्मस्वरूपमुक्तिं सुखत्वेन श्रुतिः स्तौति प्ररोचनार्थमित्यर्थः ॥६८॥

दुःखनिवृत्ति (विमुक्ति) रूप आत्मस्वरूप की स्तुति (आत्मा सुखात्मक है—इस प्रकार) करने से अज्ञों की आत्मध्यान की ओर प्रवृत्ति होती है, अतः इस प्रकार का गौण प्रयोग किया गया है। (यह भी ज्ञातव्य है कि आत्मा, ब्रह्म आदि शब्द प्रायेण सगुणात्मा में भी प्रयुक्त होते हैं, और ईदृश आत्मा की आनन्दमयता संगत ही होती है)।

अन्तःकरणोपपत्तेः पूर्वोक्ताया आञ्जस्येनोपपत्तये मनोवैभवपूर्वपक्षमपाकरोति—

**न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा[3] ॥६९॥**

---

१. द्र० भूमिका।

२. २. द्र० भाष्य ५।६६

३. क्वचित् सूत्रे वास्यादिवच् चक्षुरादिवच्चेति अधिकपाठो दृश्यते।

मनसोऽन्तःकरणसामान्यस्य न विभुत्वम्, करणत्वात्, वास्यादिवत्। वाशब्दो व्यवस्थितविकल्पे। इन्द्रियत्वादप्यन्तःकरणविशेषस्य तृतीयस्य न विभुत्वमित्यर्थः। देहव्यापिज्ञानादिकं तु मध्यमपरिमाणेनैवोपपद्यत इति ॥६९॥

इन्द्रियाधीश संकल्पक मन व्यापक नहीं है, क्योंकि वह करण एवं इन्द्रिय है। मन का दैशिक अवयव नहीं है, कालिक अवयव है; मन परिच्छिन्न है, उसके उदय-व्यय-युक्त धर्म हैं, अतः वह अव्यापक है [द्र० भूमिका]।

अत्राप्रयोजकत्वशङ्कायामनुकूलतर्कमाह—

**सक्रियत्वाद् गतिश्रुतेः ॥७०॥**

आत्मनो लोकान्तरगमनश्रवणेन तदुपाधिभूतस्यान्तःकरणस्य सक्रियत्वसिद्धेर्न विभुत्वं सम्भवतीत्यर्थः ॥७०॥

चूँकि मन क्रियायुक्त है तथा इसकी गति (गमनागमन) का उल्लेख शास्त्रों में पाया जाता है, अतः मन व्यापक (अपरिच्छिन्न) नहीं है।

कार्यत्वोपपत्तये मनसो निरवयवत्वमपि निराकरोति—

**न निर्भागत्वं तद्योगाद् घटवत् ॥७१॥**

तच्छब्दः पूर्वसूत्रस्थेन्द्रियं परामृशति। मनसो न निरवयवत्वम्, अनेकेन्द्रियेष्वेकदा योगात्। किन्तु घटवन्मध्यमपरिमाणं सावयवमित्यर्थः। कारणावस्थं चान्तःकरणमण्वेवेति बोध्यम् ॥७१॥

मन निर्भाग (अवयवहीन) नहीं है, क्योंकि अनेक इन्द्रियों के साथ एक काल में उसका योग है। घट जिस प्रकार परिच्छिन्नपरिमाण अवयवी है, मन भी तादृश ही है (मन वह द्वार है, जिससे होकर बाह्येन्द्रियवाहित क्रिया अन्तरिन्द्रिय में पहुँचती है, अतः वह निरवयव नहीं हो सकता)।

मनःकालादीनां नित्यत्वं प्रतिषेधति—

**प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् ॥७२॥**

सुगमम्। कारणावस्थं चान्तःकरणाकाशादिकं प्रकृतिरेवोच्यते, न तु मनआदिकं व्यवसायाद्यसाधारणधर्माभावात् ॥७२॥

प्रकृति और पुरुष (मूल दृश्य और मूल द्रष्टा) के अतिरिक्त सब व्यक्त सत्पदार्थ अनित्य (नाना रूप में प्रतिक्षण परिणत होनेवाले) हैं। (यह सूत्र सांख्यीय मौलिक दृष्टि को दिखाता है; ईश्वर भी प्रकृति-पुरुष-समाहारभूत है, अतः वे भी अनित्य हैं—ईश्वरनिष्ठ ऐश अन्तःकरण अनित्य प्राकृत पदार्थ है, उसका लय होना अनिवार्य है; पुरुष कूटस्थनित्य है; प्रकृति परिणामी नित्य है)।

ननु—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥[१]

इत्यादिश्रुतिभिः पुम्प्रकृत्योरपि सावयवत्वादनित्यत्वमिति, तत्राह—

**न भागलाभो भागिनो निर्भागत्वश्रुतेः ॥७३॥**

भागिनः पुरुषस्य प्रधानस्य चावयवो न युज्यते निरवयवत्वश्रुतेः ।
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।[२]
इत्यादिनेत्यर्थः । उक्तश्रुतिश्चाकाशजलयोरिव पिता-पुत्रचेतनयोरिव चाविभागमात्रेणांशांशिभावं बोधयतीति ॥७३॥

प्रकृति और पुरुष का कोई अवयव नहीं है, क्योंकि श्रुति में इन दोनों को निरवयव कहा गया है ।

दुःखनिवृत्तिर्मोक्ष इत्युक्तम् (१।१ सूत्रम्), तदवधारणाय तत्र मोक्षे परेषां मतानि निराकरोति—

**नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात् ॥७४॥**

आत्मन्यानन्दरूपोऽभिव्यक्तिरूपश्च धर्मो नास्ति; स्वरूपं च नित्यमेवेति न साधनसाध्यम् । अतो नानन्दाभिव्यक्तिर्मोक्ष इत्यर्थः[३] ॥७४॥

चूँकि पुरुष निर्धर्मक है, इसलिए 'आनन्दरूप धर्म की अभिव्यक्ति मुक्ति है'—ऐसा नहीं कहा जा सकता । (किसी नूतन धर्म की अभिव्यक्ति तब होती है जब कि धर्मी द्रव्य बहुधर्मों का आश्रय हो; पुरुष धर्म-धर्मि-दृष्टि का अतीत है अतः मुक्तस्वभाव पुरुष में आनन्दरूप धर्म की अभिव्यक्ति नहीं हो सकती) ।

**न विशेषगुणोच्छित्तिस्तद्वत् ॥७५॥**

अशेषविशेषगुणोच्छेदोऽपि न मुक्तिस्तद्वत् निर्धर्मत्वादेवेत्यर्थः । ननु तर्हि दुःखनिवृत्तिरेव कथं मोक्ष उक्तो दुःखाभावस्यापि धर्मत्वादिति चेन्न, अस्माभिर्भोग्यतासम्बन्धेनैव दुःखाभावस्य पुरुषार्थतावचनादिति ॥७५॥

जो कहते हैं कि आत्मगत असाधारण गुणों का उच्छेद होना ही मुक्ति है—उनका मत असंगत है, क्योंकि आत्मा में स्वरूपतः कोई भी गुण नहीं है ।

---

१. श्वेताश्व० ४।१०

२. श्वेताश्व० ६।१९

३. अधिकभाष्यपाठविषये भूमिका द्र० ।

## न विशेषगतिर्निष्क्रियस्य ॥७६॥

ब्रह्मलोकगतिरपि न मोक्षः। आत्मनो निष्क्रियत्वेन गत्यभावात्। लिङ्गशरीराभ्युपगमे च न मोक्षो घटत इत्यर्थः ॥७६॥

विशेष गति (यथा ब्रह्मादिलोकों में गति या प्रकृतिलयादि गतियाँ) भी मोक्ष नहीं हैं, क्योंकि गतिरूप क्रिया जड़ प्रकृति की ही होती है, चितिरूप आत्मा की नहीं।

## नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥७७॥

क्षणिकज्ञानमेवात्मा तस्य विषयाकारता बन्धस्तद्वासनाख्योपरागस्य नाशो मोक्ष इति यन्नास्तिकमतं तदपि न, क्षणिकत्वादिदोषेण मोक्षस्यापुरुषार्थत्वादित्यर्थः ॥७७॥

ज्ञान की विषयाकारप्राप्ति का उच्छेद–(वासनारूप विषय संस्कार का नाश) मात्र मोक्ष नहीं है, क्योंकि इस मत में क्षणिकत्वादि-दोष हैं [द्र० भूमिका]।

नास्तिकस्यैव मुक्त्यन्तरं दूषयति—

## न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥७८॥

ज्ञानरूपस्यात्मनः सामग्र्येणैवोच्छित्तिरपि न मोक्षः, आत्मनाशस्य लोके पुरुषार्थत्वादर्शनादिभ्य इत्यर्थः ॥७८॥

सब कुछ (विषय, विषयज्ञान और विषय-ज्ञाता) का उच्छेद होना मोक्ष नहीं है, क्योंकि इस मत में अपुरुषार्थत्वादि-दोष होते हैं, [द्र० भूमिका]।

## एवं शून्यमपि ॥७९॥

ज्ञाने ज्ञेयात्मकाखिलप्रपञ्चनाशोऽप्येवमात्मनाशेनापुरुषार्थत्वान्न मोक्ष इत्यर्थः ॥७९॥

पूर्वोक्त युक्ति से यह भी सिद्ध होता है कि अभावरूप शून्यावस्था भी मोक्ष नहीं है (न किसी भाव पदार्थ का अभाव होता है और न अभावमात्र को कोई परम पुरुषार्थ रूप में चाहता ही है)।

## संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥८०॥

प्रकृष्टदेशधनाङ्गनादिस्वाम्यमपि न मोक्षः, यतः—

न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः ॥८४॥

सुगमा योजना । पूर्वं[1] चैतद् व्याख्यातम् ॥८४॥

इन्द्रियों की प्रकृति (उपादानकारण) पंचभूत रूप ग्राह्य द्रव्य नहीं हो सकती, क्योंकि श्रुति में कहा गया है कि इन्द्रियों का उपादान अहंकार है (अहंकार में ही इन्द्रियों को नियत किया जाता है, अतः इन्द्रियों का उपादान अहंकार है)।

शक्त्यादिकमपि तत्त्वमस्तीत्याशयेन परेषां पदार्थप्रतिनियमं तन्मात्रज्ञानान्मुक्तिं च निराकरोति—

न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥८५॥

द्रव्यगुणकर्मसामान्यविशेषसमवाया एव पदार्था इति यद्वैशेषिकाणां नियमो यश्च तज्ज्ञानान्मोक्ष इत्यभ्युपगमः, सोऽप्रामाणिकः; शक्त्याद्यतिरेकात्, पृथिव्यादिनवद्रव्येभ्यः प्रकृतेरतिरेकाच्चेत्यर्थः। गन्धादिमत्त्वेनैव हि पृथिव्यादिव्यवहारो गन्धादिश्च साम्यावस्थायां नास्ति। अतः पृथिवीत्वादिजातिरपि घटत्वादिवत् कार्यमात्रवृत्तिरिति। तदुक्तम्—

नाहो न रात्रिर्न नभो न भूमिर्नासीत् तमो ज्योतिरभून्न चान्यत्।
शब्दादिबुद्ध्याद्युपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत्[2] ॥
इति ॥८५॥

वैशेषिकसंमत द्रव्य, गुण, कर्म आदि छह ही पदार्थ हैं, जिनके बोध से मुक्ति होती है, ऐसा नहीं कहा जा सकता (चित्तातिरिक्त चिति का ज्ञानपूर्वक संस्कारादिनाश के साथ चित्त का शाश्वत रोध होने पर ही चित्त दुःखातीत हो सकता है—यह सांख्यीय युक्तिप्रणाली से सिद्ध होता है)। वैशेषिकशास्त्र में इस चिति का कोई प्रतिपादन नहीं है।

षोडशादिष्वप्येवम् ॥८६॥

न्यायपाशुपतादिमतेषु षोडशादिष्वपि न नियमो न वा तन्मात्रज्ञानान्मुक्तिः, उक्तरूपेण पदार्थाधिक्यादित्यर्थः। अस्मन्मते तु नित्यं पदार्थद्वयमेव। नित्यानित्यसाधारणास्तु पदार्थाः पञ्चविंशतिरेवेति नियमः। पञ्चविंशतिद्रव्येष्वेव गुणकर्मसामान्यशक्त्यादीनामन्तर्भाव इति ॥८६॥

---

१. सांख्यसूत्रम् २।२०

२. विष्णु० १।२।२३ (श्रोत्रादिबुद्ध्यानुपलभ्यमेकम् इति मुद्रितपुराणपाठः)।

प्रमाण, प्रमेय आदि न्यायशास्त्रोक्त षोडश पदार्थों के ज्ञान से मुक्ति होती है, यह कहना भी पूर्वोक्त युक्ति से खण्डित हो जाता है। (न्याय में भी चिति का प्रतिपादन नहीं है)।

पञ्चभूतानां पूर्वोक्तकार्यत्वोपपत्त्यर्थं वैशेषिकाद्यभ्युपगतं पार्थिवाद्यणुनित्यत्वमपाकरोति—

**नाणुनित्यता तत्कार्यत्वश्रुतेः ॥८७॥**

पृथिव्याद्यणूनां नित्यता नास्ति तेषामणूनामपि कार्यत्वश्रुतेरित्यर्थः। यद्यप्यस्माभिः सा श्रुतिर्न दृश्यते काललुप्तत्वादिना तथाप्याचार्यवाक्यान्मनुस्मरणाच्चानुमेया। यथा मनुः—

अण्व्यो मात्रा विनाशिन्यो दशार्धानां च याः स्मृताः।
ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः[1] ॥

इति। दशार्द्धानां पृथिव्यादिपञ्चभूतानाम्। न चात्र वाक्येऽणुशब्देन द्व्यणुकाद्येव ग्राह्यमिति वाच्यम्, सङ्कोचे प्रमाणाभावादिति; अत्राणुशब्दो भूतपरमाणुपर एव। वैशेषिकाद्यभिमतं च तस्य नित्यत्वमनेन सूत्रेण निराक्रियते, न त्वणुपरिमाणद्रव्यसामान्यस्य नित्यत्वं रजोगुणस्य चाञ्चल्यानुरोधेनाणुत्वसिद्धेः। मध्यमपरिमाणत्वे नित्यत्वस्य विभुत्वे च क्रियाया अनुपपत्तेरिति ॥८७॥

अणु नित्य नहीं है, क्योंकि श्रुति में कहा गया है कि वह कार्य है (यहाँ वैशेषिकानुमत अणु का ग्रहण है, सांख्यीय तन्मात्ररूप अणु का नहीं)।

ननु निरवयवस्य परमाणोः कथं कार्यत्वं घटते, तत्राह—

**न निर्भागत्वं कार्यत्वात् ॥८८॥**

श्रुतिसिद्धकार्यत्वान्यथानुपपत्त्या पृथिव्याद्यणूनां न निरवयवत्वमित्यर्थः। अत एव तन्मात्राख्यसूक्ष्मद्रव्याण्येव पार्थिवाद्यणूनामवयवा इति पातञ्जलभाष्ये व्यासदेवैः प्रतिपादितम्[2]। पृथिवीपरमाणुर्जलपरमाणुरित्यादिव्यवहारस्तु पृथिव्यादीनामपकर्षकाष्ठाभिप्रायेणैव। अतः प्रकृतिपर्यन्तमणुत्वेऽपि न क्षतिरिति। यद्यपि तन्मात्रेष्वपि गन्धाद्यस्ति तथापि तस्याप्रत्यक्षतया न

१. मनु १।२७
२. द्र० पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः आप्यस्य रसतन्मात्रम्… (१।४५ भाष्यम्); अथ किमेषां सूक्ष्मरूपम्? तन्मात्रं भूतकारणम्। तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्मा… इत्येवं सर्वतन्मात्राणि इत्येतत् तृतीयम् (३।४४ भाष्यम्)।

पृथिवीत्वादिनियामकत्वम्, व्यक्तगन्धादेरेव पृथिवीत्वादिसिद्धेः। अतो न तन्मात्राणि पृथिव्यादयः। तेषु च सूक्ष्मभूतव्यवहारो भूतसाक्षात्कारणत्वादिनैवेत्यपि बोध्यम् ॥८८॥

अणु को निरवयव माना जाता है, पर ऐसा नहीं हो सकता, क्योंकि वह कार्य है; जो-जो कार्य होता है, वह-वह सावयव होता है। (अवयवी द्रव्य की अवयव-धारा का अन्त कभी भी नहीं होगा, परिमाण की क्षुद्रता की कोई सीमा नहीं हो सकती—यह सांख्य का मत है)।

प्रकृतिपुरुषसाक्षात्कारो न सम्भवति रूपस्य द्रव्यसाक्षात्कारहेतुत्वादिति नास्तिकाक्षेपं निराकरोति—

**न रूपनिबन्धनात् प्रत्यक्षनियमः ॥८९॥**

रूपादेव निमित्तात् प्रत्यक्षतेति नियमो नास्ति, धर्मादिनापि साक्षात्कारसम्भवादित्यर्थः। व्यञ्जकानियमस्याञ्जनादौ दृष्टत्वेनादोषत्वात्। अतो बहिर्द्रव्यलौकिकप्रत्यक्षं प्रत्येवोद्भूतरूपं व्यञ्जकमिति भावः ॥८९॥

रूपनिमित्त ही प्रत्यक्ष (साक्षात्कार) होता है, ऐसा कोई नियम नहीं है, धर्मादि-हेतुक भी साक्षात्कार होता है। अलौकिक समाधिबल द्वारा जो साक्षात् ज्ञान होता है, उसका नियम लौकिक प्रज्ञा से अवधारित नहीं हो सकता; रूपहीन द्रष्टा और दृश्य के साक्षात्कारात्मक ज्ञान योगियों में हो ही सकता है।

नन्वेवं किमणुपरिमाणं वस्त्वस्ति न वेत्याकाङ्क्षायां परिमाणनिर्णयं करोति—

**न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥९०॥**

अणु महद्दीर्घं ह्रस्वमिति परिमाणचातुर्विध्यं नास्ति। द्वैविध्यं तु वर्त्तत एव। द्वाभ्यां तद्योगात्—द्वाभ्यामेवाणुमहत्परिमाणाभ्यां चातुर्विध्यसम्भवादित्यर्थः। महत्परिमाणस्यावान्तरभेदावेव हि ह्रस्वदीर्घौ, अन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गादिति। तत्रास्मन्नयेऽणुपरिमाणमाकाशस्य कारणं गुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम्। अन्यत्र यथायोग्यं मध्यमादिपरममहत्त्वान्तपरिमाणानि, तानि च महत्त्वस्यैवावान्तरभेदा इति ॥९०॥

अणु, महत् ह्रस्व और दीर्घ—ये चार ही परिमाण हैं, ऐसा कहना व्यर्थ है, क्योंकि अणु और महत्—इन दो परिमाणों में ही अन्य दो का अन्तर्भाव किया जा सकता है।

पुरुषैकत्वं सामान्येनेति कण्ठत एवोक्तम्. प्रकृतेरेकत्वं सामान्ये-नेत्यर्थादुक्तम्, तदर्थं सामान्येषु नास्तिकविप्रतिपत्तिं निराकरोति—

**अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ॥९१॥**

व्यक्तीनामनित्यत्वेऽपि स एवायं घट इति स्थिरतायोगेन यत् प्रत्यभि-ज्ञानं तत् सामान्यस्य; सामान्यविषयकमेव तत् प्रत्यभिज्ञानमित्यर्थः ॥९१॥

व्यक्तियों के अस्थिरत्व (अनित्यत्व) रहने पर भी उनका जो 'वह ही यह है' इस प्रकार प्रत्यभिज्ञान होता है, वह सामान्य की सत्ता के कारण होता है। घटों की विभिन्नता रहने पर 'घटत्व' रूप 'सामान्य' का ज्ञान होता है; प्रत्यभिज्ञान की सामान्यविषयकता प्रसिद्ध ही है।

तस्मान्न सामान्यापलापो युक्त इत्याह—

**न तदपलापस्तस्मात् ॥९२॥**

सुगमम् ॥९२॥

प्रत्यभिज्ञा होने के कारण सामान्य का अपलाप नहीं किया जा सकता। बहु में अनुगत जिस धर्म के कारण अनेक में एकताप्रत्यय होता है, वह सामान्य है।

नन्वतद्व्यावृत्तिरूपेणाभावेनैव प्रत्यभिज्ञोपपादनीया, सैव च सामान्य-शब्दार्थोऽस्तु, तत्राह—

**नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥९३॥**

स एवायमिति भावप्रत्ययान्निवृत्तिरूपत्वं न सामान्यस्येत्यर्थः, अन्यथा हि नायमघट इत्येव प्रतीयेत। किञ्चान्यव्यावृत्तिशब्दस्याघटव्यावृत्तिरित्यर्थो वाच्यः। तत्राघटत्वं घटसामान्यभिन्नत्वमिति सामान्याभ्युपगम एवापतित इति ॥९३॥

'सामान्य' अन्यनिवृत्तिपर नहीं है, क्योंकि भाव रूप में उसका बोध होता है। [द्र० भूमिका]।

ननु सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यति, तत्राह—

**न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ॥९४॥**

भूयोऽवयवादिसामान्यादतिरिक्तं न सादृश्यमस्ति, प्रत्यक्षत एव सामा-न्यरूपतयोपलम्भादित्यर्थः ॥९४॥

सादृश्य कोई पृथक् तत्त्व नहीं है, वह सामान्यभावरूप है। अनेक अवयवों में समानता दृष्ट होने पर वह 'सादृश्य' कहलाती है (सदृश पदार्थ में ही सादृश्य का बोध होता है)।

ननु स्वाभाविकी शक्तिरेव सादृश्यमस्तु, न तु तत् सामान्यमित्याशङ्कामपाकरोति—

**निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात् तदुपलब्धेः ॥९५॥**

वस्तुनः स्वाभाविकशक्तिविशेषोत्पादोऽपि न सादृश्यं शक्त्युपलब्धितः सादृश्योपलब्धेर्विलक्षणत्वात्। शक्तिज्ञानं हि नान्यधर्मिज्ञानसापेक्षम्; सादृश्यज्ञानं पुनः प्रतियोगिज्ञानमपेक्षतेऽभावज्ञानवदिति ज्ञानयोर्वैलक्षण्यमित्यर्थः। किञ्च धर्मिणः शक्तिसामान्यं न सादृश्यं बाल्यावस्थायामपि युवसादृश्यापत्तेः, किन्तु युवादिकालीनः शक्तिविशेषो युवादिसादृश्यमिति वक्तव्यम्; तथा च प्रतिव्यक्त्यनन्तशक्तिकल्पनापेक्षया सर्वव्यक्तिसाधारणैकसामान्यकल्पनैव युक्तेति ॥९५॥

यह भी कहा जा सकता है (मतान्तर में) कि सादृश्य वस्तुगत शक्तिविशेष की अभिव्यक्ति के अतिरिक्त अन्य कुछ नहीं है। तुल्य वस्तु के दर्शन के बाद यह शक्ति अभिव्यक्त (स्पष्टतया ज्ञात) होती है जिससे 'यह उसकी तरह है' इत्याकार ज्ञान उत्पन्न होता है।

ननु तथापि घटादिसंज्ञकत्वमेव घटादिव्यक्तीनां सादृश्यमस्तु; तत्राह—

**न संज्ञासंज्ञिसम्बन्धोऽपि ॥९६॥**

यथोक्तः संज्ञासंज्ञिनोः सम्बन्धोऽपि न सादृश्यं वैशिष्ट्यात् तदुपलब्धेरेवेत्यर्थः। संज्ञासंज्ञिभावमजानतोऽपि सादृश्यज्ञानादिति ॥९६॥

संज्ञा (नाम) और संज्ञी (नामवाच्य अर्थ) का संबन्धज्ञान 'सादृश्य' है, ऐसा कहना असंगत है, क्योंकि संज्ञा-संज्ञि-सम्बन्ध-भाव को जो नहीं जानता, उसमें भी सादृश्य का ज्ञान होता है।

अपिच—

**न सम्बन्धनित्यतोभयानित्यत्वात् ॥९७॥**

संज्ञासंज्ञिनोरनित्यत्वात् सत्सम्बन्धस्यापि न नित्यता। अतः कथं तेनातीतवस्तुसादृश्यं वर्तमानवस्तुनि स्यादित्यर्थः ॥९७॥

शब्द और अर्थ का सम्बन्ध नित्य (कूटस्थनित्य, अपरिवर्तनीय) है, ऐसा कहना असंगत है, क्योंति शब्द और अर्थ दोनों अनित्य हैं। (यह अर्थ भी हो सकता है कि संज्ञा और संज्ञी के अनित्य होने के कारण उनका सम्बन्ध भी अनित्य है, अतः उस सम्बन्ध से अतीत वस्तु का सादृश्य वर्तमान वस्तु में कैसे हो सकता है?)

ननु सम्बन्ध्यनित्यत्वेऽपि सम्बन्धो नित्यः स्यात्, किमत्र बाधकम्; तत्राह—

**नाजः[1] सम्बन्धो धर्मिग्राहकमानबाधात् ॥९८॥**

कादाचित्कविभागे सत्येव सम्बन्धः सिध्यति। अन्यथा वक्ष्यमाणरीत्या स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनानवकाशात्। स च कादाचित्को विभागो न सम्बन्धनित्यत्वे सम्भवति। अतः सम्बन्धप्रापकप्रमाणेनैव बाधान्न नित्यः सम्बन्ध इत्यर्थः ॥९८॥

सम्बन्ध-ग्राहक-प्रमाण से विरोध होने के कारण संज्ञा-संज्ञि-सम्बन्ध की नित्यता नहीं मानी जा सकती है [द्र० भूमिका]।

नन्वेवं नित्ययोर्गुणगुणिनोर्नित्यः समवायो नोपपद्येत; तत्राह—

**न समवायोऽस्ति प्रमाणाभावात् ॥९९॥**

सुगमम् ॥९९॥

समवाय नामक नित्य सम्बन्ध नहीं है, क्योंकि इसकी सत्ता में प्रमाण नहीं है। समवाय-सम्बन्ध न्यायवैशेषिक में प्रसिद्ध है; अवयव-अवयवी, गुण-गुणी आदि में जो नित्य सम्बन्ध है, वह 'समवाय सम्बन्ध' कहलाता है।

ननु वैशिष्ट्यप्रत्यक्षं विशिष्टबुद्ध्यान्यथानुपपत्तिश्च प्रमाणम्; तत्राह—

**उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥१००॥**

उभयत्रापि वैशिष्ट्यप्रत्यक्षे तदनुमाने च स्वरूपेणैवान्यथासिद्धेर्न तदुभयं समवाये प्रमाणमित्यर्थः। अयं भावः—यथा समवायवैशिष्ट्यबुद्धिः समवायस्वरूपेणैवेष्यतेऽनवस्थाभयादिति, तत्र प्रत्यक्षानुमाने अन्यथासिद्धे। एवं गुणगुणिप्रभृतीनां विशिष्टबुद्धिरपि गुणादिस्वरूपेणैवेष्यताम्। अतस्तत्रापि प्रत्यक्षानुमाने अन्यथासिद्धे इति। नन्वेवं संयोगोऽपि न सिध्यति भूतलादौ

---

१. क्वचित् 'नातः संबन्धः' इति पठ्यते। अस्मत्स्थापितः पाठः साधुतरः।

घटादिप्रत्ययस्यापि स्वरूपेणैवान्यथासिद्धेरिति चेन्न; वियोगकालेऽपि भूतल-घटयोः स्वरूपतादवस्थ्येन विशिष्टबुद्धिप्रसङ्गात्। समवायस्थले च समवेतस्य कदापि स्वाश्रयवियोगो नास्तीति नायं दोषः।

कश्चित् तु तादात्म्यसम्बन्धेनात्र समवायस्यान्यथासिद्धिमाह, तन्न; शब्दमात्रभेदात्। तादात्म्यं ह्यत्र नात्यन्तं वक्तव्यम्। गुणवियोगेऽपि गुणि-सत्त्वात् वैशिष्ट्याप्रत्ययाच्च; किन्तु भेदाभेदबुद्धिनियामकः सम्बन्धविशेष एवागत्या वक्तव्यः। तथाच तस्य समवाय इति वा तादात्म्यमिति वा नाममात्रं भिन्नम्। सम्बन्धिद्वयातिरिक्तः सम्बन्धस्तु सिद्ध एवेति। यदि च तादात्म्यं स्वरूपमेवोच्यते तदास्माभिरपि तदेवोक्तमिति शब्दमात्रभेद इति[1] ॥१००॥

वैशिष्ट्य के प्रत्यक्ष से या अनुमान से समवाय की सिद्धि नहीं होती—स्वरूप सम्बन्ध मानकर ही उपपत्ति की जा सकती है [द्र० भूमिका]।

प्रकृतेः क्षोभात् प्रकृतिपुरुषसंयोगस्तस्मात् सृष्टिरिति सिद्धान्तः। तत्रायं नास्तिकानामाक्षेपः—नास्ति क्षोभाख्या कस्यापि क्रिया, सर्वं वस्तु क्षणिकं यत्रोत्पद्यते तत्रैव विनश्यतीत्यतो न देशान्तरसंयोगान्नेया क्रिया सिध्यतीति, तत्राह—

**नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतेः ॥१०१॥**

न देशान्तरसंयोगादिना क्रियाया अनुमेयत्वमेव, यतो नेदिष्ठस्य निकटस्थस्य द्रष्टुः क्रियाक्रियावतोः प्रत्यक्षेणापि प्रतीतिरस्ति वृक्षश्चलतीत्यादिरित्यर्थः ॥१०१॥

क्रिया अनुमेय ही होती है—यह नहीं कहा जा सकता; उसका प्रत्यक्ष होता है। क्रिया और क्रिया का आश्रयभूत द्रव्य—ये दो निकटस्थ ज्ञाता को प्रत्यक्षतः ज्ञात होते हैं।

तृतीयाध्याये[2] शरीरस्य पाञ्चभौतिकत्वादिरूपैर्मतभेदा एवोक्ता[3] न तु विशेषोऽवधृतः। तेष्वत्र[4] परपक्षं प्रतिषेधति—

**न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥१०२॥**

---

१. अधिकभाष्यपाठो भूमिकायां द्र०।

२. द्वितीयाध्याये इति क्वचित् पठ्यते सोऽपपाठः।

३. ३।१७—१९

४. अत्रापरपक्षम् (पाठा०)

बहूनां भिन्नजातीयानां चोपादानत्वं घटपटादिस्थले न दृष्टमिति सजातीयमेवोपादानम्। इतरच्च भूतचतुष्टयमुपष्टम्भकमित्याशयेन पाञ्चभौतिकव्यवहारः। एकोपादानकत्वेऽपि पृथिव्येवोपादानं सर्वशरीरस्येति वक्ष्यति[1] ॥१०२॥

शरीर (स्थूल शरीर) पञ्चभूतनिर्मित नहीं हो सकता, क्योंकि अनेक विजातीय द्रव्य एक वस्तु का उपादान नहीं हो सकते; अतः यही कहना उचित है कि स्थूल शरीर का उपादान पृथिवी ही है, अप् आदि भूत उपष्टम्भक रूप में रहते हैं।

स्थूलमेव शरीरमिति केचित्; तन्निराकरोति—

**न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥१०३॥**

इन्द्रियाश्रयत्वं शरीरत्वम्—

यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्।
तस्माच्छरीरमित्याहुस्तस्य मूर्तिं मनीषिणः[2] ॥

इति मनुवाक्यात्। एतादृशं च शरीरं स्थूलं प्रत्यक्षमेवेति न नियमः। कुतः, आतिवाहिकस्याप्रत्यक्षतया सूक्ष्मस्य भौतिकस्य शरीरान्तरस्यापि सत्त्वादित्यर्थः। लोकाल्लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकम्। भूताश्रयतां विना चित्रादिवद् गमनाभावस्य प्रागेवोक्तत्वात्। इदं च सूत्रं तस्यैव स्पष्टीकरणमात्रार्थम्। लिङ्गस्य च शरीरत्वं भोगाश्रयतया पुरुषप्रतिबिम्बाश्रयतया वेति बोध्यम्।

आतिवाहिकशरीरे च प्रमाणम्—

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः[3]।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः[4]।

इति श्रुतिस्मृती। न हि लिङ्गशरीरस्य सकलशरीरव्यापिनः स्वतोऽङ्गुष्ठमात्रत्वं सम्भवति। अत आधारस्याङ्गुष्ठमात्रमर्थात् सिध्यति। यथा दीपस्य सर्वगृहव्यापित्वेऽपि कलिकाकारत्वं तैलवर्त्यादिसूक्ष्मांशस्य दशोपरि सम्पिण्डितस्य पार्थिवभागस्य कलिकाकारतया, तथैव लिङ्गदेहस्य देहव्यापित्वेऽप्यङ्गुष्ठपरिमाणत्वं सूक्ष्मभूतस्याङ्गुष्ठपरिमाणत्वेनानुमेयमिति ॥१०३॥

स्थूल शरीर ही है, अन्य शरीर नहीं हैं, ऐसा नहीं कहा जा सकता, क्योंकि आतिवाहिक शरीर भी होते हैं (युक्ति और शास्त्र से इस शरीर की सिद्धि होती है)।

---

१. द्र० ५।११२ सूत्रम्।
२. मनु० १।१७
३. कठ० १।६।१७
४. वनपर्व २९७।१७

गोलकेभ्योऽतिरिक्तानीन्द्रियाणि प्रागुक्तानि तदुपपादनायेन्द्रियाणामप्राप्तप्रकाशकत्वं निराकरोति—

**नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥१०४॥**

स्वासम्बद्धार्थानीन्द्रियाणि न प्रकाशयन्ति; अप्राप्तेः, प्रदीपादीनामप्राप्तप्रकाशकत्वादर्शनात्। अप्राप्तप्रकाशकत्वे व्यवहितादिसर्ववस्तुप्रकाशकत्वप्रसङ्गाच्चेत्यर्थः। अतो दूरस्थसूर्यादिसम्बन्धार्थं गोलकातिरिक्तमिन्द्रियमिति भावः। करणानां चार्थप्रकाशकत्वं पुरुषेऽर्थसमर्पणद्वारैव। स्वतो जडत्वात् दर्पणस्य मुखप्रकाशकत्ववत्। अथवार्थप्रतिबिम्बोद्ग्रहणमेवाऽर्थप्रकाशकत्वमिति ॥१०४॥

इन्द्रियाँ अप्राप्त की प्रकाशक नहीं हैं; विषय से सम्बद्ध होकर ही ये विषय को प्रकाशित करती हैं। यदि इन्द्रियाँ अप्राप्त-प्रकाशक होतीं तो वे सदैव दूरस्थ और व्यवहित वस्तु को प्रकटित करतीं।

नन्वेवं चक्षुषस्तैजसत्वमेव युक्तम्, तेजस एव किरणरूपेणाशु दूरापसर्पणदर्शनादिति शङ्कां निराकरोति—

**न तेजोऽपसर्पणात् तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥१०५॥**

तेजसोऽपसर्पणं दृष्टमिति कृत्वा तैजसं चक्षुर्न वाच्यम्; कुतः, अतैजसत्वेऽपि प्राणवदेव वृत्तिभेदेनापसर्पणोपपत्तेरित्यर्थः। यथा हि प्राणः शरीरं सन्त्यज्यैव नासाग्राद् वहिः कियद्दूरं प्राणनाख्यवृत्त्यापसरति, एवमेवातैजसद्रव्यमपि चक्षुर्देहमसन्त्यज्यापि वृत्त्याख्यपरिणामविशेषेण झटित्येव दूरस्थं सूर्यादिकं प्रत्यपसरेदिति ॥१०५॥

तेजः पदार्थ के अपसर्पण को देखकर यह निश्चित नहीं किया जा सकता कि चक्षु इन्द्रिय तैजस है; प्राण की वृत्ति (संचरणशील) की तरह चक्षु देह में लिप्त रहकर भी वृत्ति से दूरस्थ सूर्यादि के प्रति अपसरण कर सकता है।

नन्वेवम्भूतवृत्तौ किं प्रमाणम्, तत्राह—

**प्राप्तार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः ॥१०६॥**

सुगमम् ॥१०६॥

'प्राप्त (सम्बद्ध) वस्तु का प्रकाश करना' रूप हेतु से चक्षु की पूर्वोक्त वृत्ति की सिद्धि होती है [ऐन्द्रियिक वृत्ति पर विशद विचार भूमिका में द्रष्टव्य है]।

देहमपरित्यज्यापि गमनोपपत्तये वृत्तेः स्वरूपं दर्शयति—

**भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति ॥१०७॥**

सम्बन्धार्थं सर्पतीति हेतोश्चक्षुरादेर्भागो विस्फुलिङ्गवद्विभक्तांशो रूपादिवद् गुणश्च न वृत्तिः, किन्तु तदेकदेशभूता भागगुणाभ्यां भिन्ना वृत्तिः। विभागे हि सति तद्द्वारा चक्षुषः सूर्यादिसम्बन्धो न घटते, गुणत्वे च सर्पणाख्यक्रियानुपपत्तेरित्यर्थः। एतेन बुद्धिवृत्तिरपि प्रदीपशिखावद् द्रव्यरूप एव परिणामः स्वच्छतयार्थाकारताग्राहि निर्मलवस्त्रवदिति सिद्धम् ॥१०७॥

वृत्ति (इन्द्रियवृत्ति रूप ज्ञान) न इन्द्रियों का अंश है और न रूपादि की तरह गुण है। वृत्ति इन्द्रिय का परिणाम है अतः इन्द्रियावस्थित है; वह सम्बद्ध-विषयाभिमुख है, और विषयोपराग से अनुरञ्जित होती है (सांख्यीय दृष्टि से वृत्ति को द्रव्य माना जा सकता है)।

नन्वेवं वृत्तीनां द्रव्यत्वे कथमिच्छादिरूपबुद्धिगुणेषु वृत्तिव्यवहारस्तत्राह—

**न द्रव्यनियमस्तद्योगात् ॥१०८॥**

वृत्तिर्द्रव्यमेवेति नियमो नास्ति; कुतः, तद्योगात्। तत्र वृत्तौ योगार्थसत्त्वात्। वृत्तिर्वर्तनजीवन इति हि यौगिकोऽयं शब्दः। जीवनं च स्वस्थितिहेतुर्व्यापारः। जीव बलप्राणधारणयोरित्यनुशासनात्[1], वैश्यवृत्तिः शूद्रवृत्तिरित्यादिव्यवहाराच्च। तत्र यथा द्रव्यरूपया वृत्त्या बुद्धिर्जीवति तथेच्छादिभिरपीति तेऽपि वृत्तयः, सर्वनिरोधेनैव चित्तमरणादित्यर्थः ॥१०८॥

वृत्ति प्रसर्पणक्रियायोगिनी है। वे घटादि सदृश देशव्यापी द्रव्य की तरह द्रव्य नहीं हैं। वृत्ति कहने का तात्पर्य यह है कि जिस प्रकार यजन-याजनादि कर्म द्वारा ब्राह्मण जीवित रहते हैं, अतः वे कर्म उनकी वृत्ति कहलाते हैं, उसी प्रकार वृत्तियों से चित्त व्यक्त रहता है, अतः वे 'वृत्ति' कहलाती हैं।

इन्द्रियाणां भौतिकत्वस्यापि श्रवणात् कदाचिल्लोकविशेषभेदेन श्रुतिव्यवस्था शङ्क्येत, तत्राह—

**न देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः ॥१०९॥**

न ब्रह्मलोकादिदेशभेदतोऽपीन्द्रियाणामहङ्कारातिरिक्तोपादानकत्वं किंत्वस्मदादीनां भूर्लोकस्थानामिव सर्वेषामेवाहङ्कारिकत्वनियमः; देशभेदेनैकस्यैव लिङ्गशरीरस्य सञ्चारमात्रश्रवणादित्यर्थः ॥१०९॥

---

१. जीव प्राणधारणे इति सायणः (धातुवृत्तिः १।३६७), क्षीरस्वामी च (१।३७५)।

यद्यपि लोक अनेक विलक्षण प्रकार के हैं, प्राणी (और उनकी इन्द्रियाँ) भी विलक्षण प्रकार के हैं, तथापि प्राणियों की इन्द्रियों का उपादान एक अस्मिता ही है; पृथिव्यादिभूत इन्द्रियों का उपादान नहीं हैं।

नन्वेवं भौतिकत्वश्रुतिः कथमुपपद्यताम्, तत्राह—

**निमित्तव्यपदेशात् तद्व्यपदेशः ॥११०॥**

निमित्तेऽपि प्राधान्यविवक्षयोपादानत्वव्यपदेशो भवति—यथेन्धनादग्निरिति। अतो भूतोपादानत्वव्यपदेश इत्यर्थः, तेज आदिभूतोपष्टम्भेनैव हि तदनुगताहङ्काराच्चक्षुरादीन्द्रियाणि सम्भवन्ति, यथा पार्थिवोपष्टम्भेन तदनुगतात् तेजसोऽग्निर्भवतीति। अन्नमयं हि सोम्य मन[1] इत्यादिश्रुतिस्तदुक्तयुक्तिश्चात्र प्रमाणम् ॥११०॥

कभी-कभी इन्द्रिय के कारण के रूप में भूतों का जो उल्लेख मिलता है, वह निमित्ताश्रित है, अर्थात् विषयमूल क्रिया से अभिहन्यमान होने पर अहंकार इन्द्रियरूप में परिणत होता है, अतः इन्द्रियों की उत्पत्ति में पञ्चभूत की मूलभूत क्रिया की हेतुता है; इस दृष्टि से भूत को भी इन्द्रियकारण कहा जाता है।

स्थूलशरीरगतं विशेषं प्रसङ्गादवधारयति—

**ऊष्मजाण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं चेति न नियमः ॥१११॥**

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति—अण्डजं जीवजमुद्भिज्जमिति[2] श्रुतावण्डजादिरूपं शरीरत्रैविध्यं प्रायिकाभिप्रायेणोक्तम्, न तु नियमः, यत ऊष्मजादि षड्विधमेव शरीरं भवतीत्यर्थः। तत्रोष्मजा दन्दशूकादयः। अण्डजाः पक्षिसर्पादयः। जरायुजा मनुष्यादयः। उद्भिज्जा वृक्षादयः। सङ्कल्पजाः सनकादयः। सांसिद्धिका मन्त्रतपआदिसिद्धिजाः—यथा रक्तबीजशरीरोत्पन्नशरीरादय इति ॥१११॥

ऊष्मज (दन्दशूकादि), अण्डज (पक्षिसर्पादि), जरायुज (मनुष्यादि), उद्भिज्ज (वृक्षादि), संकल्पज (सनकादि) और सांसिद्धिक (मन्त्र, तपः, आदि सिद्धिजात) शरीर प्रसिद्ध हैं; इनसे विलक्षण शरीरी भी हो सकते हैं।

शरीरस्यैकमात्रभूतोपादानकत्वं पूर्वोक्तमनेनैव प्रसङ्गेन विशिष्याह—

---

१. छान्दोग्य० ६।५।४

२. छान्दोग्य० ६।३।१

**सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत्॥११२॥**

सर्वेषु शरीरेषु पृथिव्येवोपादानम्। असाधारण्यात्, आधिक्यादिभिरुत्कर्षात्। अत्रापि शरीरे पञ्चचतुरादिभौतिकत्वव्यपदेशः पूर्ववत्। इन्द्रियाणां भौतिकत्ववदुपष्टम्भकत्वमात्रेणेत्यर्थः ॥११२॥

इन सब स्थूल शरीरों में पृथिवी ही उपादान है, क्योंकि वही असाधारणरूप से रहती है। अन्य भूतों का समावेश उपष्टम्भकरूप से है।

ननु प्राणस्य शरीरे प्राधान्यात् प्राण एव देहारम्भकोऽस्तु, तत्राह—

**न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥११३॥**

प्राणो न देहारम्भकः। इन्द्रियं विना प्राणानवस्थानेनान्वयव्यतिरेकाभ्यामिन्द्रियाणां शक्तिविशेषादेव प्राणसिद्धेः प्राणोत्पत्तेरित्यर्थः। अयं भावः—करणवृत्तिरूपः प्राणः करणवियोगे न तिष्ठति। अतो मृतदेहे करणाभावेन प्राणाभावान्न प्राणो देहारम्भक इति ॥११३॥

जो देहारम्भक तत्त्व है, वही प्राण नहीं है (प्राण देह का उत्पादक नहीं है)। प्राण इन्द्रियशक्ति (इन्द्रिय की शक्तिरूपा अस्मिता = षष्ठ अविशेष) से उत्पन्न होता है।

नन्वेवं प्राणस्य देहाकारणत्वे प्राणं विनापि देह उत्पद्येत, तत्राह—

**भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गात्॥११५॥**

भोक्तुः प्राणिनोऽधिष्ठानाद् व्यापारादेव भोगायतनस्य शरीरस्य निर्माणं भवति। अन्यथा प्राणव्यापाराभावे शुक्रशोणितयोः पूतिभावप्रसङ्गात्, मृतदेहवदित्यर्थः। तथा च रससञ्चारादिव्यापारविशेषैः प्राणो देहस्य निमित्तकारणं धारकत्वादिति भावः ॥११४॥

भोक्ता पुरुष (यहाँ पुरुषोपदृष्ट जीवभाव = ग्रहीता) के अधिष्ठान से भोगायतन (सुख-दुःख रूप भोग जिसके रहने से ही होता है, वह, अर्थात् शरीर) का निर्माण होता है। जीव का अधिष्ठान यदि न हो तो गर्भगत शुक्रशोणितसंयोगजनित पिण्ड और जीव के देहत्याग के बाद मृत शरीर इन दोनों में पूतिभाव आ जाता है (वे सड़ जाते हैं)। [द्र० भूमिका]।

ननु प्राणस्यैवाधिष्ठानत्वं सम्भवति व्यापारवत्त्वात्, न प्राणिनः कूटस्थत्वात्। निर्व्यापारस्याधिष्ठाने प्रयोजनाभावाच्चेति; तत्राह—

## भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥११५॥

देहनिर्माणे व्यापाररूपमधिष्ठानं स्वामिनश्चेतनस्यैकान्तात् साक्षान्नास्ति किन्तु प्राणरूपभृत्यद्वारा, यथा राज्ञः पुरनिर्माण इत्यर्थः। तथा च प्राणस्याधिष्ठातृत्वं साक्षात्, पुरुषस्याधिष्ठातृत्वं प्राणसंयोगमात्रेणेति सिद्धम्। कुलालादीनां घटादिनिर्माणेष्वप्येवम्। विशेषस्त्वयं तत्र चेतनस्य बुद्ध्यादेश्चाप्युपयोगोऽस्ति बुद्धिपूर्वकसृष्टित्वादिति। यद्यपि प्राणाधिष्ठानादेव देहनिर्माणं तथापि प्राणद्वारा प्राणसंयोगोऽप्यपेक्ष्यते, पुरुषार्थमेव प्राणेन देहनिर्माणादित्याशयेन भोक्तुरधिष्ठानादित्युक्तम् ॥११५॥

देह के निर्माण में स्वामी पुरुष रूप निर्गुण चितिशक्ति का कोई व्यापार नहीं है; पुरुषोपदर्शनजनित जो व्यावहारिक आत्मभाव (मन-प्राणादि युक्त ग्रहीतृभाव) व्यक्त होता है, वही देहोपादान पर आधिपत्य कर संस्कारानुरूप देह का निर्माण करता है; देह के निर्माण-वर्धन-पोषण में प्राण का मुख्य व्यापार है।

विमुक्तमोक्षार्थं प्रधानस्येत्युक्तं प्राक् (२।१)। तत्र कथमात्मा नित्यमुक्तो बन्धदर्शनादिति परेषामाक्षेपे नित्यमुक्तिमुपपादयितुमाह—

## समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥११६॥

समाधिरसम्प्रज्ञातावस्था। सुषुप्तिश्चात्र समग्रसुषुप्तिः। मोक्षश्च विदेहकैवल्यम्। आस्ववस्थासु पुरुषाणां ब्रह्मरूपता बुद्धिवृत्तिविलयतस्तदौपाधिकपरिच्छेदविगमेन स्वस्वरूपपूर्णतयाऽवस्थानम्, यथा घटध्वंसे घटाकाशस्य पूर्णतेत्यर्थः। तदेतदुक्तम्—तन्निवृत्तावुपशान्तोपरागः स्वस्थ इति[1]। तथा च ब्रह्मत्वमेव पुरुषाणां स्वभावो नैमित्तिकत्वाभावात् स्फटिकस्य शौक्ल्यमिव। बुद्धिवृत्तिसम्बन्धकाले तु परिच्छिन्नचिद्रूपत्वेनाभिव्यक्त्या परिच्छेदाभिमानः। तथा वृत्तिप्रतिबिम्बवशाद् दुःखादिमालिन्यमिव च भवतीति तत् सर्वमौपाधिकमेव। उपाध्याख्यनिमित्तान्वयव्यतिरेकानुविधानात् स्फटिकलौहित्यवदिति भावः। तथा च योगसूत्रम्—वृत्तिसारूप्यमितरत्रेति।[2] अस्मच्छास्त्रे च ब्रह्मशब्द औपाधिकपरिच्छेदमालिन्यादिरहितपरिपूर्णचेतनसामान्यवाची, न तु ब्रह्ममीमांसायामिवैश्वर्योपलक्षितपुरुषमात्रवाचीति विवेक्तव्यम्।

अत्रैते श्लोकाः शिष्यव्युत्पत्त्यर्थमुच्यन्ते—

---

१. सांख्यसूत्रम् २।३४

२. १।४ योगसूत्रम्।

चिदाकाशेऽनभिव्यक्ते नानाकारैरितस्ततः ।
धीरटन्ती सह व्यक्त्या चिदटन्तीं प्रदर्शयेत्[1] ॥
वस्तुतस्तु सदा पूर्णमेकरूपं च चिन्नभः ।
वृत्तिशून्यप्रदेशेषु दृश्याभावान्न पश्यति ॥
चक्षुषो रूपवत् पुंसो दृश्या वृत्तिर्हि नेतरत् ।
समाध्यादौ च सा नास्तीत्यतः पूर्णः पुमांस्तदा[2] ॥११६॥

स्थैर्य की दृष्टि से चित्त की तीन अवस्थाएँ हैं—सुषुप्ति (स्वप्नहीन जाड्यप्रधान चित्तावस्था), समाधि (स्वेच्छापूर्वक चित्त की किसी एक योगानुकूल तत्त्व में स्थिति) एवं मोक्ष (चित्त का अत्यन्त रोधपूर्वक स्वकारण अव्यक्त में प्रलय)। इन तीन अव-अवस्थाओं में पुरुष स्व-रूप में ही रहता है। यह स्वरूप 'ब्रह्म' शब्द से उक्त होता है—सर्वोच्च, परमसूक्ष्म और सर्वाभीष्ट होने से।

तर्हि कः सुषुप्तिसमाधिभ्यां मोक्षस्य विशेषस्तत्राह—

**द्वयोः सबीजमन्यत्र तद्धतिः ॥११७॥**

द्वयोः समाधिसुषुप्त्योः सबीजं बन्धबीजसहितं ब्रह्मत्वमन्यत्र मोक्षे बीजस्याभाव इति विशेष इत्यर्थः। ननु चेत् समाध्यादौ बन्धबीजमस्ति तर्हि तेनैव परिच्छेदात् कथं ब्रह्मत्वमिति चेन्न, बन्धबीजस्य कर्मादेस्तदानीमुपाधावेवावस्थानात्, न तु चेतनेषु; पुरुषे च तेषामप्रतिबिम्बनादिति। जाग्रदाद्यवस्थायां तु बुद्धिवृत्तिप्रतिबिम्बवशादौपाधिको बन्ध इत्यसकृदावेदितम्।

ननु पातञ्जले तद्भाष्ये चासम्प्रज्ञातयोगो निर्बीज उक्तः[3]। अत्र कथं सबीज उच्यत इति चेन्न; असम्प्रज्ञाते क्रमेण बीजक्षयो भवतीत्याशयेनैव तत्र निर्बीजत्ववचनात्, अन्यथा सर्वासामेवासम्प्रज्ञातव्यक्तीनां निर्बीजत्वे व्युत्थानानुपपत्तेरिति ॥११७॥

समाधि और सुषुप्ति अवस्था में (ये दो चैत्तिक हैं; समाधि में चित्त की एकाग्रता की पराकाष्ठा है तथा सुषुप्ति में चित्त का बाह्यान्तरविषयसंचरण तमकी अधिकता से रुद्ध रहता है) ब्रह्मरूप 'पुरुष' सबीज अर्थात् गुणसम्बन्धवान् रहता है, पर मोक्षावस्था में गुणातीत हो जाता है—स्वरूपज्योतिः केवली, अमल, दृशिमात्र आदि पद से यह अवस्था अभिहित होती है। सूत्रोक्त बीज का तात्पर्य विकार है, अर्थात् पुरुष समाधि-सुषुप्ति में सविकार (वृत्ति सारूप्ययुक्त) प्रतीत होता है।

---

१. सहव्यक्तेरटन्तीं दर्शयेच् चितिम् इति पाठान्तरम्।

२. द्र० भूमिका।

३. द्र० योगवार्त्तिकम् (१।५१)।

ननु समाधिसुषुप्ती दृष्टे स्तः, मोक्षे तु किं प्रमाणमिति नास्तिकाक्षेपं परिहरति—

**द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ ॥११८॥**

समाधिसुषुप्तिदृष्टान्तेन मोक्षस्यापि दृष्टत्वादनुमितत्वान्न तु द्वौ सुषुप्तिसमाधी एव, किन्तु मोक्षोऽप्यस्तीत्यर्थः। अनुमानं चेत्थम्—सुषुप्त्यादौ यो ब्रह्मभावस्तत्त्यागश्चित्तगताद्रागादिदोषवशादेव भवति। स चेद्दोषो ज्ञानेन नाशितस्तर्हि सुषुप्त्यादिसदृशस्येवावस्था स्थिरा भवति, सैव मोक्ष इति ॥११८॥

जिस प्रकार समाधि और सुषुप्ति रूप अवस्थाद्वय हैं, उसी प्रकार मोक्षरूप तृतीय अवस्था भी है। मोक्ष के अस्तित्व में युक्ति और शास्त्र प्रमाण हैं। चित्त के दो ही धर्म हैं—प्रत्यय और संस्कार। ये दो चूँकि भंगुर हैं, अतः चित्त भी भंगुर है; चित्त के नाश (परवैराग्यादि द्वारा) होने पर जो स्थिति होती है, वही मोक्षस्थिति है।

ननु वासनाख्यबीजसत्त्वेऽपि वैराग्यादिना वासनाकौण्ठ्यादर्थाकारा वृत्तिः समाधौ मा भवतु, सुषुप्ते तु वासनाप्राबल्यादर्थज्ञानं भविष्यत्येवेति न सुषुप्तौ ब्रह्मरूपता युक्तेति; तत्राह—

**वासनया न स्वार्थ-ख्यापनं[1] दोषयोगेऽपि न निमित्तस्य प्रधान-बाधकत्वम् ॥११९॥**

यथा वैराग्ये तथा निद्रादोषयोगेऽपि सति वासनया न स्वार्थख्यापनं स्वविषयस्मारणं भवति। यतो न निमित्तस्य गुणीभूतस्य संस्कारस्य बलवत्तरनिद्रादोषबाधकत्वं सम्भवतीत्यर्थः। बलवत्तर एव हि दोषो वासनां दुर्बलां स्वकार्यकुण्ठां करोतीति भावः ॥११९॥

यद्यपि सुषुप्तिकाल में संसारवासना प्रबलरूपेण रहती है, पर तम से वह अत्यन्त अभिभूत रहती है, अतः वह वासना विषय का स्मारक नहीं होती। निद्रारूप तमःप्रधान अवस्था में वासना कुण्ठित होकर अलक्ष्यवत् रह जाती है।

संस्कारलेशतो जीवन्मुक्तस्य शरीरधारणमिति तृतीयाध्याये[2] प्रोक्तम्। तत्रायमाक्षेपः—जीवन्मुक्तस्य शश्वदेकस्मिन्नप्यर्थेऽस्मदादीनामिव भोगो दृश्यते सोऽनुपपन्नः, प्रथमं भोगमुत्पाद्यैव पूर्वसंस्कारनाशात् संस्कारान्तरस्य च ज्ञानप्रतिबन्धेन कर्मवदनुदयादिति; तत्राह—

---

१. वासनया ऽनर्थख्यापनम् (पाठा०)।

२. ३।८३

**एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥१२०॥**

येन संस्कारेण देवादिशरीरभोग आरब्धः, स एक एव संस्कारस्तच्छरीरसाध्यस्य प्रारब्धभोगस्य समापकः। स च कर्मवदेव भोगसमाप्तिनाश्यो न तु प्रतिक्रियं प्रतिभोगव्यक्ति संस्कारनानात्वं बहुव्यक्तिकल्पनागौरवप्रसङ्गादित्यर्थः। कुलालचक्रभ्रमणस्थलेऽप्येवं वेगाख्यः संस्कार एक एव भ्रमणसमाप्तिपर्यन्तस्थायी बोध्यः ॥१२०॥

जिस संस्कार से शरीर-भोग आरब्ध हुआ है, वह एक संस्कार ही उस शरीर से साध्य प्रारब्धभोग का समापक होता है; भोगसमाप्ति के साथ उसका नाश होता है; प्रत्येक भोगक्रिया से संस्कार का नानात्व नहीं होता।

उद्भिज्जं शरीरमस्तीत्युक्तम्[1] तत्र बाह्यबुद्ध्यभावाच्छरीरत्वं नास्तीति नास्तिकाक्षेपमपाकरोति—

**न बाह्यबुद्धिनियमः ॥१२१॥**

जिसमें बाह्यविषयक ज्ञान है, वही जीव-शरीर हैं, ऐसा नहीं कहा जा सकता।

**वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत्[2] ॥१२२॥**

न बाह्यज्ञानं यत्रास्ति तदेव शरीरमिति नियमः, किन्तु वृक्षादीनामन्तःसंज्ञानामपि भोक्तृभोगायतनत्वं शरीरत्वं मन्तव्यम्। यतः पूर्ववत् पूर्वोक्तो[3] यो भोक्त्रधिष्ठानं विना मनुष्यादिशरीरस्य पूतिभावस्तद्वदेव वृक्षादिशरीरेष्वपि शुष्कतादिकमित्यर्थः। तथा च श्रुतिः—अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यतीत्यादिरिति[4]। न बाह्यबुद्धिनियम इत्यंशस्य पृथक्सूत्रत्वेऽपि सूत्रद्वयमेकीकृत्येत्थमेव व्याख्येयम्। सूत्रभेदस्तु दैर्घ्यभयादिति बोध्यम् ॥१२२॥

क्योंकि यह माना जाता है कि वृक्ष, गुल्म, लता, ओषधि, वनस्पति, तृण और लता आदि के देह भी भोगायतन हैं, जो प्रत्यगात्मा द्वारा अधिष्ठित हैं। भोक्ता के अधिष्ठान के विना मनुष्य के शरीर में जिस प्रकार पूतिभाव आ जाता है, वृक्षादि के शरीर में भी उसी प्रकार शुष्कतादि उत्पन्न हो जाते हैं (यदि वे चेतन भोक्ता प्राणी का अधिष्ठान न रहते हों)।

---

१. द्र० ५।१११ सूत्रम्।

२. केचन 'न बाह्यबुद्धिनियम' इति १२२ सूत्रस्यैवावयवभूतंवाक्यमिति कथयन्ति।

३. ५।११४ सू०

४. छान्दोग्य० ६।११।३२

**स्मृतेश्च ॥१२३॥**

शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥[1]
इत्यादिस्मृतेरपि वृक्षादिषु भोक्तृभोगायतनत्वमित्यर्थः ॥१२३॥

स्मृतिशास्त्र के वचन से भी ज्ञात होता है कि वृक्षादि भी भोक्ता के भोगायतन हैं।

ननु वृक्षादिष्वप्येवं[2] चेतनत्वेन धर्माधर्मोत्पत्तिप्रसङ्गस्तत्राह—

**न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥१२४॥**

न देहमात्रेण धर्माधर्मोत्पत्तियोग्यत्वं जीवस्य; कुतः, वैशिष्ट्यश्रुतेः । ब्राह्मणादिदेहविशिष्टत्वेनैवाधिकारश्रवणादित्यर्थः ॥१२४॥

देही जीव के देहमात्र के कारण ही कर्माधिकार माना नहीं जाता। क्योंकि शास्त्र में विशिष्ट देह का ही कर्माधिकार (अमुक कर्म में अमुक वर्णाश्रमगत मानव अधिकृत है—इस प्रकार) स्वीकृत हुआ है।

देहभेदेनैव कर्माधिकारं दर्शयन् देहत्रैविध्यमाह—

**त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥१२५॥**

त्रयाणामुत्तमाधममध्यमानां सर्वप्राणिनां त्रिप्रकारो देहविभागः—कर्मदेहभोगदेहोभयदेहा इतीत्यर्थः । तत्र कर्मदेहः परमर्षीणां भोगदेह इन्द्रादीनामुभयदेहश्च राजर्षीणामिति । अत्र प्राधान्येन त्रिधा विभागः । अन्यथा सर्वस्यैव भोगदेहत्वापत्तेः ॥१२५॥

जीव के त्रिविध देह की तीन प्रकार की व्यवस्था है। यथा—कर्मदेह = जिस शरीर में पुरुषकारपूर्वक स्वेच्छया कर्माचरण करना सुकर होता है; उपभोगदेह = जिस शरीर में पुरुषकार का स्थान स्वल्पतम है, जिसमें संस्काराधीन होकर भोग को

1. मनु १२।९

2. वृक्षप्राणविषये शान्तिपर्व (अ० १२४) द्र०। मनुरपि 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' इत्याह (१।४९)। पुराणेषु उद्भिदुत्पत्तिः चेतनप्राण्युत्पत्तिरिव उक्ता मुख्यसर्गरूपेण (द्र० पुराणीयसर्गप्रकरणान्तर्गत-नवधासृष्टिप्रकरणम्)। उद्भित्सर्गः खलु अप्रतिबोधवान् बहिरन्तोऽप्रकाशः संवृतात्मा इत्युक्तः (विष्णुपुराणे १।५।६-७)। भागवते (३।१०।१९) उत्स्रोताः तमःप्रायः अन्तः स्पर्शः विशेषी च मुख्यसर्गनामा उद्भित्सर्गः इति।

भोगना पड़ता है; उभयदेह = जिसमें पुरुषकार और पूर्व संस्कार—इन दोनों का ही उपयोग सरलता से किया जा सकता है (भूमिका में देहप्रकारों पर विशिष्ट विचार द्रष्टव्य है)।

चतुर्थमपि शरीरमाह—

**न किञ्चिदप्यनुशयिनः ॥१२६॥**

विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः।[1]

इति वाक्यादनुशयो वैराग्यम्। विरक्तानां शरीरमेतत्त्रयविलक्षणमित्यर्थः, यथा दत्तात्रेयजडभरतादीनामिति ॥१२६॥

अनुशयी का देह इन तीन प्रकारों में नहीं आता; योगी न अवश होकर संस्काराधीन रहते हैं और न कर्म का अनुष्ठान लिप्त होकर करते हैं, अतः कर्म और उसके भोग के क्षेत्र से वे अतीत होते हैं। प्राचीन परिभाषा में उनका कर्म अशुक्लाकृष्ण है।

उक्तस्येश्वराभावस्य स्थापनाय पराभ्युपगतं ज्ञानेच्छाकृत्यादिनित्यत्वं प्रतिषेधति—

**न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥१२७॥**

बुद्धिरत्राध्यवसायाख्या वृत्तिः। तथा च ज्ञानेच्छाकृत्यादीनामाश्रयविशेषे परैरीश्वरोपाधितयाभ्युपगतेऽपि नित्यत्वं नास्ति। अस्मदादिबुद्धिदृष्टान्तेन सर्वेषामेव बुद्धीच्छादीनामनित्यत्वानुमानात्। यथा लौकिकवह्निदृष्टान्तेनावरणतेजसोऽप्यनित्यत्वानुमानमित्यर्थः ॥१२७॥

मनुष्यादि की बुद्धि अनित्य है, पर महासत्त्वशाली ईश्वर की बुद्धि नित्य हो सकती है (ईश्वररूप विलक्षण आश्रय के कारण बुद्धि में भी अत्यन्त विलक्षणता क्यों न मानी जाए), ऐसा नहीं कहा जा सकता है, क्योंकि जिस प्रकार चन्दनादि पर आश्रित होने पर भी वह्नि की उष्णता में भेद नहीं होता, उसी प्रकार ईश्वराश्रित ज्ञान भी त्रैगुणिकत्व के कारण अनित्य ही होगा (ईश्वरज्ञान व्यक्त पदार्थ है, सुतरां हेतुमान् है, अतएव अनित्य भी है)।

आस्तां तावज् ज्ञानेच्छादेर्नित्यत्वम्, तदाश्रय ईश्वरोपाधिरेवासिद्ध ईश्वरस्यासिद्धेरित्यत आह—

**आश्रयासिद्धेश्च ॥१२८॥**

सुगमम् ॥१२८॥

---

1. शाश्वतकोषः ३२०

नित्यज्ञान का आश्रयभूत ईश्वर ही असिद्ध है।

नन्वेवं ब्रह्माण्डादिसर्जनसमर्थं सर्वज्ञत्वादिकं कथं जन्यं सम्भाव्येतापि; लोके तपआदिभिरेवमैश्वर्यादर्शनादिति; तत्राह—

**योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥१२९॥**

औषधादिसिद्धिदृष्टान्तेन योगजा अप्यणिमादिसिद्धयः सृष्ट्याद्युपयोगिन्यः सिद्ध्यन्तीत्यर्थः ॥१२९॥

जिस प्रकार ओषधादिजनित सिद्धियों का अपलाप नहीं किया जा सकता, उसी प्रकार योगज सिद्धियों का भी अपलाप नहीं किया जा सकता।

पुरुषसिद्धिप्रतिकूलतया भूतचैतन्यवादिनं प्रत्याचष्टे—

**न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि च सांहत्येऽपि च॥१३०॥**

संहतभावावस्थायामपि पञ्चभूतेषु चैतन्यं नास्ति, विभागकाले प्रत्येकं चैतन्यादृष्टेरित्यर्थः। तृतीयाध्याये (३।२०-२२) चेदं स्वसिद्धान्तावधयोक्तम्, अत्र च परमतनिराकरणायेति न पौनरुक्त्यं दोषायेति। वीप्साऽध्यायसमाप्तौ ॥१३०॥

भूत के संघात में चैतन्य के दर्शन होने पर भी (यथा—मैं शरीरी चेतन हूँ—इत्याकार बोध) भूत में चैतन्य नहीं है, क्योंकि प्रत्येक विभक्त भूत में चैतन्य की सत्ता सिद्ध नहीं होती।

स्वसिद्धान्तविरुद्धार्थभाषिणो ये कुवादिनः।
पञ्चमे तान् निराकृत्य स्वसिद्धान्तो दृढीकृतः॥

इति विज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये परपक्षनिर्जयाध्यायः पञ्चमः।

# षष्ठोऽध्यायः

अध्यायचतुष्केण समस्तशास्त्रार्थं प्रतिज्ञाय पञ्चमाध्याये परपक्षनिराकरणेन प्रसाध्येदानीं तमेव सारभूतशास्त्रार्थं षष्ठाध्यायेन सङ्कलयन्नुपसंहरति। उक्तार्थानां हि पुनस्तन्त्राख्ये विस्तरे कृते शिष्याणामसन्दिग्धाविपर्यस्तो दृढतरो बोध उत्पद्यत इत्यतः स्थूणानिखननन्यायादनुक्तयुक्त्याद्युपन्यासाच्च नात्र पौनरुक्त्यं दोषाय।

**अस्त्यात्मा नास्तित्वसाधनाभावात् ॥१॥**

जानामीत्येवं प्रतीयमानतया पुरुषः सामान्यतः सिद्ध एवास्ति बाधकप्रमाणाभावात्। अतस्तद्विवेकमात्रं कर्त्तव्यमित्यर्थः ॥१॥

ज्ञातृत्व रूप हेतु से आत्मा का अस्तित्व सिद्ध होता है। ज्ञाता आत्मा नहीं है, इस मत को सिद्ध नहीं किया जा सकता ( क्योंकि सिद्धि करनेवाला स्वयं ज्ञातृविशेष है )।

तत्र विवेके प्रमाणद्वयमाह सूत्राभ्याम्—

**देहादिव्यतिरिक्तोऽसौ वैचित्र्यात्[1] ॥२॥**

असावात्मा द्रष्टा देहादिप्रकृत्यन्तेभ्योऽत्यन्तं भिन्नो वैचित्र्यात्, परिणामित्वापरिणामित्वादिवैधर्म्यादित्यर्थः। प्रकृत्यादयस्तावत् प्रत्यक्षानुमानागमैः परिणामितयैव सिद्धाः पुरुषस्यापरिणामित्वं तु सदा ज्ञातविषयत्वादनुमीयते। तथाहि—यथा चक्षुषो रूपमेव विषयो न सन्निकर्षसाम्येऽपि रसादिरेवं पुरुषस्य स्वबुद्धिवृत्तिरेव विषयो न तु सन्निकर्षसाम्येऽप्यन्यद्वस्त्विति फलबलात् क्लृप्तम्। बुद्धिवृत्त्यारूढतयैव त्वन्यद्भोग्यं भवति पुरुषस्य न स्वतः, सर्वदा सर्वभानापत्तेः। ताश्च बुद्धिवृत्तयो नाज्ञातास्तिष्ठन्ति ज्ञानेच्छासुखादीनामज्ञातसत्तास्वीकारे तेष्वपि घटादाविव संशयादिप्रसङ्गादहम् अहं जानामि न वा, सुखी न वेत्यादिरूपेण। अतस्तेषां सदा ज्ञातत्वात् तद्द्रष्टा चेतनोऽपरिणामीत्यायातम्। चेतनस्य परिणामित्वे कदाचिदान्ध्यपरिणामेन सत्या

---

१. शरीर-बुद्ध्यादिभ्यः पृथग्रूपेण आत्मास्तित्वस्य प्रतिपादनं शान्तिपर्वणि विद्यते (अ० २०३); शरीरव्यतिरिक्तात्मनः साक्षात्कारोपायोऽपि २०४ तमेऽध्याये विवृतः।

अपि बुद्धिवृत्तेरदर्शनेन संशयाद्यापत्तेरिति । एवं पाराध्यापाराध्यादिकमपि पूर्वोक्तं[1] वैधर्म्यजातं बोध्यम् ॥२॥

ज्ञातारूप आत्मा देहादि ( देह, मन, बुद्धि आदि प्राकृत पदार्थ ) से पृथक् है, क्योंकि देहादि परिणामी, परप्रकाश्य एवं जड़ हैं और आत्मा अपरिगामी, स्वप्रकाश एवं अजड ज्ञातृस्वरूप है ।

## षष्ठीव्यपदेशादपि ॥३॥

ममेदं शरीरं ममेयं बुद्धिरित्यादेर्विदुषां षष्ठीव्यपदेशादपि देहादिभ्य आत्मा भिन्नः । अत्यन्ताभेदे षष्ठ्यनुपपत्तेरित्यर्थः । तदुक्तं विष्णुपुराणे--

त्वं किमेतच्छिरः किन्तु शिरस्तव तथोदरम् ।
किमु पादादिकं त्वं वै तवैतद्धि महीपते ॥
समस्तावयवेभ्यस्त्वं पृथग् भूप व्यवस्थितः ।
कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ॥[2]

इति । न च स्थूलोऽहमित्यादिरपि विद्वद्व्यपदेशोऽस्तीति वाच्यम् ; श्रुत्या बाधिततया ममात्मा भद्रसेन इतिवद् गौणत्वेनैव तदुपपत्तेरिति ॥३॥

'मेरा शरीर' 'मेरी बुद्धि' इत्याकार जो भेदमूलक व्यपदेश ( षष्ठी विभक्ति द्वारा ) होता है, उससे भी देहादि-विलक्षण आत्मा की सिद्धि होती है ।

ननु पुरुषस्य चैतन्यम् , राहोः शिरः, शिलापुत्रस्य शरीरमित्यादिव्यपदेशवदयमपि भवतु; तत्राह--

## न शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥४॥

शिलापुत्रस्य शरीरमित्यादिवदयं षष्ठीव्यपदेशो न भवति शिलापुत्रादिस्थले धर्मिग्राहकप्रमाणेन बाधाद्विकल्पमात्रम् । मम शरीरमितिव्यपदेशे तु प्रमाणबाधो नास्ति देहात्मताया एव बाधादित्यर्थः । यस्तु शास्त्रेषु ममकारप्रतिषेधः स स्वाम्यस्यानित्यतया वाचारम्भणमात्रत्वेनासत्यतापर एवेति भावः । पुरुषस्य चैतन्यमित्यत्राप्यस्ति धर्मिग्राहकमानबाधः । अनवस्थाभयेन लाघवाच्च देहादिव्यतिरिक्ततयाऽत्मसिद्धौ चैतन्यस्वरूपतावगाहनादिति ॥४॥

यदि कहा जाए कि शिलापुत्र ( लोढा ) का देह ( आकृति ) इस व्यपदेश में एक ही पदार्थ में जिस प्रकार षष्ठीविभक्ति का प्रयोग होता है, उसी प्रकार 'मेरा मन', 'मेरा शरीर' कहने पर भी मैं ( आत्मा ) और देहादि का एकत्व ही सिद्ध होता है, तो उत्तर यह है कि 'शिलापुत्र' के उदाहरणमें प्रत्यक्ष प्रमाण से ही सिद्ध होता है कि

---

१. द्र० ३।६६ सू०

२. विष्णु पु० २।१३।९८-९९ (मुद्रित-पुराणे ईषत्पाठभेदोऽवलोक्यते) ।

दोनों एक ही हैं, भेदपूर्वक कथन ही किया गया है। 'मेरा शरीर' इस व्यवहार में जो भेदज्ञापक षष्ठी है, वह भेद किसी प्रमाण से निरस्त नहीं होता।

देहादिव्यतिरिक्ततया पुरुषमवधार्य तन्मुक्तिमवधारयति—

**अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥५॥**

सुगमम् ॥५॥

दुःख की अत्यन्त निवृत्ति होने पर ही कृतकृत्यता होती है।

ननु दुःखनिवृत्त्या सुखस्यापि निवर्त्तनात् तुल्यायव्ययत्वेन न सा पुरुषार्थ इति तत्राह—

**यथा दुःखात् क्लेशः पुरुषस्य न तथा सुखादभिलाषः ॥६॥**

विषयविधया हेतुतायां पञ्चम्यौ। क्लेशश्चात्र द्वेषः। यथा दुःखे द्वेषो बलवत्तरो नैवं सुखेऽभिलाषो बलवत्तरोऽपि तु तदपेक्षया दुर्बल इत्यर्थः। तथा च सुखाभिलाषं बाधित्वापि दुःखद्वेषो दुःखनिवृत्तावेवेच्छां जनयतीति न तुल्यायव्ययत्वमिति। तदुक्तम्—

अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे।[1]

इति। या तु नरकादिदुःखदर्शनेऽपि क्षुद्रसुखप्रवृत्तिः सा रागादिदोषवशादेवेति ॥६॥

दुःख के प्रति किसी प्राणी का यादृश उत्कट क्लेश (द्वेष) होता है, सुख के लिये तादृश उत्कट अभिलाष नहीं होता। दुःखनिवृत्ति की इच्छा सुखप्राप्ति की इच्छा से बलवती होती है।

सुखापेक्षया दुःखस्य बहुत्वादपि दुःखनिवृत्तिरेव पुरुषार्थ इत्याह—

**कुत्रापि कोऽपि सुखीति ॥७॥**

अनन्ततृणवृक्षपशुपक्षिमनुष्यादिमध्ये स्वल्पो मनुष्यदेवादिरेव सुखी भवतीत्यर्थः। इति हेतौ ॥७॥

प्राणियों में शायद ही कहीं कोई सुखी दिखाई पड़ता है।

तदपि कादाचित्कं काचित्कसुखं मधुविषसम्पृक्तान्नवद्विचारकाणां हेयमेवेत्याह—

---

1. कुमारसंभवम् १।५३

**तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते विवेचकाः ॥८॥**

तदपि पूर्वसूत्रोक्तं सुखमपि दुःखमिश्रितमित्यतो दुःखकोटौ सुखदुःखविवेचका निःक्षिपन्त इत्यर्थः। तदुक्तं योगसूत्रेण—परिणामतापसंस्कारदुःखैर्गुण 'वृत्तिनिरोधाच्च सर्वमेव दुःखं विवेकिनः'[1] इति। विष्णुपुराणेऽपि—

यद्यत् प्रीतिकरं पुंसां वस्तु मैत्रेय जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥[2]

इति ॥८॥

वैषयिक सुख भी दुःख से अन्वित होता है, अतः विवेचक व्यक्ति उस सुख को दुःखपक्ष में गिनते हैं।

केवला दुःखनिवृत्तिर्न पुरुषार्थः, किन्तु सुखोपरक्तेति मतमपाकरोति—

**सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात् ॥९॥**

सुखलाभाभावान्मोक्षाख्यदुःखाभावस्यापुरुषार्थत्वमिति चेन्न, पुरुषार्थस्य द्वैविध्यात् द्विप्रकारत्वात्—सुखत्वदुःखाभावत्वाभ्यामित्यर्थः। सुखी स्यां दुःखी न स्यामिति हि पृथगेव लोकानां प्रार्थना दृश्यत इति ॥९॥

केवल अत्यन्तदुःखनिवृत्ति पुरुषार्थ नहीं हो सकती, क्योंकि उसमें सुख की प्राप्ति नहीं होती—ऐसा कहना उचित नहीं है, क्योंकि द्विविध पुरुषार्थ माना जाता है—सुखी होना और दुःखी न होना। यतः निरवच्छिन्न सुख नहीं मिल सकता, अतः सत्त्वबहुल सुख चित्तका शाश्वत रोध करना पड़ता है।

शङ्कते—

**निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः ॥१०॥**

नन्वात्मनो निर्गुणत्वं सुखदुःखमोहाद्यखिलगुणशून्यत्वं नित्यमेव सिद्धम्, असङ्गत्वश्रुतेः[3]—विकारहेतुसंयोगाभावश्रवणात्। तं विना च गुणाख्यविकारासम्भवात्। अतो न दुःखनिवृत्तिरपि पुरुषार्थो घटत इत्यर्थः। ननु संयोगं विना स्वयमेव विकारो भवत्विति चेन्न—

दाहाय नानलो वह्नेर्नापः क्लेदाय चाम्भसः।
तद्द्रव्यमेव तद्द्रव्यविकाराय न वै यतः ॥

---

१. २।१५ सूत्रम्।
२. विष्णु० ६।५।५५
३. बृहदा० ४।३।१६

किञ्च स्वयं विकारित्वे मोक्षो नैवोपपद्यते।
स्वयं मोहविकारेण पुनर्बन्धप्रसङ्गतः॥[1]

इति। तथा चोक्तं कौर्मे—

यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि॥[2] इति॥१०॥

श्रुति में आत्मा को असंग कहा गया है, अतः आत्मा निर्गुण है (निर्गुण होने के कारण आत्मा में सुख या दुःख नहीं है)।

समाधत्ते—

**परधर्मत्वेऽपि तत्सिद्धिरविवेकात्॥११॥**

सुखदुःखादिगुणानां चित्तधर्मत्वेऽपि तत्रात्मनि सिद्धिः प्रतिबिम्बरूपेणावस्थितिः। अविवेकान्निमित्तात्, प्रकृतिपुरुषसंयोगद्वारेत्यर्थः। एतच्च प्रथमाध्याये प्रतिपादितम्।[3] निमित्तत्वमविवेकस्य न दृष्टहानिरिति (३।७४) तृतीयाध्यायसूत्रे चेति। तथा च स्फटिके लौहित्यमिव पुरुषे प्रतिबिम्बरूपेण दुःखसत्त्वात् तन्निवृत्तिरेव पुरुषार्थः। प्रतिबिम्बद्वारकदुःखसम्बन्धस्यैव भोगतया प्रतिबिम्बरूपेणैव दुःखस्य हेयत्वादिति॥११॥

सुख-दुःखादिगुण चित्त के धर्म हैं, पर आत्मा में उनका अवस्थान (प्रतिबिम्बरूपेण) माना जाता है। अविवेकरूप निमित्त से ही यह विपर्यय-ज्ञान संभव होता है। अविवेक (अविद्या) से द्रष्टा-दृश्य-संयोग, उससे गुणवैषम्य, उससे सुखादिवृत्तियों का उद्भव होता है। मूल में पुरुष का उपदर्शन है अतः उपचारदृष्टि से आत्मा में सुखादि की स्थिति मानी जाती है।

अविवेकमूलः पुरुषे गुणबन्धोऽविवेकस्तु किम्मूलक इत्याकाङ्क्षायामाह—

**अनादिरविवेको[4]ऽन्यथा दोषद्वयप्रसक्तेः॥१२॥**

अगृहीतासंसर्गकमुभयविषयकज्ञानमविवेकः। स च प्रवाहरूपेणानादिश्चित्तधर्मः प्रलये वासनारूपेण तिष्ठति। अन्यथा तस्य सादित्वे दोषद्वयप्रसङ्गात्। सादित्वे हि स्वत एवोत्पादे मुक्तस्यापि बन्धापत्तिः। कर्मादि-

---

१. द्र० भूमिका।

२. कूर्म० २।२।१२–१३

३. १।५५ सू० द्र०। अत्रार्थे १।१९, १।८७, १।९९, १।१०६ सूत्राणि चापि द्रष्टव्यानि।

४. द्र० सांख्य सू० ६।६७-६८

जन्यत्वे च कर्मादिकं प्रत्यपि कारणत्वेनाविवेकान्तरान्वेषणेऽनवस्थेत्यर्थः। अयं चाविवेको वृत्तिरूपः प्रतिबिम्बात्मना पुरुषधर्म इव भवतीत्यतः पुरुषस्य बन्धप्रयोजक इति प्रागेवोक्तं वक्ष्यते[1] च ॥१२॥

यद्यपि संयोग अविवेकमूलक है, पर किसी काल में अविवेक द्वारा संयोग हुआ है—ऐसा नहीं; अविवेक प्रवाहरूपेण अनादि है; अविवेकसंस्कार से अविवेक-प्रत्यय, उससे पुनः संस्कार—इस प्रकार संसरणक्रिया चलती रहती है। ( अविवेक विद्याविरोधी अज्ञानरूप चित्तवृत्तिविशेष है )। यदि अविवेक को आदिमान् माना जाय तो उसकी स्वत उत्पत्ति माननी होगी, सुतरां मुक्त का भी बन्धप्रसंग प्राप्त होगा। किंच अविवेक को यदि कर्मादिजन्य माना जाय तो कर्मादि के प्रति कारणरूप से अविवेकान्तर का अन्वेषण करना पड़ेगा—इस प्रकार अनवस्थादोषका प्रसंग होगा।

ननु चेदनादिस्तर्हि नित्यः स्यादिति; तत्राह—

**न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥१३॥**

आत्मवन्नित्योऽखण्डानादिर्न भवति किन्तु प्रवाहरूपेणानादिः। अन्यथाऽनादिभावस्योच्छेदानुपपत्तेरित्यर्थः ॥१३॥

यह अविवेक यद्यपि अनादि है, परन्तु नित्य नहीं है ( आत्मा की तरह ), अन्यथा उसका उच्छेद नहीं होता। अविवेक प्रवाहरूपेण अनादि है, वह परिणाम-शील चित्त का धर्म है, सुतरां योग्य हेतु से उसका नाश हो ही सकता है।

बन्धकारणमुक्त्वा मोक्षकारणमाह—

**प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥१४॥**

अस्य बन्धकारणस्याविवेकस्य शुक्तिरजतादिस्थले प्रतिनियतं यन्नाश-कारणं विवेकस्तन्नाश्यत्वं तमोवत्। अन्धकारो हि प्रतिनियतेनालोकेनैव नाश्यते नान्यसाधनेनेत्यर्थः। तदुक्तं विष्णुपुराणे—

> अन्धन्तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम्।
> यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥[2] इति ॥१४॥

बन्धकारण अविवेक निश्चित हेतु से नष्ट होता है। ( यह हेतु विवेक है )। जिस प्रकार अन्धकार आलोक रूप कारण से निश्चयेन नष्ट होता है, उसी प्रकार यहाँ भी समझना चाहिए।

विवेकेनैवाविवेको नाश्यत इति प्रतिनियमस्य ग्राहकमप्याह—

---

१. ६।६८ सू० द्र०

२. विष्णु पु० ६।५।६२; अत्राज्ञानम्, इन्द्रियभवं ज्ञानं, विवेकजं ज्ञानं च लक्षितम्।

**अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥१५॥**

ध्वान्तालोकयोरिव प्रकृतेऽपि प्रतिनियमः शुक्तिरजतादिष्वन्वयव्यतिरेकाभ्यामेव ग्राह्य इत्यर्थः । अथवैवं व्याख्येयम्—ननु विवेकस्यापि किं प्रतिनियतं कारणं तत्राह—अत्रापि विवेकेऽपि कारणनियमोऽन्वयव्यतिरेकाभ्यामेव सिद्धः । श्रवणमननिदिध्यासनरूपमेव कारणं न तु कर्मादीति । कर्मादिकं तु बहिरङ्गमेवेत्यर्थः ॥१५॥

विवेक से ही यह अविवेक नष्ट होता है, अन्य किसी से नहीं। यह नियम अन्वय-व्यतिरेक से जाना जाता है, यथा—जब तक विवेक का उदय नहीं होता तब तक अविवेक-मूलक कर्म-प्रत्ययादि होते हैं; जब से विवेक उत्पन्न होने लगता है तभी से क्लिष्ट संस्कारादि क्षीण होने लगते हैं, अतः यह मानना पड़ता है कि विवेक ही ( कर्मादि नहीं ) अविवेक का नाशक है।

बन्धस्य स्वाभाविकत्वादिकं न सम्भवतीति प्रथमपादोक्तं स्मारयति[1]—

**प्रकारान्तरासम्भवादविवेक एव बन्धः ॥१६॥**

बन्धोऽत्र दुःखयोगाख्यबन्धकारणम् । शेषं सुगमम् ॥१६॥

बन्ध ( दुःखयोगरूप बन्ध ) का हेतु अविवेक ही है, अन्य कुछ नहीं हो सकता। (गौणतः अविवेक को भी दुःखसंयोग रुप बन्धन कहा जाता है )।

ननु मुक्तेरपि कार्यतया विनाशापत्त्या पुनर्बन्धः स्यादिति; तत्राह—

**न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः ॥१७॥**

भावकार्यस्यैव विनाशितया मोक्षस्य नाशो नास्ति—'न स पुनरावर्त्तत इति श्रुते[2]'रित्यर्थः । अपिशब्दः पूर्वसूत्रोक्तार्थसमुच्चये ॥१७॥

मुक्त पुरुष का पुनः बन्धनयोग नहीं हो सकता, क्योंकि श्रुति में मुक्त पुरुषों की अनावृत्ति कही गई है।

**अपुरुषार्थत्वमन्यथा ॥१८॥**

अन्यथा मुक्तस्यापि पुनर्बन्धे प्रलयवदेव मोक्षस्यापुरुषार्थत्वं परमपुरुषार्थत्वाभावो वा स्यादित्यर्थः ॥१८॥

---

१. १।७–५५ सूत्रेषु बन्धनिमित्तानि विवृतानि ।

२. छान्दोग्य ८।१५।१

यदि मुक्त पुरुष का भी बन्धन माना जाय तो मुक्ति को पुरुषार्थ ( अत्यन्त-पुरुषार्थ ) मानना व्यर्थ होगा । जिस प्रकार प्रलयावस्था को पुरुषार्थ नहीं माना जाता ( उस अवस्था में जीव दुःखशून्य होता है, पर उसका पुनः संसरण होता है ), उसी प्रकार मोक्षावस्था को भी पुरुषार्थ नहीं माना जायेगा यदि उस अवस्था से पुनरावृत्ति हो ।

अपुरुषार्थत्वे हेतुमाह—

**अविशेषापत्तिरुभयोः ॥१९॥**

भाविबन्धत्वसाम्येनोभयोर्मुक्तबद्धयोर्विशेषो न स्यात् । ततश्चापुरुषार्थत्वमित्यर्थः ॥१९॥

पुनरावृत्ति मानने पर 'आगामी काल में बन्धन हो सकता है'—इस हेतु से बद्धावस्था और मुक्तावस्था समान हो जायेंगी ।

नन्वेवं बद्धमुक्तयोर्विशेषाभ्युपगमे नित्यमुक्तत्वं कथमुच्यते; तत्राह—

**मुक्तिरन्तरायध्वस्तेर्न परः[1] ॥२०॥**

वक्ष्यमाणान्तरायस्य ध्वंसादतिरिक्तः पदार्थो न मुक्तिरित्यर्थः । यथाहि स्वभावशुक्लस्य स्फटिकस्य जपोपाधिनिमित्तं रक्तत्वं शौक्ल्यावरकरूपं विघ्नमात्रम् न तु जपोपधानेन शौक्ल्यं नश्यति जपापाये[2] चोत्पद्यते; तथैव स्वभावनिर्दुःखस्यात्मनो बुद्ध्युपाधिकं दुःखप्रतिबिम्बं तदावरकरूपं विघ्नमात्रं न तु बुद्ध्युपधानेन दुःखं जायते तदपाये च नश्यतीति । अतो नित्यमुक्त आत्मा, बन्धमोक्षौ तु व्यावहारिकावित्यविरोध इति ॥२०॥

मुक्ति वस्तुतः किसी अप्राप्त अवस्था की उपलब्धि नहीं है; अन्तराय के नाश होने पर मुक्तस्वभाव आत्मा का जो स्वरूपावस्थान है, वही मुक्ति है ( बद्धावस्था में भी आत्मा में कोई विकार नहीं होता ) । चित्त ही दुःख से मुक्त होता है, चित्त ही अविवेक से संसरण करता रहता है । बद्ध और मुक्त चित्त के उपदर्शक के रूप में अपरिणामी पुरुष स्थित है ।

नन्वेवं बन्धमोक्षयोर्मिथ्यात्वे मोक्षस्य पुरुषार्थताप्रतिपादकश्रुत्यादिविरोध इत्याह—

१. अतएव दृशेः पुरुषस्य कैवल्यं हानमित्युच्यते (योगसू० २।२५) । 'दुःखकारणनिवृत्तौ दुःखोपरमो हानं तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम्' इत्यत्र व्यासभाष्यम् । अत्रेदं मोक्षधर्मवचनमालोच्यम्—दुःखं विद्यादुपादानादभिमानाच्च वर्धते । त्यागात् तेभ्यो निरोधः स्यात् निरोधज्ञो विमुच्यते (२१३।१९) ।

२. जवापाये, जबापाये चेति अपपाठौ ।

**तत्राप्यविरोधः ॥२१॥**

तत्राप्यन्तरायध्वंसस्य मोक्षत्वेऽपि पुरुषार्थत्वाविरोध इत्यर्थः । दुःखयोगवियोगावेव हि पुरुषे कल्पितौ न तु दुःखभोगोऽपि । भोगश्च प्रतिबिम्बरूपेण दुःखसम्बन्ध इत्यत प्रतिबिम्बरूपेण दुःखनिवृत्तिर्यथार्थैव पुरुषार्थः । स एवान्तरायध्वंसः । तादृशश्च मोक्षो यथार्थ एवेति भावः ॥२१॥

पुरुष की दृष्टि में बन्धन और मोक्ष अवास्तव हैं, अतः अन्तरायध्वंस रूप मुक्ति पुरुषार्थ नहीं है, ऐसा नहीं कहा जा सकता; चित्त की दृष्टि से यह कहना ही होगा कि वास्तव दुःख की वास्तव निवृत्ति होती है ( मोक्षावस्था में ), अतः मोक्ष वास्तव है। मुक्तस्वभाव पुरुष की दृष्टि में ऐसा कहना औपचारिक प्रयोग है।

नन्वन्तरायध्वंसमात्रं चेन्मुक्तिस्तर्हि श्रवणमात्रेणैव तत्सिद्धिः स्यात् । अज्ञानप्रतिबद्धकण्ठचामीकरसिद्धिवदिति; तत्राह—

**अधिकारित्रैविध्यान्न[1] नियमः ॥२२॥**

उत्तममध्यमाधमास्त्रिविधा ज्ञानाधिकारिणः । तेन श्रवणमात्रानन्तरमेव मानससाक्षात्कारः सर्वेषामिति न नियम इत्यर्थः । अतो मन्दाधिकारदोषाद्विरोचनादीनां श्रवणमात्राच्चित्तविलायनक्षमं मानसज्ञानं नोत्पन्नम्, न तु श्रवणस्य ज्ञानजननासामर्थ्यादिति ॥२२॥

मुक्ति यद्यपि बन्धध्वंसमात्र है एवं वह पुरुष की दृष्टि में औपचारिक है, पर श्रवणमात्र से मोक्षसिद्धि नहीं होती, क्योंकि मोक्षाधिकारी में प्रकारभेद है। यह अधिकारी त्रिविध है—उत्तम, मध्यम और अधम।

न केवलं श्रवणमात्रं ज्ञाने दृष्टकारणमन्यदपीत्याह—

---

१. अधिकारिचिन्ता सांख्याचार्यै निगूढं कृतेति विज्ञायते (द्र० सू० १।७०,३।७६)। करालजनकं प्रति वसिष्ठेन यः सांख्योपदेशो दत्तः, तस्यान्तेऽपि सांख्यज्ञानाधिकारिणः स्वरूपं विवृतम्, यथा—नावेदनिष्ठस्य जनस्य राजन् प्रदेयमेतत् परमं त्वया भवेत् । विधित्समानाय विबोधकारणम् प्रबोधहेतोः प्रणतस्य शासनम् ॥३०८।३२॥ न देयमेतच्च तथानृतात्मने शठाय क्लीबाय न जिह्मबुद्धये । न पण्डितज्ञानपरोपतापिने देयं तु देयं च निबोध यादृशे ॥३३॥ श्रद्धान्वितायाथ गुणान्विताय परापवादाद् विरताय नित्यम् । विशुद्धयोगाय बुधाय नित्यं क्रियावते च क्षमिणे हिताय ॥३४॥ विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय । विजानते चैव न चाहितक्षमे दमे च शक्ताय शमे च देयम् ॥३५॥ एतै गुणैर्हीनतमे न देयमेतत् परं ब्रह्म विशुद्धमाहुः । न श्रेयसा योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ॥३६॥

**दार्ढ्यार्थमुत्तरेषाम् ॥२३॥**

श्रवणादुत्तरेषां मनननिदिध्यासनादीनामन्तरायध्वंसस्यात्यन्तिकत्वरूप-दार्ढ्यार्थं नियम इत्यनुषज्यते ॥२३॥

आत्मज्ञानसम्बन्धी श्रवण के बाद मनन-ध्यान की विधि है, क्योंकि इस क्रम से ही मध्यम और अधम अधिकारी अन्तरायध्वंस रूप मोक्ष के लिये अभ्यास कर सकते हैं।

उत्तराण्येव साधनान्याह—

**स्थिरसुखमासनमिति[1] न नियमः ॥२४॥**

आसने पद्मासनादिनियमो नास्ति। यतः स्थिरं सुखं च यत् तदेवासन-मित्यर्थः ॥२४॥

पद्म, सिद्ध आदि आसनों में ही बैठना चाहिए, ऐसा कोई नियम नहीं है; जैसी शारीरिकस्थिति में सात्त्विक प्रसन्नता और स्थिरता का बोध हो, वही 'आसन' समझना चाहिए।

मुख्यं साधनमाह—

**ध्यानं निर्विषयं मनः[2] ॥२५॥**

वृत्तिशून्यं यदन्तःकरणं भवति तदेव ध्यानं योगश्चित्तवृत्तिनिरोधरूप इत्यर्थः। एतत्साधनत्वेन ध्यानस्य वक्ष्यमाणत्वादिति ॥२५॥

मन जब विषयशून्य हो जाता है, तब वह ध्यानावस्था (योग) कहलाती है।

ननु योगायोगयोः पुरुषस्यैकरूप्यात् किं योगेनेत्याशङ्क्य समाधत्ते—

**उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥२६॥**

उपरागनिरोधाद् वृत्तिप्रतिबिम्बापगमाद्योगावस्थायामयोगावस्थातो विशेषः पुरुषस्येति सिद्धान्तदलार्थः। शेषं व्याख्यातप्रायम् ॥२६॥

यद्यपि योग और संसार इन दो अवस्थाओं में पुरुष एकरूप ही है, तथापि योगावस्था में द्रष्टा का वृत्तिसारूप्य नहीं प्रतीत होता—उसका स्वरूपावस्थान ही होता है। बद्ध और मोक्ष चित्त की दृष्टि से हैं—चित्त ही बद्ध होता है, और परवैराग्यबल से अव्यक्तभाव प्राप्त होकर मुक्त (दुःख से) होता है।

---

१. अत्र ३।३४ सूत्रमपि आलोच्यम्।

२. अत्र ३।३० सूत्रमपि आलोच्यम्। आह मैत्र्युपनिषद्—'अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः' इति (२।१)। स्कन्दोपनिषद्यपि (११) तथैवोक्तम्।

ननु निःसङ्गे कथमुपरागस्तत्राह—

**निःसङ्गेऽप्युपरागोऽविवेकात् ॥२७॥**

निःसङ्गे यद्यपि पारमार्थिक उपरागो नास्ति तथाप्युपराग इव भवतीति कृत्वा प्रतिबिम्ब एवोपराग इति व्यवह्रियते उपरागविवेकिभिरित्यर्थः ॥२७॥

परमार्थतः पुरुष उपरागशून्य है, पर अविवेक से उपराग की प्रतीति होती है ( अविवेक से पुरुष और बुद्धि की एकात्मता का अनुभव होता है, जिससे बोद्धा जीव का अज्ञानमूलक संसरण होता रहता है ) ।

एतदेव विवृणोति—

**जपा[1]स्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥२८॥**

यथा जपास्फटिकयोर्नोपरागः किन्तु जपाप्रतिबिम्बवशादुपरागाभिमानमात्रं रक्तः स्फटिक इति, तथैव बुद्धिपुरुषयोर्नोपरागः, किन्तु बुद्धिप्रतिबिम्बवशादुपरागाभिमानोऽविवेकवशादित्यर्थः। अत उपरागतुल्यतया वृत्तिप्रतिबिम्ब एव पुरुषोपराग इति सूत्रद्वयपर्यवसितोऽर्थः[2]। एष एव च दुःखात्मकवृत्तेरुपरागो दुःखनिवृत्याख्यमोक्षस्यान्तरायस्तस्य च ध्वंसश्चित्तलयात्, सोऽपि च चित्तवृत्तिनिरोधाख्येनासम्प्रज्ञातयोगेनेत्यतो योगादेवान्तरायध्वंसो भवतीति योगशास्त्रस्यापि सिद्धान्तः ॥२८॥

यह उपराग ( पुरुष में बुद्धिधर्म का आरोप करना, जो अस्मिताक्लेश का मूल है ) कोई वास्तव सत्य नहीं है। जिस प्रकार स्फटिक के पास स्थित जपापुष्प का वर्ण वस्तुतः स्फटिक में संक्रान्त नहीं होता, पर प्रतिबिम्बित होता है, जिससे 'स्फटिक लाल है' ऐसी भ्रान्तिमूलक बुद्धि उत्पन्न होती है, उसी प्रकार बुद्धि में पुरुष संक्रान्त नहीं होता, पर अविवेकी व्यक्ति पुरुष को बुद्धिधर्माक्रान्त समझता है, जिस अज्ञान के कारण प्राणी का संसरण होता रहता है।

'ध्यानं निर्विषयं मन' इति (६।२५) योग उक्तस्तस्य साधनान्याचक्षाण एव यथोक्तोपरागस्य निरोधोपायमाह—

**ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥२९॥**

---

१. जवा—जबा—पाठौ असाधू।

२. तथा च स्मर्यते—यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः। दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः' इति (भागवते ७।७।११) इत्यधिकः पाठ एतदनन्तरम् पठ्यते क्वचित्।

समाधिद्वारा ध्यानं योगस्य कारणम्, ध्यानस्य च कारणं धारणा, तस्याश्च कारणमभ्यासश्चित्तस्थैर्यसाधनानुष्ठानमभ्यासस्यापि कारणं विषय-वैराग्यम्, तस्यापि दोषदर्शनयमनियमादिकमिति पातञ्जलोक्तप्रक्रियया तन्निरोध उपरागनिरोधो भवति चित्तवृत्तिनिरोधाख्ययोगद्वारेत्यर्थः ॥२९॥

इस उपराग ( द्रष्टा का वृत्तिसारूप्य ) का निरोध ध्यान, धारणा, अभ्यास और वैराग्य आदि से होता है।

चित्तनिष्ठध्यानादिना पुरुषस्योपरागनिरोधे पूर्वाचार्यसिद्धं द्वारं दर्शयति—

**लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥३०॥**

ध्यानादिना चित्तस्य निद्रावृत्तेः प्रमाणादिवृत्तेश्च निवृत्त्या पुरुषस्यापि वृत्त्युपरागनिरोधो भवति। बिम्बनिरोधे प्रतिबिम्बस्यापि निरोधादिति पूर्वाचार्या आहुरित्यर्थः। यथा पतञ्जलिः—योगश्चित्तवृत्तिनिरोधस्तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्रेतिसूत्रत्रयेणैतदेवाह[2]। तथा—

नित्यः सर्वत्रगो ह्यात्मा बुद्धिसन्निधिमत्तया।
यथा यथा भवेद् बुद्धिरात्मा तद्वदिहेष्यते ॥[3]

इत्यादिस्मृतयोऽप्येतदाहुरिति। तदेवमसम्प्रज्ञातयोगादेव मोक्षान्तरायध्वंस इति प्रघट्टकार्थः ॥३०॥

आचार्य कहते हैं कि ध्यान आदि से लयवृत्ति और विक्षेपवृत्ति का निरोध करना चाहिए, इससे वृत्त्युपराग की उपशान्ति होती है। विक्षेप = वृत्ति का निरोध; लय = चित्त का वृत्तिशून्य होकर संस्काररूप में स्थिति। वृत्तिसंस्कार-धर्मक चित्त का लय करने से ही उपराग की निवृत्ति होती है।

ध्यानादौ गुहादिस्थाननियमो नास्तीत्याह—

**न स्थाननियमश्चित्तप्रसादात् ॥३१॥**

चित्तप्रसादादेव ध्यानादिकम्। अतस्तत्र न गुहादिस्थाननियम इत्यर्थः। शास्त्रे त्वौत्सर्गिकाभिप्रायेणैवारण्यगिरिगुहादिस्थानं योगस्योद्दिष्टमिति। अत एव ब्रह्मसूत्रमपि—यत्रैकाग्रता तत्राविशेषादिति[4] ॥३१॥

---

१. द्र० मैत्रायण्युपनिषद्वाक्यम्—लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम्। यदा यात्यमनीभावं तदा तत् परमं पदम् ॥ (४।७) ॥

२. १।२-४ सूत्राणि।

३. द्र० भूमिका।

४. ब्रह्मसूत्रं ४।१।११

ध्यानादि के लिये गुहादिस्थान अपेक्षित हैं—ऐसा कोई नियम नहीं है। जहाँ भी चित्त प्रसन्न और स्थिर हो जाए, वहीं ध्यानादि का अभ्यास किया जा सकता है।

समाप्तो मोक्षविचारः; इदानीं पुरुषापरिणामित्वाय जगत्कारणं विचारयति—

**प्रकृतेराद्योपादानताऽन्येषां कार्यत्वश्रुतेः ॥३२॥**

महदादीनां कार्यत्वश्रवणात् तेषां मूलकारणतया प्रकृतिः सिद्ध्यतीत्यर्थः ॥३२॥

श्रुति में कहा गया है कि महत्, अहंकार, तन्मात्रा आदि सब कार्य हैं, अतः प्रकृति ही आद्य उपादान है। शास्त्रान्तरोक्त अणु आदि की कार्यता भी श्रुति में कही गई है।

पुरुष एवोपादानं भवतु; तत्राह—

**नित्यत्वेऽपि नात्मनो योग्यत्वाभावात् ॥३३॥**

गुणवत्त्वं सङ्गित्वं चोपादानयोग्यता तयोरभावात्पुरुषस्य नित्यत्वेऽपि नोपादानत्वमित्यर्थः ॥३३॥

यद्यपि पुरुष ( आत्मा ) नित्य है, पर वह ग्राह्य-ग्रहणरूप प्रपञ्च का उपादान होने के लिये योग्य नहीं है ( चूँकि पुरुष परिणामी नहीं है )।

ननु 'बह्वीः प्रजाः पुरुषात् सम्प्रसूता' इत्यादिश्रुतेः[1] पुरुषस्य कारणत्वावगमाद्विवर्त्तादिवादा आश्रयणीया इत्याशङ्क्याह—

**श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥३४॥**

पुरुषकारणतायां ये ये पक्षाः सम्भावितास्ते सर्वे श्रुतिविरुद्धा इत्यतस्तदभ्युपगन्तॄणां कुतार्किकाद्यधमानामात्मस्वरूपज्ञानं न भवतीत्यर्थः। एतेनात्मनि सुखदुःखादिगुणोपादानत्ववादिनोऽपि कुतार्किका एव, तेषामप्यात्मयथार्थज्ञानं नास्तीत्यवगन्तव्यम्। आत्मकारणताश्रुतयश्च शक्तिशक्तिमदभेदेनोपासनार्था एव, अजामेकामित्यादिश्रुतिभिः[2] प्रधानकारणासिद्धेः। यदि चाकाशस्याभ्राद्यधिष्ठानकारणतावदात्मनः कारणत्वमुच्यते तदा तन्न निराकुर्मः, परिणामस्यैव प्रतिषेधादिति ॥३४॥

---

१. मुण्डक २।१।५

२. श्वेताश्व० ४।५

कुतर्क के बल से यह सिद्ध नहीं किया जा सकता कि निर्गुण अपरिणामी पुरुष जगत् का उपादान है, क्योंकि इससे श्रुतिमत ( अर्थात् जगत का उपादान प्रकृति है ) का विरोध होता है ।

स्थावरजङ्गमादिषु पृथिव्यादीनामेव कारणत्वदर्शनात् कथं प्रकृतेः सर्वोपादानत्वम् ; तत्राह—

**पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥३५॥**

स्थावरादिषु परम्परया कारणत्वेऽपि तेषु प्रधानस्यानुमानादुपादानत्वमक्षतम् । यथाङ्कुरादिद्वारकत्वेऽपि स्थावरादिषु पार्थिवाद्यणूनामनुगमादुपादानत्वमित्यर्थः ॥३५॥

भौतिक, भूत आदि सभी पदार्थों का उपादान कारण प्रकृति ( प्रधान ) है, पर वह साक्षात् कारण नहीं है । भौतिक का कारण भूत, भूत का तन्मात्र, तन्मात्र का अस्मिता, अस्मिता का आस्मीतिमात्र महत्, और महत् का कारण प्रकृति है । परमाणुवादी की दृष्टि में परमाणु जिस प्रकार परम्पराक्रम से अन्तिम कारण है, उसी प्रकार यहाँ भी समझना चाहिए ।

वनन्यायेन प्रकृतेर्व्यापकत्वे प्रमाणमाह—

**सर्वत्र कार्यदर्शनाद्विभुत्वम्[1] ॥३६॥**

अव्यवस्थया सर्वत्र विकारदर्शनात् प्रधानस्य विभुत्वम् , यथाऽणोर्घटादिव्यापित्वमित्यर्थः । एतच्च प्रागेव[2] व्याख्यातम् ॥३६॥

सर्व देश और काल में प्रकृति ही कार्यरूपेण विद्यमान है, अतः प्रकृति सर्वव्यापिनी और पूर्णा है ।

ननु परिच्छिन्नत्वेऽपि यत्र कार्यमुत्पद्यते तत्र गच्छतीति वक्तव्यम् ; तत्राह—

**गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥३७॥**

गतिस्वीकारेऽपि परिच्छिन्नतया मूलकारणत्वाभावः पार्थिवाद्यणुदृष्टान्तेनेत्यर्थः । अथवेत्थं व्याख्येयम्—ननु त्रिगुणात्मकप्रधानस्यान्योऽन्यसंयोगार्थं श्रुतिस्मृतिषु क्रिया क्षोभाख्या श्रूयते, क्रियावत्त्वाच्च तन्त्वादिदृष्टान्तेन मूलकारणत्वाभाव इत्याशङ्क्य परिहरति—गतियोगेऽप्याद्यकारणताहानिरणु-

---

१. हेतुभूतमशेषस्य प्रकृतिः सा परा द्विजाः (ब्रह्म० २३।२७)

२. द्वितीयाध्यायो द्रष्टव्यः ।

वत्। गतिः क्रिया तत्सत्त्वेऽपि मूलकारणताया अहानिर्यथा वैशेषिकमते पार्थिवाद्यणूनामित्यर्थः ॥३७॥

प्रकृति में क्षोभ रूप क्रिया होती है ( गति-योग ); पर इस क्रिया के रहने पर भी उसकी आद्य कारणता ( चरम उपादानकारण ) की हानि नहीं होती। जिस प्रकार अणु में क्रिया होने पर भी उसकी चरम कारणता वैशेषिक मानते हैं, उसी प्रकार यह भी समझना चाहिए।

ननु पृथिव्यादीनां नवानामेव द्रव्याणां दर्शनात् कथं पृथिवीत्वादि-शून्यं प्रधानाख्यं द्रव्यं घटेत? न च प्रधानं द्रव्यमेव मास्त्विति वाच्यम्, संयोगविभागपरिणामादिभिर्द्रव्यत्वसिद्धेरिति; तत्राह—

**प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥३८॥**

प्रसिद्धनवद्रव्याधिक्यमेव प्रधानस्यातो नवैव द्रव्याणीति न नियम इत्यर्थः। अष्टानामेव कार्यत्वश्रवणं चात्र तर्क इति भावः ॥३८॥

प्रसिद्ध पदार्थों ( यथा वैशेषिकसंमत द्रव्यादि-पदार्थ) में प्रधान का अन्तर्भाव नहीं है, एतावता प्रधान नहीं है, ऐसा नहीं कहा जा सकता; क्योंकि पदार्थसंख्या-सम्बन्धी जो मत विभिन्न संप्रदायों में देखे जाते हैं, वे अकाट्य हैं, ऐसा कोई नियम नहीं है।

किं सत्त्वादयो गुणा एव प्रकृतिरथवा गुणत्रयरूपद्रव्यत्रयाधारभूता प्रकृतिरिति संशयेऽवधारयति—

**सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥३९॥**

सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति प्रकृतिस्वरूपत्वादित्यर्थः। यद्यपि श्रुतिस्मृतिषूभयमेव श्रूयते तथापि तर्कतः स्वरूपत्वमेवावधार्यते न तु धर्मत्वम्। तथाहि—सत्त्वादित्रयं किं प्रकृतेः कार्यरूपो धर्मोऽथवाकाशस्य वायुवत् संयोगमात्रेण नित्य एव धर्मः स्यात्? आद्ये एकस्या एव प्रकृतेर्द्रव्यान्तरसङ्गं विना विचित्रगुणत्रयोत्पत्त्यसम्भवः, दृष्टविरुद्धकल्पनानौचित्यं च। अन्त्ये नित्येभ्य एव सत्त्वादिभ्योऽन्योऽन्यसङ्गेन विचित्रसकलकार्योपपत्तौ तदतिरिक्तप्रकृति-कल्पनावैयर्थ्यमिति सत्त्वादीनां प्रकृतिकार्यत्वादिवचनानि चांशतः प्रकाशादि-कार्योपहिततयाभिव्यक्त्याऽदिकमेव बोधयन्ति यथा पृथिवीतो द्वीपोत्पत्ति-रिति[1] ॥३९॥

---

१. 'नन्वेवमष्टाविंशतितत्त्वप्रतिपादकशास्त्रविरोध इति चेन्न, तत्र प्रकृतिधर्माणां सुखा-दीनां वैशेषिकगुणानां पृथक्तत्त्वाभ्युपगमेन तत्त्वानामष्टाविंशतिसंख्योपपत्तेः।

सत्त्व, रजः, तमः रूप तीन गुण ( गुण = रज्जु; ये द्रव्य हैं ), प्रकृति के धर्म हैं—ऐसा नहीं; ये तीन प्रकृति का स्वरूप हैं।

प्रधानप्रवृत्तेः प्रयोजनमवधारयति[1] निष्प्रयोजनप्रवृत्त्यभ्युपगमे मोक्षानुपपत्तेरिति—

**अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥४०॥**

तृतीयाध्यायस्थे प्रधानसृष्टिः परार्थेत्यादिसूत्रे (३।५८) व्याख्यातमिदम् ॥४०॥

प्रकृति की सृष्टि अपने भोग के लिये नहीं, बल्कि पुरुष के लिये है ( भोग और अपवर्ग रूप दो अर्थ पुरुष के लिये हैं )। उष्ट्र जिस प्रकार अन्य के लिये कुंकुम का वहन करता है, प्रकृति की प्रवृत्ति भी उसी प्रकार परार्थ होती है।

विचित्रसृष्टौ निमित्तकारणमाह—

**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥४१॥**

कर्म धर्माधर्मौ। सुगममन्यम् ॥४१॥

कर्म ( धर्म-अधर्म ) के वैचित्र्य के अनुसार सृष्टि का वैचित्र्य होता है।

ननु भवतु प्रधानात् सृष्टिः प्रलयस्तु कस्मात्, न ह्येकस्मात् कारणाद्विरुद्धकार्यद्वयं घटते; तत्राह—

**साम्यवैषम्याभ्यां[2] कार्यद्वयम् ॥४२॥**

वस्तुतस्तु इदं सूत्रमित्थं व्याख्येयम्—सत्त्वादीनामतद्धर्मत्वं प्रकृतिकार्यमात्रत्वाऽभावः; तद्रूपत्वात् प्रकृतेरपि सत्त्वादिरूपत्वात्—सत्त्वं रजस्तम इति एषैव प्रकृतिः स्मृता इत्यादिस्मृतिभ्य इति। तथा च वैशेषिकाणां पृथिव्यादिष्विवास्माकमपि कार्यकारणोभयरूपतया सत्त्वादिषु प्रकृतिकार्यत्वादिवाक्यानामविरोधः। तत्र साम्यावस्थं सत्त्वं अंशुतुल्यं वैषम्यावस्थस्य तन्तुतुल्यस्य महत्तत्त्वादिकारणसत्त्वस्य कारणम् एवं रजस्तमसी अपि' इत्यधिकः पाठोऽत्र दृश्यते क्वचित्।

१. प्रधानप्रवृत्तेः प्रयोजनमुपसंहरति—इति पातनिकावाक्यं क्वचित् पठ्यते।

२. गुण-गुणसाम्यादिविषये शान्ति० २१२।२१–२४; २१९।२५–३१ अश्वमेध० ३६–३८ अ० च द्र०। मात्स्ये साम्यावस्थोक्ता—सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता॥ केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव जगत्सृष्टिं करोति विकरोति च ॥३।१४-१५॥

सत्त्वादिगुणत्रयम् प्रधानं, तेषां च वैषम्यं न्यूनातिरिक्तभावेन संहननं तद्भावः साम्यं ताभ्यां हेतुभ्यामेकस्मादेव सृष्टिप्रलयरूपं विरुद्धकार्यद्वयं भवतीत्यर्थः। स्थितिस्तु सृष्टिमध्ये प्रविष्टेत्याशयेन तत्कारणत्वं प्रधानस्य न पृथग्विचारितम् ॥४२॥

प्रकृति की साम्यावस्था होने पर प्रलय और वैषम्यावस्था होने पर सृष्टि होती है।

ननु प्रधानस्य सृष्टिस्वाभाव्याज् ज्ञानोत्तरमपि संसारः स्यात्; तत्राह—

**विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥४३॥**

विमुक्ततया पुरुषसाक्षात्कारद्धेतोः प्रधानस्य तत्पुरुषार्थं पुनः सृष्टिर्न भवति कृतार्थत्वात्, लोकवत्। यथा लोका अमात्यदयो राज्ञोऽर्थं सम्पाद्य कृतार्थाः सन्तो न पुनः राजार्थं प्रवर्त्तन्ते तथैव प्रधानमित्यर्थः। विमुक्त-मोक्षार्थं हि प्रधानप्रवृत्तिरित्युक्तम् (२।१)। स च ज्ञानान्निष्पन्न इति भावः॥४३॥

विवेकबल से जब पुरुषतत्त्वावधारण-पूर्वक अपवर्ग का अधिगम होता है, तब प्रधान सृष्टिकार्य से निवृत्त होता है ( विवेकी के बुद्धयादि का परिणामक्रम की निवृत्ति होती है )। जिस प्रकार अमात्य आदि राजा का कार्य निष्पन्न कर उपरत हो जाते हैं, तथैव प्रधान भी स्वतः निवृत्त हो जाता है।

ननु प्रधानस्य सृष्ट्युपरमो नास्ति, अज्ञानां संसारदर्शनात्। तथा च प्रधानसृष्ट्या मुक्तस्यापि पुनर्बन्धः स्यात्; तत्राह—

**नान्योपसर्पणेपि मुक्तोपभोगो निमित्ताभावात् ॥४४॥**

कार्यकारणसङ्घातादिसृष्ट्यान्यान् प्रति प्रधानस्योपसर्पणेऽपि न मुक्त-स्योपभोगो भवति, निमित्ताभावात्। उपभोगे निमित्तानां स्वोपाधिसंयोग-विशेषतत्कारणाविवेकादीनामभावादित्यर्थः। इदमेव हि मुक्तं प्रति प्रधान-सृष्ट्युपरमो यत् तद्भोगहेतोः स्वोपाधिपरिणामविशेषस्य जन्माख्यस्यानुत्पादन-मिति ॥४४॥

एक जीव के मुक्त होने पर भी प्रधान अन्य पुरुष के उपाधिरूप में परिणत होकर व्यक्त रहता है। मुक्त पुरुष पुनः चित्तबन्धन से बद्ध नहीं होते, क्योंकि बन्धन का हेतुभूत अविद्या उनमें नहीं रहती।

नन्वियं व्यवस्था तदा घटेत यदि पुरुषबहुत्वं स्यात्, तदेव त्वात्माद्वैत-श्रुतिबाधितमित्याशङ्क्याह—

**पुरुषबहुत्वं व्यवस्थातः ॥४५॥**

ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्तीत्या[1]दिश्रुत्युक्त-बन्ध-मोक्षव्यवस्थात एव पुरुषबहुत्वं सिद्ध्यतीत्यर्थः[2] ॥४५॥

बन्ध-मोक्ष-व्यवस्था की उपपत्ति के लिये पुरुष की बहुसंख्यकता मानी जाती है।

ननूपाधिभेदाद्बन्धमोक्षव्यवस्था स्यात्; तत्राह—

**उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम् ॥४६॥**

उपाधिश्चेत् स्वीक्रियते तदु[ु]पाधिसिद्ध्यैव पुनरद्वैतभङ्ग इत्यर्थः। वस्तुतस्तूपाधिभेदेऽपि व्यवस्था न सम्भवतीति प्रथमाध्याय एव प्रपञ्चितम्[3] ॥४६॥

पुरुष एक है और उपाधियों की अनेकता के कारण बहुजीवरूप से प्रतिभात होता है, एक जीव मुक्त होता है, अन्य बद्ध रहता है···इस रूप से पुरुषैकत्व की उपपत्ति नहीं की जा सकती, क्योंकि इस मत में उपाधि की भी नित्य सत्ता माननी होगी, जिससे द्वैतापत्ति होगी।

ननूपाधयोऽप्याविद्यका इति न तैरद्वैतभङ्ग इत्याशङ्कायामाह—

**द्वाभ्यामपि प्रमाणविरोधः ॥४७॥**

पुरुषोऽविद्येति द्वाभ्यामप्यङ्गीकृताभ्यामद्वैतप्रमाणस्य श्रुतेर्विरोधस्तदवस्थ एवेत्यर्थः ॥४७॥

उपाधि को अविद्यामय मानने पर भी पुरुष और अविद्या रूप दो सत् पदार्थ स्वीकार्य होंगे, ऐसी स्थिति में अविद्या भी सदैव रहेगी, जिससे 'अद्वैत आत्मा' की सत्ता को प्रख्यात करने वाले श्रुतिवचन से विरोध होगा।

अपरमपि दूषणद्वयमाह—

**द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥४८॥**

द्वाभ्यामप्यङ्गीकृताभ्यां हेतुभ्यां पूर्वं पूर्वपक्षो भवतां न घटते। अस्माभिरपि प्रकृतिः पुरुषश्चेति द्वयोरेवाङ्गीकारात्। विकारस्यानित्यतया वाचारम्भणमात्रताया[4] अस्माभिरपीष्टत्वात्। ननु पुरुषनानात्वस्वीकारात् प्रकृते-

---

१. श्वेताश्व० ३।१०

२. द्र० सूत्रम् १।१४९

३. द्र० १।१४९—१५२

४. द्र० छान्दोग्यवाक्यम्—वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् (६।४।१)।

विलक्षणधर्मवत्तयेत्यर्थः। अत एव निर्धर्मतया स एष नेति नेतीत्येव श्रुत्योपदिश्यते न तु विधिमुखतयेति। तथा च स्मृतिरपि—'इदं तदिति निर्देष्टुं गुरुणापि न शक्यते'।[2] इति।

जडव्यावृत्ताविति पाठेऽपि हेतौ सप्तम्यामयमेवार्थः। अस्मिंश्च सूत्रे जडमेव प्रकाशयति चिद्रूपो नत्वात्मानमिति नार्थः, तथा सति हि तस्याज्ञेयत्वेन साधकाभावरूपं बाधकं परेषूपन्यासानर्हम्, स्वस्यापि तुल्यन्यायत्वादिति ॥५०॥

जडविपरीत चिद्रूप आत्मा ( पुरुष ) जड को प्रकाशित करता है। चित् प्रकाशक और जड प्रकाश्य है।

नन्वेवं प्रमाणाद्यनुरोधेन द्वैतसिद्धावद्वैतश्रुतेः का गतिस्तत्राह—

**न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥५१॥**

अद्वैतश्रुतिविरोधस्तु नास्ति रागिणां पुरुषातिरिक्ते वैराग्यायैव श्रुतिभिरद्वैतसाधनात्। पुरुषज्ञान इव द्वैताभावज्ञाने स्वतन्त्रफलान्तराश्रवणत्। तच्च वैराग्यं सदद्वैतेनैवोपपद्यते[3], सत्त्वं च कूटस्थत्वमित्यर्थः। अत एव श्रुतिरपि सदद्वैतमेव छान्दोग्ये[4] प्रतिपादितवतीति भावः ॥५१॥

चित्-जड-रूप दो मूल पदार्थ सिद्ध होने पर भी अद्वैत श्रुति के साथ कोई विरोध नहीं है। सराग पुरुषों में आत्मातिरिक्त पदार्थ में वैराग्य उत्पन्न हो, इस दृष्टि से 'आत्मा ही है' इस प्रकार के अद्वैतबोधक वाक्य कहे गए हैं।

न केवलमुक्तयुक्त्यैवाद्वैतवादिनो हेयाः, अपितु जगदसत्यताग्राहकप्रमाणाभावेनापीत्याह—

**जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात् ॥५२॥**

निद्रादिदोषदुष्टान्तःकरणादिजन्यत्वेन स्वाप्नविषयशङ्खपीतिमादीनामसत्यत्वं लोके दृष्टं तच्च महदादिप्रपञ्चे नास्ति; तत्कारणस्य प्रकृतेर्हिरण्यगर्भ-

---

१. स एष नेति नेतीत्यात्माऽगृह्यः···(बृहदा० ३।९।२६), अथात आदेशो नेति नेति इति (बृहदारण्यक २।३।१–६), स एष नेति नेतीति माण्डूक्यकारिकावाक्यम् (३।२६) च द्र०।

२. द्र० भूमिका।

३. सदद्वैतं (सत्ताद्वैतम्) सांख्यीयमिति हेलाराज आह—सांख्ये बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमित्यतोऽनन्तरस्य विकारग्रामस्य कारणरूपानुगमात् सत्तारूपत्वमविरुद्धमिति सत्तारूपं सर्वं जगदाख्यातं भवतीति सत्ताद्वैतवादः सांख्यनयेन उपबृंहितः (जातिसमुद्देश ३४ श्लोकटीका)।

४. छान्दोग्य० ६।२।१

बुद्धेश्चादुष्टत्वात्, 'यथापूर्वमकल्पयदि'त्यादिश्रवणात्[1]। ननु 'नेह नानास्ति किञ्चने'त्या[2]दिश्रुत्या बाधितत्वेनाविद्यादिनामा कश्चनानादिर्दोषः कल्पनीयस्तत्राह—बाधकाभावादिति। अयं भावः—'नेह नानास्ति किञ्चने'त्यादि श्रुतयो याः परैः प्रपञ्चबाधकतयाभिप्रेयन्ते ताः प्रकरणानुसारेण विभागादिप्रतिषेधका एव, न तु प्रपञ्चात्यन्ततुच्छतापराः, स्वस्यापि बाधापत्त्या स्वार्थासाधकत्वप्रसङ्गात्। न हि स्वप्नकालीनशब्दस्य बाधे तज्ज्ञापितोऽप्यर्थः पुनर्न सन्दिह्यत इति। तस्मादात्माविघातकतया श्रुतयो न प्रपञ्चस्यात्यन्तबाधपरा इति।

तत्र नेह नानास्ति किञ्चनेत्यादिश्रुतेर्ब्रह्मविभक्तं किमपि नास्तीत्यर्थः। 'सर्वं समाप्नोषि ततोऽसि सर्वः'[3] इत्यादिस्मृत्यैकवाक्यत्वात्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'त्यादिश्रुतेस्तु[4] नित्यतारूपपारमार्थिकसत्ताविरहोऽर्थः, अन्यथा मृत्तिकादृष्टान्तासिद्धेः; न हि लोके मृत्तिकाविकाराणामत्यन्ततुच्छत्वं सिद्धं येन दृष्टान्तता स्यादिति।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता[5]॥

इत्यादिश्रुतेस्त्वात्मातिरिक्तस्य कूटस्थनित्यतारूपातिपरमार्थसत्ताविरहोऽर्थः। किञ्चात्मनो निरोधाद्यभावोऽर्थः। अन्यथैतादृशज्ञानस्य मोक्षफलकत्वप्रतिपादनविरोधात्। न हि मोक्षो मिथ्येति प्रतिपाद्य मोक्षस्य फलत्वमप्रमत्तः प्रतिपादयतीति। याश्चात्मैक्यश्रुतयस्तास्तु प्रथमाध्याय[6] एव व्याख्याताः। ब्रह्ममीमांसाभाष्ये[7] चैता अन्याश्च श्रुतयोऽस्माभिर्व्याख्याता इति दिक्॥५२॥

यह अनुभूयमान जगत् सत्य है (रज्जु में प्रतीयमान सर्प की तरह अलीक नहीं है।) क्योंकि जगत् अदुष्टकारणजनित है तथा इस जगत् का बाधक कोई नहीं है। सांख्यीय दृष्टि में सद्भूत गुणत्रय का व्यवसाय-व्यवसेय-परिणाम-भूत यह जगत् है। प्रत्येक परिणाम चञ्चल एवं विनाशी है, गुणसन्निवेश अनित्य है पर गुण नित्य ही है। स्थिति या गति रूप में त्रिगुण सदैव रहेंगे, अतः प्रपञ्च का अभाव भी कभी नहीं होगा।

न केवलं वर्तमानदशायामेव प्रपञ्चः सन्नपितु सदैवेत्याह—

---

१. ऋग्वेदीया शैशिरीया संहिता १०।१९०।२
२. बृहदा० ४।४।१९
३. गीता ११।४०
४. छान्दोग्य० ६।१।४
५. ब्रह्मबिन्दूपनिषद् १०; अवधूतोपनिषद् ८; आत्मोपनिषद् ३१; त्रिपुरातापन्युपनिषद् ५।१०; माण्डूक्यकारिका २।३२
६. सांख्यसूत्रम् १।१४९—१५४
७. विज्ञानामृतभाष्ये प्रथमाध्यायेऽन्तराऽन्तरा।

**प्रकारान्तरासम्भवात् सदुत्पत्तिः ॥५३॥**

पूर्वोक्तयुक्तिभिरसदुत्पादासम्भवात् सूक्ष्मरूपेण सदेवोत्पद्यतेऽभिव्यक्तं भवतीत्यर्थः ॥५३॥

चूँकि अन्य कोई प्रकार संभव नहीं है, इसलिये यह मानना पड़ता है कि सत् से सत् की उत्पत्ति होती है; कार्य अपने कारण में सूक्ष्मरूपेण रहता है और व्यापार से स्थूलरूपेण अभिव्यक्त होता है।

कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्येऽपि व्यवस्थामुपपादयति सूत्राभ्याम्—

**अहङ्कारः कर्ता न पुरुषः ॥५४॥**

अभिमानवृत्तिकमन्तःकरणमहङ्कारः, स एव कृतिमान् ; अभिमानोत्तरमेव प्रायशः प्रवृत्तिदर्शनात् , न तु पुरुषोऽपरिणामित्वादित्यर्थः। पूर्वं च 'धर्मादिकं बुद्धे'रिति[1] यदुक्तं तदेकस्यैवान्तःकरणस्य वृत्तिमात्रभेदाशयेन ॥५४॥

अहंकार ही कर्ता है ( परिणामशील होने के कारण ), निर्गुण पुरुष नहीं।

**चिदवसाना भुक्ति[2]स्तत्कर्मार्जितत्वात् ॥५५॥**

अहङ्कारस्य कर्तृत्वेऽपि भोगश्चित्येव पर्यवसन्नो भवति। अहङ्कारस्य संहतत्वेन परार्थत्वात्। नन्वेवमन्यनिष्ठकर्मणाऽन्यस्य भोगे पुरुषविशेषनियमो न स्यात्, तत्राह—तत्कर्मार्जितत्वादिति। अहङ्कारेणासञ्जितं तस्याश्चितो यत् कर्म तज्जन्यत्वाद्भोगस्येत्यर्थः। तथा च योऽहङ्कारो यं पुरुषमादायाचेतनेऽहं ममेति वृत्तिं करोति तस्याहङ्कारस्य कर्म तस्यात्मन उच्यते। तेनैव च कर्मणा तत्रात्मनि भोगोऽर्ज्यत इति नातिप्रसङ्ग इत्याशयः ॥५५॥

भोग का अवसान चिदात्मा में होता है। भोगरूप क्रिया वस्तुतः बुद्धिगत है पर चिद्रूप पुरुष के अधिष्ठान से ही भोगक्रिया निष्पन्न होती है एवं बुद्धि के प्रतिसंवेदी पुरुष में भोग का उपचार होता है। अहन्ता-ममताकारी अहंकार के द्वारा यह भोग अर्जित होता है, और इस अहंकार के रोध से भोग की भी निवृत्ति हो जाती है।

ब्रह्मलोकान्तगतिभिर्नास्ति निष्कृतिरिति पूर्वोक्ते कारणं दर्शयति—

**चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात् ॥५६॥**

निमित्तमविवेककर्मादिकम्। सुगममन्यत् ॥५६॥

---

१. अन्तःकरणधर्मत्वं धर्मादीनाम् (५।२५) इति सूत्रमत्र लक्षितम्।

२. द्र० सूत्रं—चिदवसानो भोगः (१।१०४)।

कर्म के बल पर चन्द्रादिलोकों की प्राप्ति होने पर भी आवृत्ति ( पुनर्जन्म ) हो सकती है, क्योंकि जन्महेतुभूत संस्कार कर्मकारी के चित्त में रह जाता है ।

ननु तत्तल्लोकवासिजनोपदेशादनावृत्तिः स्यात् , तत्राह—

**लोकस्य नोपदेशात् सिद्धिः पूर्ववत् ।।५७।।**

यथा पूर्वस्य मनुष्यलोकस्योपदेशमात्रान्न सिद्धिर्ज्ञाननिष्पत्तिरेवं तत्तल्लोकस्थलोकस्योपदेशमात्रात् तद्‌गतानां ज्ञाननिष्पत्तिर्न नियमेन भवतीत्यर्थः ।।५७।।

मनुष्यलोक में जिस प्रकार उपदेशमात्र से सिद्धि नहीं होती, उसी प्रकार चन्द्रादिलोक में भी उपदेशमात्र से किसी को सिद्धि नहीं मिल सकती । ( शाब्दिक उपदेश से ही योगसिद्धि नहीं होती, क्योंकि सिद्धिप्रतिबन्धभूत क्लेशादि प्रबल रूप से विद्यमान रहते हैं, जिनका नाश तपस्या-विवेकाभ्यास आदि से ही हो सकता है ) ।

नन्वेवं ब्रह्मलोकादनावृत्तिरिति श्रुतेः[1] का गतिस्तत्राह—

**पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः ।।५८।।**

ब्रह्मलोकादिगतानां श्रवणमननादिपरम्परया प्रायशो ज्ञानसिद्धौ सत्यां विमुक्तिश्रवणम् , न तु साक्षाद् गतिमात्रेणेत्यर्थः । प्रायिकत्वादन्यलोकाद्विशेष इति ।।५८।।

ब्रह्मलोक आदि में जाकर यदि कोई विवेक का अभ्यास करे तो उससे मुक्ति होती है—ऐसा श्रुति से जाना जाता है । इस प्रकार यह मुक्ति परम्पराक्रम से होती है ।

परिपूर्णत्वेऽप्यात्मनो गतिश्रुतिमुपपादयति—

**गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत् ।।५९।।**

व्यापकत्वेऽप्यात्मनो गतिश्रवणानुरोधेन भोगदेशस्य कालवशाल्लाभः सिद्ध्यति, व्योमवदुपाधियोगेनेत्यर्थः । यथा ह्याकाशस्य पूर्णत्वेऽपि देशविशेषगतिर्घटाद्युपाधियोगाद्व्यवह्रियते तथैवेति । तथा च श्रुतिः—

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः[2] ।। इति ।।५९।।

---

१. स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते (छान्दोग्य० ८।१५।१) ।

२. ब्रह्मबिन्दु० १३

आत्मा व्यापक है; उसकी गति के विषय में जो शास्त्रवचन है, वह उपाधिमान् आत्मा की उपाधि को लक्ष्य कर ही कहा गया है। आकाश के सर्वव्यापी होने पर भी घटादि उपाधि के साथ योग रहने के कारण जिस प्रकार 'घटाकाश का गमन' (घट के चलन को लक्ष्य कर) कहा जाता है, उसी प्रकार 'आत्मा का गमनागमन' भी उपाधिमूलक ही समझना चाहिए।

भोक्तुरधिष्ठानाद्भोगायतननिर्माणमिति यदुक्तं (५।११४) तत् प्रपञ्चयति सूत्राभ्याम्—

**अनधिष्ठितस्य पूतिभावप्रसङ्गान्न तत्सिद्धिः ॥६०॥**

भोक्त्रनधिष्ठितस्य शुक्रादेः पूतिभावप्रसङ्गान्न पूर्वोक्तभोगायतनसिद्धिरित्यर्थः ॥६०॥

भोक्ता के अधिष्ठान के विना शुक्रशोणितमय शरीर सड़-गल जाता है, अतः अनधिष्ठित शुक्रादि से भोगायतनभूत देह का निर्माण नहीं हो सकता। इससे यह सिद्ध होता है कि 'पहले देह है, उसके बाद वह आत्मा से अधिष्ठित होता है' यह मत असमीचीन है।

नन्वधिष्ठानं विनैवादृष्टद्वारा भोक्तृभ्यो भोगायतननिर्माणं भवतु, तत्राह—

**अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥६१॥**

शुक्रादौ साक्षादसम्बद्धस्यादृष्टस्य शरीरादिनिर्माणे भोक्तृद्वारत्वासम्भवाद्बीजासम्बद्धानां जलादीनामङ्कुरोत्पत्तौ कर्षकादिद्वारत्ववदित्यर्थः। अतः स्वाश्रयसंयोगसम्बन्धेनैवादृष्टसम्बन्धः शुक्रादिषु वक्तव्यः। तथा च सिद्धमदृष्टवदात्मसंयोगरूपेणाधिष्ठानस्य भोगोपकरणनिर्माणहेतुत्वमिति भावः ॥६१॥

देहोत्पत्ति के बाद आत्मा का अधिष्ठान होता है और अदृष्ट द्वारा ही देहबीज संरक्षित रहता है—ऐसा कहना संगत नहीं है, क्योंकि जिस प्रकार जल निराश्रय में अंकुर को उत्पन्न नहीं कर सकता ( बीज के साथ सम्बन्ध आवश्यक होता है ), उसी प्रकार अदृष्ट भी निराश्रय होकर ( देहबीज के साथ संबद्ध न होकर ) कोई कार्य नहीं कर सकता, अतः देह की सजीवता के लिये आत्माधिष्ठान साथ ही अपेक्षित होता है।

वैशेषिकादिनयेनादृष्टस्य सम्बन्धघटकतयात्मनोऽधिष्ठातृत्वं स्थापितम्, स्वसिद्धान्ते त्वदृष्टादीनामात्मधर्मत्वाभावात् तद्द्वारा भोक्तुर्हेतुत्वमेव न सम्भवतीत्याह—

**निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥६२॥**

भोक्तुर्निर्गुणत्वेनादृष्टासम्भवाच्च नादृष्टद्वारकत्वम्। हि यस्मादेतेऽदृष्टादयोऽहङ्कारस्यान्तःकरणसामान्यस्यैव धर्मा इत्यर्थः। तथा चास्मन्मते द्वारनैरपेक्ष्येण संयोगमात्रेण साक्षादेव भोक्तुरधिष्ठानं सिद्ध्यतीति भावः ॥६२॥

अदृष्ट आदि अहंकारनिष्ठ ही हैं, क्योंकि पुरुष निर्गुण है, अतः उसके साथ धर्माधर्मरूप अदृष्ट का साक्षात् संयोग सम्भव नहीं है। पुम्प्रकृतिसंयोग अदृष्टहेतुक नहीं है, क्योंकि अदृष्ट संयोगजन्य चित्त का धर्म है।

ननु चेत् पुरुषो व्यापकस्तर्हि—

वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते[1]।

इति श्रुतिप्रतिपादितं जीवपरिच्छिन्नत्वमनुपपन्नम्, तथेश्वरप्रतिषेधात् पुरुषाणां चैकरूप्याज्जीवात्मपरमात्मविभागोऽपि शास्त्रीयोऽनुपपन्न इति। तामिमामाशङ्कां परिहर्तुमाह—

**विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥६३॥**

जीव बलप्राणधारणयोरिति[2] व्युत्पत्त्या जीवत्वं प्राणित्वम्, तच्चाहङ्कारविशिष्टपुरुषस्य धर्मो न तु केवलपुरुषस्य। कुतः, अन्वयव्यतिरेकात्। अहङ्कारवतामेव सामर्थ्यातिशयप्राणधारणयोर्दर्शनात्। तच्छून्यानां च चित्तवृत्तिनिरोधस्यैव दर्शनात्, प्रवृत्तिहेतुरागोत्पादकस्याहङ्कारस्याभावादित्यर्थः। तथा चान्तःकरणोपाधिकं जीवस्य परिच्छिन्नत्वं परमात्माख्यात् केवलपुरुषाद्भिन्नत्वं चेति भावः[3]।

१. श्वेताश्व० ५।९

२. जीव प्राणधारणे (भ्वादि० ३७५)। कस्माद् धातुपाठाद् वाक्यमिदं संगृहीतमिति न ज्ञायते।

३. अत्रेमानि वचांसि द्रष्टव्यानि—अन्तःकरणयोगाद्धि जीव इत्युच्यते हि यः। अविद्याकार्यरहितः परमात्मेति गीयते ॥ बृहन् नार० ३६।२८॥ मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते ॥ शान्ति० १८७।२१ ॥ प्राणसंज्ञको जीवः ॥ मैत्र्युपनिषद् ६।१९॥ कर्मानुमानाद् विज्ञेयः स जीवः क्षेत्रसंज्ञकः ॥ शान्ति० २५२। ११॥ स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ॥ शान्ति० २१९।४०॥ पुरुषः प्रकृतिर्बुद्धिर्विषयाश्चेन्द्रियाणि च। अहंकारोऽभिमानश्च समूहो भूतसंज्ञकः ॥ शान्ति० २०५।२४॥ एक एव महानात्मा सोऽहंकारोऽभिधीयते। स जीवः सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः ॥ कूर्म० २।३।१३॥

अनेन सूत्रेण विशिष्टस्य भोक्तृत्वं वा त्वमहम्प्रत्ययगोचरत्वं वा नोक्तम्। साक्षात्काररूपस्य भोगस्याहङ्कारधर्मत्वाभावात्। त्वमहन्धर्मिपुरस्कारेण विवेकानुपपत्तेश्च। किन्तु—

यदा त्वभेदविज्ञानं जीवात्मपरमात्मनोः।
भवेत् तदा मुनिश्रेष्ठाः पाशच्छेदो भविष्यति॥
आत्मानं द्विविधं प्राहुः परापरविभेदतः।
परस्तु निर्गुणः प्रोक्त अहङ्कारयुतोऽपरः[1]॥

इत्यादिवाक्यशतोक्तो जीवात्मपरमात्मविभाग एव प्रदर्शितः। तत्र जीवतायामहङ्कार उपलक्षणमेवेति॥६३॥

पुरुष जब अहंकारविशिष्ट होता है, तब वह जीव कहलाता है।

इदानीं महदहङ्कारयोः कार्यभेदं प्रतिपिपादयिषुरादावहङ्कारकार्यमाह—

**अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना[2] प्रमाणाभावात्॥६४॥**

अहङ्काररूपो यः कर्ता तदधीनैव कार्यसिद्धिः सृष्टिसंहारनिष्पत्तिर्भवति, तादृशबलस्याहङ्कारकार्यत्वात्, अनहङ्कृतेषु तत्सामर्थ्यादर्शनात्; न तु वैशेषिकाद्युक्तानहङ्कृतपरमेश्वराधीना, अनहङ्कृतस्रष्टृत्वे नित्येश्वरे च प्रमाणाभावादित्यर्थः। 'अहं वहु स्यां प्रजायेयेति'[3] ह्यहङ्कारपूर्विकैव सृष्टिः श्रूयते तत्राहंशब्दस्यानुकरणमात्रत्वे प्रमाणाभाव इति। अनेन सूत्रेणाहङ्कारोपाधिकं ब्रह्मरुद्रयोः सृष्टिसंहारकर्तृत्वं श्रुतिस्मृतिसिद्धमपि प्रतिपादितम्॥६४॥

कार्य की सिद्धि (सृष्टि आदि कर्मों की निष्पत्ति) अहंकाररूप कर्ता के अधीन है। यह कर्मसिद्धि ईश्वराधीन नहीं है, क्योंकि इस मत में कोई प्रमाण नहीं है।

ननु भवत्वहङ्कारोऽन्येषां कर्ताऽहङ्कारस्य तु कः कर्ता; तत्राह—

**अदृष्टोद्भूतिवत् समानत्वम्॥६५॥**

यथा सर्गादिषु प्रकृतिक्षोभककर्माभिव्यक्तिः कालविशेषमात्राद्भवति तद्बोधककर्मान्तरस्य कल्पनेऽनवस्थाप्रसङ्गात् तथैवाहङ्कारः कालमात्रनिमित्तादेव जायते न तु तस्यापि कर्त्रन्तरमस्तीति समानत्वमावयोरित्यर्थः॥६५॥

जिस प्रकार (किसी एक मत में) सर्गादि में प्रकृतिक्षोभक कर्म की अभिव्यक्ति कालविशेष से होती है (अन्य किसी उद्बोधक कर्म से नहीं) ऐसा माना जाता है उसी प्रकार अहंकार कालरूप निमित्त से उद्भूत होता है। कर्ता रूप अहंकार के उद्भव

---

१. द्र० भूमिका।

२. तु० नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः (५।२)।

३. छान्दोग्ये (६।२।३) श्रूयते—तदैक्षत बहुस्यां प्रजायेयेति।

में अन्य कोई कर्ता नहीं है, क्योंकि ऐसा मानने पर अनवस्था होगा। इस प्रकार दोनों मतों में समाधान समान है।

**महतोऽन्यत् ॥६६॥**

अहङ्कारकार्यात् सृष्ट्यादेर्यदन्यत् पालनादिकं तन्महत्तत्त्वाद्भवति, विशुद्धसत्त्वतयाऽभिमानरागाद्यभावेन परानुग्रहमात्रप्रयोजनकत्वादित्यर्थः। अनेन च सूत्रेण महत्तत्त्वोपाधिकं विष्णोः पालकत्वमुपपादिम्। महत्तत्त्वोपाधिकत्वात् तु विष्णुर्महान् परमेश्वरो ब्रह्मेति च गीयते। तदुक्तम्—यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्[1] इति।

अत्र शास्त्रे कारणब्रह्म तु पुरुषसामान्यं निर्गुणमेवेष्यते, ईश्वरानभ्युपगमात्। तत्र च कारणशब्दः स्वशक्तिप्रकृत्युपाधिको वा निमित्तकारणतापरो वा पुरुषार्थस्य प्रकृतिप्रवर्तकत्वादिति मन्तव्यम् ॥६६॥

अहंकार के सृष्टि आदि कार्यों के अतिरिक्त जो पालनादि-कार्य हैं, वे महत्-तत्त्व से उद्भूत होते हैं।

अविवेकनिमित्तकः प्रकृतिपुरुषयोर्भोग्यमोक्तृभाव इति प्रागुक्तम्[2]। तत्राविवेक एव किन्निमित्तक इत्याकाङ्क्षायामविवेकधाराकल्पनेऽनवस्थापत्तिरित्याशङ्कायाः प्रामाणिकत्वेन परिहारः सर्ववादिसाधारण इत्याह—

**कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ॥६७॥**

येषां साङ्ख्यैकदेशिनां प्रकृतेः पुरुषस्य च स्वस्वामिभावो भोग्यभोक्तृभावः कर्मनिमित्तकस्तन्मतेऽपि स प्रवाहरूपेणानादिरेव, बीजाङ्कुरवत् प्रामाणिकत्वादित्यर्थः। आकस्मिकत्वे मुक्तस्यापि पुनर्भोगापत्तेरिति ॥६७॥

प्रकृति ( और पुरुष ) का स्वस्वामिभाव कर्मनिमित्त होते हुए भी अनादि है ( बीजाङ्कुर की तरह )।

अविवेकनिमित्तकत्वमतेऽप्येतदनादित्वं समानमित्याह—

**अविवेकनिमित्तो[3] वा पञ्चशिखः[4] ॥६८॥**

---

१. भागवतं ३।२६।२१

२. सूत्रम् १।५५

३. द्र० सू० तद्योगोऽप्यविवेकात् (१।५५)।

४. अत्रेदं पञ्चशिखवाक्यं तुलनीयम्—इमं गुणसमाहारमात्मभावेन पश्यतः। असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति इति (शान्ति० २१९।१४)।

अविवेकनिमित्तो वा स्वस्वामिभाव इति पञ्चशिख आह। तन्मतेऽप्यनादिरित्यर्थः। एतदेव स्वमतं प्रागुक्तत्वात्। अविवेकश्च प्रलयेऽपि कर्मवदेवास्ति वासनारूपेणेति। विवेकप्रागभावोऽविवेक इति मते तु बीजाङ्कुरवदनादित्वं न घटते। अखण्डप्रागभावस्यैवाखिलभोगहेतुत्वादिति ।।६८।।

यह स्वस्वामिभाव अविवेकरूप निमित्त से उत्पन्न होता है, ऐसा पञ्चशिख का मत है।

**लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ।।६९।।**

सनन्दनाचार्यस्तु लिङ्गशरीरनिमित्तकः प्रकृतिपुरुषयोर्भोग्यभोक्तृभाव इत्याह, लिङ्गशरीरद्वारैव भोगादिति। तन्मतेऽप्यनादिः स इत्यर्थः। यद्यपि प्रलये लिङ्गशरीरं नास्ति तथापि तत्कारणमविवेककर्मादिकं पूर्वसर्गीयलिङ्गशरीरजन्यमस्ति तद्द्वारा बीजाङ्कुरतुल्यत्वं स्वस्वामिभावलिङ्गशरीरयोरित्याशयः ।।६९।।

आचार्य सनन्दन का मत है कि स्वस्वामिभाव लिङ्गशरीर रूप निमित्त से होता है। जब तक लिङ्गशरीर है तब तक भोग्यभोक्तृभाव है; जब लिङ्ग का लय हो जाता है तब यह भाव नहीं रहता, इस दृष्टि से यह मत भाषित हुआ है।

शास्त्रवाक्यार्थमुपसंहरति—

**यद्वा तद्वा तदुच्छित्तिः[1] पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ।।७०।।**

कर्मनिमित्तो वाऽविवेकादिनिमित्तो वा भवतु प्रकृतिपुरुषयोर्भोग्यभोक्तृभावः सर्वथाप्यनादितया दुरुच्छेद्यस्य तस्योच्छेदः परमपुरुषार्थ इत्यर्थः। तदेतदादौ प्रतिज्ञातम्—त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ इति (१।१)। नन्वत्र सुख-दुःखसाधारणभोगनिवृत्तिः पुरुषार्थ उच्यते, तत्र दुःखमात्रनिवृत्तिरिति कथं तत्रोक्तस्यात्रोपसंहार इति चेन्न; शब्दभेदेऽप्यर्थाभेदात्। सुखं हि तावद् दुःखपक्षे निक्षिप्तमिति सुखभोगोऽपि दुःखभोग एव; दुःखभोगोऽपि प्रतिबिम्बरूपेण पुरुषे दुःखसम्बन्ध एव स्वतो नित्यनिर्दुःखत्वेन च प्रथमसूत्रेऽपि प्रतिबिम्बरूपेणैव दुःखनिवृत्तिविवक्षितेत्येक एवार्थ उपक्रमोपसंहारसूत्रयोरिति। बहुलांशस्य द्विरावृत्तिः शास्त्रसमाप्त्यर्था।

---

१. उच्छेदपरकत्वादेव सांख्यशास्त्रस्य नामान्तरं 'सम्यग्वध' इति; तथाचोक्तं शान्तिपर्वणि पञ्चशिखेन—अत्र सम्यग्वधो नाम त्यागशास्त्रमनुत्तमम्। शृणु यत् तव मोक्षाय भाष्यमाणं भविष्यति ॥२१९।१६॥ त्याग एव हि सर्वेषाम्···(१७), तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः(१९)इति। इयमुच्छित्तिर्नात्मोच्छित्तिः, अत एवात्रैवोक्तम्—उच्छेदनिष्ठा नेहास्ति(६), एवं सति क उच्छेद इति च (४१)।

शास्त्रमुख्यार्थविस्तारस्तन्त्राख्येऽनुक्तपूरणैः ।
षष्ठाध्याये कृतः पश्चाद्वाक्यार्थश्चोपसंहृतः ॥७०॥

जिस किसी भी उपाय से हो इस स्वस्वामिभाव का उच्छेद करना ही परम पुरुषार्थ है ।

तदिदं साङ्ख्यशास्त्रं कपिलमूर्तिर्भगवान् विष्णुरखिललोकहिताय प्रकाशितवान् । यत् तत्र वेदान्तिब्रुवः कश्चिदाह—साङ्ख्यप्रणेता कपिलो न विष्णुः, किन्त्वग्न्यवतारः कपिलान्तरम्—'अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्त्तकः'[1] इति स्मृतेरिति । तल्लोकव्यामोहनमात्रम्—

एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसङ्ख्यानाय तत्त्वानां सम्मतायात्मदर्शनम् ॥[2]

इत्यादिस्मृतिषु विष्ण्ववतारस्य देवहूतिपुत्रस्यैव साङ्ख्योपदेष्टृत्वावगमात्[3], कपिलद्वयकल्पनागौरवाच्च । तत्र चाग्निशब्दोऽग्न्याख्यशक्त्यावेशादेव प्रयुक्तः । यथा—'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः'[4] इति श्रीकृष्णवाक्ये कालशक्त्यावेशादेव कालशब्दः, अन्यथा विश्वरूपप्रदर्शककृष्णस्यापि विष्ण्ववतारकृष्णाद्भेदापत्तेरिति दिक् ।

साङ्ख्यकुल्यां[5] समापूर्य वेदान्तमथितामृतैः ।
कपिलर्षिर्ज्ञानयज्ञे ऋषीनापाययत्[6] पुरा ॥१॥
तद्वचःश्रद्धया तस्मिन् गुरौ च स्थिरभावतः ।[7]
तत्प्रसादलवेनेदं तच्छास्त्रं विवृतं मया ॥२॥

इति श्रीविज्ञानभिक्षुविरचिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये तन्त्राध्यायः षष्ठः ॥

॥ इति साङ्ख्यप्रवचनभाष्यं समाप्तम् ॥

---

१. वनपर्व २२०।२१ (सांख्ययोगप्रवर्तक इति नीलकण्ठसंमतः पाठः)

२. भागवतम् ३।२४।३६

३. देवीभागवतम् ८।३ अ०; ब्रह्मवैवर्तम् ४।२२।४७; द्र० अस्मत्कृतपातञ्जलयोगदर्शनभूमिका पृ० ८१-८२ ।

४. गीता ११।३२

५. सांख्यकुल्याः (पाठा०) ।

६. अप्यायत् (पाठा०) ।

७. गुरौ च स्थिरभाविते (पाठा०) ।

वेदस्मृतिपुराणादिवाक्यान्यालम्ब्य यत्नतः ।
टिप्पणी या कृता लघ्वी तया तुष्यतु शंकरः ॥

भावागणेशविरचित-तत्त्वयाथार्थ्यदीपनटीकासहितम्

# तत्त्वसमाससूत्रम्

पुरुषः स जयत्याद्यः प्रकृतिः सा जयत्यजा[1]।
याभ्यां संसृज्य सृज्यन्तेऽनन्तब्रह्माण्डकोटयः ॥१॥
कपिलासुरिपञ्चशिखान् गुरून् विज्ञानाचार्यवर्यांश्च ।
प्रणमामि बुद्धिवृद्ध्यै सिद्ध्यै वा सर्वकार्याणाम् ॥२॥
समाससूत्राण्यालम्ब्य व्याख्यां पञ्चशिखस्य च[2]।
भावागणेशः कुरुते तत्त्वयाथार्थ्यदीपनम् ॥३॥

तत्र तावद्विविक्तपुरुषज्ञानं मोक्षसाधनमिति। येभ्यो विवेक्तव्यो यश्च विवेचनीयः, तदुभयं सूत्रत्रयेणोद्दिशति[3]—

**अष्टौ[4] प्रकृतयः[5] ॥१॥**

प्रकर्षेण कुर्वन्तीति प्रकृतयः। तत्त्वान्तरारम्भकत्वं प्रकृतित्वमिति सामान्यलक्षणम्। ताश्च अव्यक्त-महदहङ्कार[6]-पञ्चतन्मात्ररूपाः। तत्राव्यक्तं नित्यं शब्दादिगुणशून्यं सत्त्वादिगुणत्रयं च। साम्यावस्थोपलक्षिता गुणाः प्रकृतिरित्येकं लक्षणम्। अकार्या गुणा इत्यपरम्। तथा प्रकृतिपर्यायाः—अव्यक्तं प्रधानं ब्रह्म अक्षरं क्षेत्रं तमः माया ब्राह्मी विद्या अविद्या प्रकृतिः शक्तिः अजा इत्यादयः। सत्त्वादिगुणवती सत्त्वाद्यतिरिक्ता प्रकृतिरिति तु न

१. सा च प्रकृतिरीश्वरी (पाठा०)।
२. पञ्चशिखेन कापि व्याख्या तत्त्वसमाससूत्राणां रचितेति नान्यत्रोक्तम्; अनुपलब्धेयं व्याख्या। पञ्चशिखसूत्राणि व्यासभाष्येऽन्यत्र चोद्धृतानि (द्र० भूमिका)।
३. प्रथमद्वितीयतृतीयसूत्रैरित्यर्थः।
४. अथातस्तत्त्वसमास इति प्रथमसूत्ररूपेण क्वचित् कोशे पठ्यते।
५. द्र० अष्टौ प्रकृतयः (गर्भोपनिषद् ३); ज्ञेयाः प्रकृतयोऽष्टौ (शान्ति० ३४०।३५); अष्टाभ्यः प्रकृतिभ्यश्च (शान्ति० ३४०।३६)। भीष्मपर्वणि 'प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्' (५।१२) इत्युक्तम्। एतद्व्याख्यायां देवबोधोवोचद्—प्रकृतेरेकस्याः प्रकृतिविकृतिभ्यः सप्तभ्यः परं चैतन्यम् इति। अनेन अष्टप्रकृतिसत्ता बहुपुरुषवादश्च सिद्धौ।
६. बुद्ध्यहंकार (पाठा०)।

शङ्कनीयम्, किन्तु गुण एव प्रकृतिः—सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादिति (६।३९)सांख्यप्रवचनसूत्रेण सत्त्वादीनां प्रकृतिस्वरूपत्वहेतुना प्रकृतिधर्मत्वप्रतिषेधात्। प्रकृतेर्गुण इत्यादिवाक्यं तु वनस्य वृक्षा इतिवद् बोद्धव्यम्। "सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः" भाग० ११।२४।५ इति प्रकृतिकार्यत्ववचनं तु गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्यसत्त्वादिपरमेव। महदादिसृष्टिर्हि गुणवैषम्याच् श्रूयते, तच्च वैषम्यं सजातीयसंवलनेन प्रकाशादिफलोपहितः सत्त्वादिव्यवहारयोग्यः कारणगुणानां परिणाम इति। एतेनाष्टाविंशतितत्त्वपक्षोऽप्युपपादितो[1] मन्तव्यः। सत्त्वादित्रयं च द्रव्यत्वेऽपि पुरुषोपकरणत्वाद् गुणा इत्युच्यन्ते।[2] द्रव्यत्वं चैषां संयोगविभागादिमत्तया उपादानकारणत्वेन सिद्धम्। एषां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात्, मनसः संकल्पात्मकत्ववत्। तानि च सत्त्वादीनि प्रत्येकं संख्याव्यक्तिकानि 'लघुत्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं च गुणानामिति' सांख्यप्रवचनसूत्रात्[3] (१।१२८)। अत्र हि सूत्रे लघुत्वादिना बहूनां सत्त्वानां साधर्म्यं तेनैव रजस्तमोभ्यां वैधर्म्यम्; एवं च लघुत्त्वादिना बहूनां रजसां गुरुत्वादिना बहूनां तमसां साधर्म्यवैधर्म्ये उक्ते इति। तेषु त्रित्ववचनं तु सत्त्वत्वादिविभाजकोपाधित्रयेणैव वैशेषिकाणां नवद्रव्यवचनवदिति। तानि च सत्त्वादीनि यथोपयोगमणुविभुपरिमाणकानि, मध्यमपरिणामत्वेऽनित्यत्वापत्तिः। सर्वेषां विभुत्वे कार्याणां परिच्छिन्नत्वानुपपत्तिः। आकाशप्रकृतेर्विभुत्वस्यैवौचित्यात्। ननु प्रकृतेश्चापरिच्छिन्नत्वैकत्वाक्रियत्वमिति सांख्यसिद्धान्तः। स च विरुध्यत इति चेत्, मैवम्—गन्धस्य पृथिवीव्यापकत्ववत्प्रकृतेर्व्यापकत्वम्। तच्च प्रकृतित्वस्य दैशिकाभावप्रतियोगितानवच्छेदकत्वम्। एकत्वं च सर्गभेदेन नानात्वाभावः। अक्रियत्वं चाध्यवसायाभिमानादिप्रतिनियतक्रियाराहित्यम्, अन्यथा श्रुतिस्मृतिसिद्धप्रकृतिक्षोभस्या[4]नुपपत्तेरिति। प्रकृत्यनुमानं चेत्थम्—महदादिकार्यं

---

१. प्रकृतितः पृथक् त्रयो गुणाः इति दर्शने २५ + ३ = २८ तत्त्वानि भवन्ति। सन्ति वादिनो ये गुणतत्त्वं प्रकृतितत्त्वतः पृथग् गणयन्ति, यथा काश्मीरशैवागमिनः।

२. आह भिक्षुः—सत्त्वादीनि द्रव्याणि न वैशेषिका गुणाः (सांख्यभाष्यम् १।६१)। शंकराचार्योऽप्याह—सत्त्वं रजस्तमं इत्येवं नामानो गुणा इति पारिभाषिकशब्दो न रूपादिवद् द्रव्याश्रिताः…क्षेत्रज्ञं पुरुषं निबध्नन्तीव…प्रतिलभन्ते (गीताभाष्यम् १४।५)।

३. सूत्रमिदं क्वचिद् व्याख्याने लध्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यमितरेषाम् इति पठ्यते।

४. प्रकृतिक्षोभविषये वायुवचनम्—गुणसाम्ये लयो ज्ञेयो वैषम्यात् सृष्टिरुच्यते॥९॥ तिलेषु वा यथा तैलं घृतं पयसि वा स्थितम्। तथा तमसि सत्त्वे च रजोऽव्यक्ताश्रितं स्थितम्॥१०॥ क्षोभयामास योगेन परेण परमेश्वरः। प्रधानं पुरुषं चैव

पक्षः, सुखदुःखमोहात्मकद्रव्यकार्यमिति साध्यम्, कार्यत्वे सति सुखदुःख-मोहात्मकत्वादिति हेतुः, वस्त्रादिकार्यशय्यासनवदिति दृष्टान्तः। श्रुतिस्मृती चात्रानुग्राहकस्तर्कः ॥

ननु सुखस्यान्तरे वानुभवात् शय्यासनादौ सुखे किं प्रमाणं येन दृष्टान्तता स्यादिति चेन्न; कारणगुणा हि कार्यगुणानारभन्ते इति न्यायेन[1] विषयेषु त्रिगुणकार्येषु सुखदुःखमोहसिद्धेः घटरूपमिति प्रत्ययवत् चन्दनसुखं स्त्रीसुखमित्यादि सुखप्रत्ययादपि विषये सुखाद्युचितं सुखदुःखोत्पादकत्वाच्च तद्गतमेव सुखदुःखादिकं सिद्ध्यति, अन्तःकरणसुखादिहेतुतयापि विषये सुखादिकं सिद्ध्यति। कालादिभेदैरेकस्या एव स्त्र्यादिव्यक्तेः सुखदुःखोत्पाद-कत्वाच्च तद्गतमेव सुखदुःखादिकं सिद्ध्यति ॥ इति मूलप्रकृतिनिरूपणम् ॥

अथ बुद्धिर्निरूप्यते। त्रिगुणात्मकमाद्यं कार्यं बुद्धिरित्येकं लक्षणम्। निश्चयवृत्तिकमन्तःकरणं बुद्धिरिति द्वितीयं लक्षणम्। तस्या धर्मज्ञानवैराग्यैश्वर्याख्यप्रकृष्टगुणयोगात् महत्संज्ञा, तदपि तृतीयं लक्षणम्। तस्याः पर्यायाः—मनो मतिर्महान् ब्रह्मा पूर्बुद्धिर्वृत्तिः ख्यातिः प्रज्ञा सन्ततिः स्मृतिरिति।[2] अनुस्मृतौ च—

"महानात्मा मतिर्विष्णु र्जिष्णुः शम्भुश्च वीर्यवान्।
बुद्धिः प्रज्ञापलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः ॥
पर्यायवाचकैरेतैर्महानात्मा निगद्यते ॥
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः।
सर्वतः श्रुतिमाँल्लोके सर्वं व्याप्य स तिष्ठति[3] ॥
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ॥
विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः" ॥इति॥[4]

इदमेव महत्तत्त्वमंशतो रजस्तमःसम्भेदेन परिणतं सद् व्यष्टिजीवाना-मुपाधिरधर्मादियुतं क्षुद्रमपि भवति। महदुपरागाद्विपरीतमिति सांख्यप्रवचन-

---

प्रविश्याण्डं महेश्वरः। प्रधानात् क्षोभ्यमानात्तु रजो वै समवर्तत। रजः प्रवर्तकं तत्र बीजेष्विव यथा जलम्। गुणवैषम्यमासाद्य प्रसूयन्ते ह्यधिष्ठिताः ॥५।१३॥ ब्रह्माण्डे (१।४।३) तु 'गुणा वैषम्यमासाद्य' इति पाठः।

१. तुलनीयं वैशेषिकं सूत्रम्—कारणगुणपूर्वकः कार्यगुणो दृष्टः (२।१।२४)।

२. अध्यवसायलक्षणो महान् बुद्धिर्मतिरुपलब्धिरित्यनर्थान्तरम् इति देवलः।

३. सर्वमावृत्य तिष्ठति (पाठा०)।

४. अश्वमेधपर्वणि ४०।२, ३, ४, ७, ८, १२ श्लोकाः इमे, पाठभेदैः सह; यथा—'तथा ख्याति र्धृतिः स्मृतिः', 'महानात्मा विभाव्यते', इति मुद्रितभारतपाठः। मनुर्विष्णुरिति टीकायां पाठान्तरम्।

सूत्रात् (२।१५)। महदहङ्कारमनस्त्रितयात्मकस्यान्तःकरणवृक्षस्य महत्तत्त्व-मङ्कुरावस्थेति। अत्र प्रकृतेर्महानित्यादिसृष्टिक्रमे (सांख्यसूत्रं १।६१ द्र०) शास्त्रमेव प्रमाणम्। इदमेव महत्तत्त्वं कार्येश्वरस्य स्वयम्भुव उपाधिस्तेनैवोपाधिना स सर्वज्ञः सर्वेश्वरः सर्वकर्त्ता सर्वपालकः सर्वसंहर्त्ता च। मात्स्ये—

"सविकारात् प्रधानात् तु महत्तत्त्वमजायत[1]।
महानिति यतः ख्यातिर्लोकानां जायते सदा॥ (मत्स्य० ३।१७)

गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्त्तिस्त्रयो देवा[2] ब्रह्मविष्णुमहेश्वराः" ॥इति॥ (मत्स्य० ३।१६)

स च स्वयम्भूः क्रियाशक्तिमत्केवलमहत्तत्त्वोपाधिकः सूत्रात्मेत्युच्यते। स एवार्द्धसुषुप्तावर्द्धलयात् प्राज्ञ इत्युच्यते। समग्रसुषुप्तौ तु समग्रलयेन निर्विशेषचिन्मात्रस्वरूपेणावस्थानादीश्वर इत्युच्यते श्रुतिस्मृतिपुराणेषु।

स च महांस्त्रिधा; तदुक्तं वैष्णवे (१।२।३४)—"सात्त्विको राजसश्चैव-तामसश्च त्रिधा महानिति"। ब्रह्मशङ्करापेक्षयाप्यादौ विष्णुरेवाविर्भवतीत्यर्थेनोक्तम्। पूर्वोक्तधर्मादिषु धर्मेणोर्ध्वगमनमूर्ध्वगमनेन भोगस्थानान्युपलक्ष्यन्ते। तेन पातालभूस्वर्गादीनामपि संग्रहः। ज्ञानेन मोक्षः, वैराग्येण प्रकृतिलयः; पुरुषतत्त्वानभिज्ञस्य वैराग्यात् प्रकृतिलयो भवति। तथा चोक्तं पुराणे प्रकृति-चिन्तकानधिकृत्य—"पूर्णं शतसहस्रं तु तिष्ठन्ति विगतज्वराः" इति।[3] अत्र प्रकृतिग्रहणेन महदहङ्कारभूतेन्द्रियाण्यपि गृह्यन्ते।[4] तत्र वैराग्य-

---

१. प्रजायते इति मुद्रितपुराणपाठः।

२. त्रयो भागा इति पाठोऽपि मुद्रितपुराणे दृश्यते।

३. श्लोकोऽयं तत्त्ववैशारद्यामप्युद्धृतः—"पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्त-चिन्तकाः" (१।१९)। अयमेव पाठः सम्यक्।

४. आह गौडपादाचार्यः—यथा कस्यचिद् वैराग्यमस्ति न तत्त्वज्ञानं तस्मादज्ञान-पूर्वकाद् वैराग्यात् प्रकृतिलयो मृतोऽष्टासु प्रकृतिषु प्रधानबुद्ध्यहङ्कारतन्मात्रेषु लीयते, न मोक्षः (४५ सांख्यकारिकाव्याख्याने)। एवमेवाह माठराचार्यः—यथा कस्यचिद् वैराग्यमस्ति, न तु ज्ञानमस्ति गुणपुरुषान्तराख्यम्। तेनाज्ञानेन वैराग्य-पूर्वेण नास्ति मोक्षः, केवलमष्टासु प्रकृतिषु लयो भवति प्रधानबुद्ध्यहङ्कारतन्मात्रेषु। तत्र लीनमात्मानं लीनमित्यवगच्छन्ति। भूयः संसरणकाले संसरति त्रिषु लोकेषु शरीरोत्पत्ति र्भवति (अत्रैव)। भारतटीकाकारो नीलकण्ठः—'प्रकृतीनां ये लय-मभ्यसन्ति तेषां दहरादिरूपकारणब्रह्मोपासकानामपुनरावृत्तिरूपा गतिश्चतुर्थी' (अनुशा० १६।६३) इति वदन् प्रकृतिलयविषये स्वाज्ञतां प्रकटयति। भवन्ति खलु प्रकृतिलीना अपुनर्भवकामिनः, परन्तु न ते कैवल्यमपुनरावृत्तिफलमधि-गच्छन्ति इति।

पूर्वकं तेषु तेष्वात्मभावेनोपास्यमानेषु लयो हि प्रकृताविति च श्रूयते । पूर्व-वाक्यानन्तरमेव—

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः[१] ॥ इति च ॥

अयं च प्राकृतिको बन्ध इत्युच्यते योगिभिः । महदादिभावश्च वैकृतिको बन्ध इति । ऐश्वर्येणाप्रतिघातः, ऐश्वर्यं चाणिमादिसिद्धयः ॥ इति बुद्धिर्व्याख्याता ॥

अहंकारो व्याख्यायते । महत्तत्त्वादहङ्कार उत्पद्यते, अङ्कुराच्छाखावत् । तस्य चाहमाकारवृत्तिमत्त्वादहङ्कार इति संज्ञा ।[२] अहंवृत्तिमदन्तःकरणमहंकार इत्येकं लक्षणम् । एकादशेन्द्रियापादानत्वं द्वितीयं लक्षणम् । तन्मात्रोपादानत्वं तृतीयं लक्षणम् । तस्य च पर्यायाः—

"अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः ।
आत्मा च मत्परो[३] जीवो यतः सर्वाः प्रवृत्तयः ॥" इति ।

कौर्मप्रोक्ताः (१।४।१९); अविशेष इति च । स चाहङ्कारस्त्रिविधः । तदुक्तं कौर्मे (१।४।१८, २२, २३)—

"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह ॥१८॥
तैजसानीन्द्रियाणि स्यु र्देवा वैकारिका दश ॥२२॥
एकादशं मनश्चात्र स्वगुणेनोभयात्मकम् ।
भूततन्मात्रसर्गस्तु भूतादेरभवद् द्विजाः[४] ॥२३॥ इति ।

वैकारिकः सात्त्विक स्तैजसो राजसः । स्वगुणेन सर्वेन्द्रियेषु साहाय्य-रूपेणोत्कर्षेणोभयात्मकं ज्ञानकर्मेन्द्रियोभयात्मकमित्यर्थः । इन्द्रियदेवताश्च दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकामचन्द्रश्चेति एकादश । इत्यहङ्कार-निरूपणम् ॥

---

१. इमे श्लोकाः वायुपुराणीयत्वेन तत्त्ववैशारद्यां योगवार्त्तिके (१।१९) चोद्धृताः ।

२. अहङ्कारव्युत्पत्तिरित्थमुक्ता माठरेण—चतुःषष्टिवर्णैः परादिवैखरीपर्यन्ताभिधेयैर्यत्किमप्यभिधीयते बुद्ध्या समर्थ्य तत् सकलमाद्यन्ताकारहकारवर्णद्वयग्रहणोपस्थितपिण्डीकृतानुकारिणा बिन्दुना भूषितः प्रत्याहारन्यायेनाहङ्कार इत्यभिधीयते (२२ का०) ।

३. पुष्कलः, प्रबलः, पुद्गलः, पुरुषः, प्रकुल इति चात्र पाठान्तराणि पुराणकोशे टीकाकोशे चोपलभ्यन्ते ।

४. प्रजा इति पाठान्तरं टीकाकोशे क्वचिद् दृश्यते ।

अथ तन्मात्रा[1] उच्यन्ते। शब्दस्पर्शरूपरसगन्धा निर्विशेषास्तद्वन्ति सूक्ष्मभूतानि तन्मात्राः। निर्विशेषशब्दादिगुणवद् द्रव्यं तन्मात्रा इति सामान्यलक्षणम्। अहङ्कारोपादानत्वे सति तत्त्वान्तरारम्भकत्वं द्वितीयं लक्षणम्। तत्तन्निर्विशेषगुणवत्त्वं तत्तन्मात्रलक्षणम्। तानि च पञ्च—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति। शान्तघोरमूढाः पञ्चस्वपि विशेषाः शब्दत्वस्पर्शत्वादिव्याप्या जातिविशेषा एव। शब्दे तु उदात्तानुदात्तस्वरिताः निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेति स्वराः। स्पर्शे शीतोष्णत्वे। रूपे शुक्लत्वादयो विशेषाः। ते च श्वेतपीतरक्तश्यामहरितकपिशाः। रसे मधुरत्वादयो विशेषास्ते च मधुरतिक्तकषायकट्वम्लक्षाराः षड्रसाः। गन्धे सुरभित्वासुरभित्वे। एतैर्विशेषै रहिता अविशेषास्तद्वन्ति द्रव्याणि तन्मात्राः।[2] तेषां पर्यायाः—तन्मात्राणि तमोविग्रहाः सूक्ष्मविग्रहाः सूक्ष्मभूतानि अविशेषा इति। इति पञ्चतन्मात्राः॥

एवमष्टौ प्रकृतयो व्याख्याताः।

## षोडश विकाराः[3] ॥२॥

षोडश विकारा इति[4] द्वितीयं सूत्रम्। एकादशेन्द्रियाणि पञ्च महाभूतानि च—एते षोडश विकाराः। तत्र श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि स्वस्वविषयकबुद्धिजनकत्वात् पञ्च बुद्धीन्द्रियाणि। वाक्पाणिपादपायूपस्थानि स्वस्वकर्मकरणात् पञ्च कर्मेन्द्रियाणि। तत्र उच्चारणं वाचः, हस्तयोरादानम्, पादयोर्गतिः, पायोरुत्सर्गः, उपस्थस्यानन्दः। सर्वसहायत्वादुभयात्मकं मनः। एतान्येकादशेन्द्रियाणि। तत्त्वान्तरानारम्भकत्वे सति अहंकारोपादानकत्वमिन्द्रियत्व-

---

१. तन्मात्रमिति नपुंसकलिङ्गशब्दोऽपि सांख्ये प्रसिद्धः—तन्मात्राण्यविशेषा इति सांख्यकारिकादर्शनात्।

२. तन्मात्रस्वरूपं विस्तरेणोपपादितं मया तन्मात्रविषयके हिन्दीनिबन्धे (साहित्य ६।८-१२)। मदीय-सांख्ययोगीयग्रन्थतः तन्मात्रविवरणपराः केचन श्लोका इह संगृह्यन्ते—निरुद्धज्ञानशक्त्या यद् ग्राह्यं जानाति संयमी। विशेषरहितस्पर्शाद्याश्रयैकरसं हि तत्॥ दैशिकावयवैर्हीनं बुध्यते कालवृत्तितः। विचारस्थिरतागम्यं भूतोपादानमीरितम्। ग्राह्यस्य चरमो भावः सुखादिजनकं न तत्। विशेषाभावरूपत्वात् तन्मात्रमविशेषकम्॥ तद् द्रव्यं परमाणुर्हि एकावयव उच्यते। ततः परस्य बाह्यस्य ग्राह्यस्य न हि दर्शनम्॥ एकक्रियाजन्यघाताद् यश्चाणुज्ञानसंभवः। तत्तन्मात्रस्य विज्ञानं शास्त्रन्यायविदां मतम्॥ (१।४२–४६)।

३. षोडश विकारा इति गर्भोपनिषदि (३), भगवदज्जुकीय गन्थे च; देवलोऽपि एवमाह (याज्ञ० प्रायश्चित्त १०९ अपरार्कटीका)।

४. षोडकस्तु विकारः (पाठा०)।

मित्येकं लक्षणम् ।[१] अहङ्कारोपादानकत्वे सति शरीरसंयुक्तं क्रियाकरणमतीन्द्रियमिन्द्रियमिति द्वितीयम् । अथ पर्यायाः—इन्द्रियाणि करणानि निपातनानि[२] वैकारिकाणि तैजसानि । इतीन्द्रियनिरूपणम् ॥

अथ महाभूतानि । पृथिव्यप्तेजोवाय्वाकाशमिति । सविशेषशब्दादिमत्त्वं महाभूतत्वमित्येकं लक्षणम् । तत्त्वान्तरानारम्भकत्वे सत्यारम्भकत्वं द्वितीयं लक्षणम् । सविशेषशब्दगुणवत्त्व[३]माकाशस्य लक्षणम् । सविशेषशब्दस्पर्शवत्त्वं वायोर्लक्षणम् । सविशेषशब्दस्पर्शरूपवत्वं तेजसः । सविशेषशब्दस्पर्शरूपरसवत्त्वमपाम् । सविशेषशब्दस्पर्शरूपरसगन्धवत्त्वं पृथिव्याः ।[४] एतानि विशेषलक्षणानि । एतानि पञ्च महाभूतानि परस्परोपकारीणि । अथामीषां पर्यायाः—भूतानि विकारा विशेषा आकृतयः तमोविग्रहाः[५] शान्ता घोरा मूढा इति । इति षोडशविकाराः ॥२॥

पुरुषः[६] ॥३॥

पुरुष इति तृतीयं सूत्रम् । अनादिः सूक्ष्मश्चेतनः सर्वगतः निर्गुणः कूटस्थो नित्यो द्रष्टा भोक्ता क्षेत्रवित् अमनाः प्रसवधर्मा चेति स्वरूपम् । कूटस्थनित्य इत्येकं लक्षणम् । मुख्यभोक्तृत्वमित्यपरं लक्षणम् । वृत्तिसाक्षित्वमिति तृतीयं लक्षणम् । अथ पर्यायाः—पुरुषः, आत्मा, पुमान् , पुद्गलजन्तुः, जीवः, क्षेत्रज्ञः, नरः, कविः, ब्रह्म, अक्षरः, प्राणः, ज्ञः, यः, कः, सः, एक इति । एवमेतानि पञ्चविंशतितत्त्वानि; एतज्ज्ञानात् कृतकृत्यो भवति । तथा चोक्तं पञ्चशिखेन प्रमाणवाक्यम्—

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे स्थितः ।
जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥[७]

स च पुरुषो नाना, सुखदुःखमोह-जन्ममरण-बन्धमोक्षव्यवस्थातः, जन्मादिव्यवस्थातः पुरुषबहुत्वमिति सांख्यप्रवचनसूत्रात् (१।१४९) । यद्येकः

---

१. अहङ्कारोपादानत्वमित्येकं लक्षणम् (पाठा०) ।

२. करणानि नियतानि (पाठा०) ।

३. गुणकत्वम् (पाठा०) ।

४. कथनमिदं नैमित्तिकदृष्ट्या । तत्त्वदृशा भूतानि एकैकगुणेन लक्षितानि भवन्ति, यथोक्तमश्वमेधपर्वणि—शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः । ज्योतिषांलक्षणं रूप मापश्च रसलक्षणाः । धारिणी सर्वभूतानां पृथिवी गन्धलक्षणा ॥ (४३।२२) ।

५. तमोविग्रहेति तन्मात्रस्यापि नामोक्तम् इति विचार्यमिदं नाम ।

६. आत्मा (पाठा०), पुरुषश्च (पाठा०) ।

७. गौडपादीयकारिकाभाष्यारम्भेऽप्युद्धृतोऽयम् , तत्र 'यत्र तत्राश्रमे' इति पाठः ।

पुरुषः स्यादेकस्मिन् सुखिते सर्वे सुखिताः स्युः, एवं सर्वत्र; एवं पुरुषबहुत्वं सिद्धम्। एवं तावत् सांख्याचार्याः कपिलासुरिपञ्चशिखपतञ्जलिप्रभृतयः, न्यायवैशेषिकाश्च बहून् पुरुषानात्मत्वेन वदन्ति। औपनिषदाश्चाचार्या हरि-हरहिरण्यगर्भव्यासादय एभ्योऽतिरिक्तमेकमेव नित्येश्वरं सर्वेश्वरं सर्वेषामात्मानं वदन्ति। कस्मादेवम्—"पुरुष एवेदं सर्वमिति"[१], "तदेवाग्निस्तदादित्य इति"[२], "तदक्षरं तत्सवितुर्वरेण्यम्"[३], "यस्मात् परं नापरमस्ति किञ्चित्"[४], "स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च। वसत्येको महानात्मा येन सर्वमिदं ततम्।"

"ब्राह्मणे कृमिकीटेषु श्वपाके गवि हस्तिनि।
पशुगोदंशमशके रूपं पश्यन्ति सूरयः॥

एकमेव यथा सूत्रं सुवर्णे वर्त्तते पुनः।
मुक्तामणिप्रवालेषु मृन्मये रजते तथा॥

तद्वत् पशुमनुष्येषु तद्वद्धस्तिमृगादिषु।
एकोऽयमात्मा विज्ञेयः सर्वत्रैव व्यवस्थितः॥"

इत्यादि प्रमाणेभ्यः। सांख्यास्तु आदिपुरुषविषयतया लयावशिष्टनि-र्विशेषचिन्मात्रविषयतया वा एतानि श्रुतिवाक्यानि योजयन्ति।[६] इति पुरुष-निरूपणम्।

एवं पञ्चविंशतितत्त्वानि[५] व्याख्यातानि। सांख्यकारिका चात्र (३ कारिका)—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥इति॥३॥

इदानीं प्रथमसूत्रेणैव गुणात्मकप्रकृतेरुद्दिष्टत्वेऽपि गुणानामवान्तरवि-भागं तद्धर्मांश्च विवेचयितुं वक्ष्यमाणसञ्चरप्रतिसञ्चरोद्घातसङ्गत्या च सूत्रं प्रवर्त्तते—

---

१. श्वेताश्व० ३।१५,...
२. श्वेताश्व० ४।२
३. श्वेताश्व० ४।१८
४. श्वेताश्व० ३।९
५. तत्त्वं हि नाम साधारणं सर्वप्राणधारिणाम् आमहाप्रलयस्थायि (विवरणम् २।१९)।
६. शान्तिपर्वणि (३५० अ०) पुरुषैकत्व-पुरुषबहुत्ववादश्च चर्चितौ। चिद्रूपपुरुषै-कत्वविषये युक्तिः सांख्यतत्त्वालोके (४-५ प्रक०) द्रष्टव्या। पुरुषैकत्वपरकश्रु-तीनां तात्पर्यमप्यत्रैव विवृतम् (७ प्रक०)।

**त्रैगुण्यम्**[1] ॥४॥

त्रैगुण्यमिति चतुर्थं सूत्रम् । सत्त्वरजस्तमांसि त्रयो गुणाः तेषां समाहारस्त्रिगुणम्, त्रिगुणमेव त्रैगुण्यम् । तत्र सत्त्वं नाम प्रकाशलाघवप्रसन्नताभिष्वङ्गप्रीतितितिक्षादिलक्षणमनन्तभेदं समासतः सुखात्मकम् । रजो नाम शोकतापस्वेदस्तम्भोद्वेगोन्मादादिलक्षणमनन्तभेदं समासतो दुःखात्मकम् । तमो नाम अदानापुण्यदैन्यगौरवालस्यनिद्राप्रमादादिलक्षणमनन्तभेदं समासतो मोहात्मकम् ।[2] एतेषां लक्षणानि—

सत्त्वं प्रकाशकं विद्याद्रजो विद्यात् प्रवर्त्तकम् ।
तमो लयात्मकं विद्यात् त्रैगुण्यं नाम संज्ञितम् ॥

एते त्रयो गुणाः सर्वे उत्पत्तिस्थितिलयहेतवः । इति त्रैगुण्यं व्याख्यातम् ॥४॥

**संचरः**[3] ॥५॥

**प्रतिसंचरः**[4] ॥६॥

इदानी सगुणनिर्गुणश्रुतिविषयोपपत्त्यर्थं सर्गादावुत्पन्नं स्वयम्भुवं प्रलयावशिष्टनिर्विशेषचित्सामान्यं च दर्शयितुं सृष्टिप्रलययोः सूत्रद्वयं प्रवर्तते— सञ्चरः प्रतिसञ्चरः इति । सञ्चरः सृष्टिः, प्रतिसञ्चरः प्रलयः । तत्र सृष्टिर्यथा[5]— अव्यक्ताख्या प्रकृतिः प्रवृत्तिस्वभावा स्वतन्त्रा च । सर्गादौ स्वयमेव क्षुब्धा सती भाविनारायणबीजभूता पूर्वकल्पे स्वयम्भूपालकेन नामकेन (?) व्यक्तेन नारायण-पुरुषेण संयुज्यते, ततश्च सजातीयैरन्यैः प्रकृत्यंशैर्न्यूनाधिकभावेन मिलिता सती चेतनाचेतनात्मकं महत्तत्त्वमारभते । ननु पुरुषस्य प्रकृतिसंयोगित्वे 'असंगो ह्ययं पुरुषः' इति ( बृहदा० ४।३।१६) श्रुतिविरोध इति चेन्न,

---

१. त्रयो गुणा इति देवल. । त्रिगुणविवरणं बहुत्रोपलभ्यते (अश्व० ३६-३९ अ०) ।

२. यथोक्तम्—प्रहर्षं प्रीतिरानन्दस्त्रयस्ते सात्त्विका गुणा । तृष्णा क्रोधोऽभिसरम्भो राजसास्ते गुणा· स्मृता । श्रमस्तन्द्रा च मोहश्च त्रयस्ते तामसा गुणा. ( अश्व० ३१।१।२ । ) । द्र० सांख्यभाष्यम् अपि ( १।१२७ ) ।

३. संचार. ( पाठ० ), ५-६ सूत्रे एकवाक्यरूपेण क्वचित् पठ्येते ।

४. प्रतिसंचरश्चेति ( पाठा० ) ।

५ कपिलासुरिसंवादे ( शान्तिपर्वं, कु० स० ) किं सर्गाप्ययौ इति प्रश्नस्योत्तरं प्रदत्तम् । उक्तमत्र—आकाशं मनसि प्रलीयते, मनोऽहंकारेऽहकारो महति, महानव्यक्ते, तदेतत् प्रलयमीहते । प्रलयान्तान्महाप्रलय इत्युच्यते, प्रनष्टसर्वस्व तम एवाप्रतिमं भवति—अग्राह्यमच्छेद्यमभेद्यमप्रतर्क्यमनाद्यचिन्त्यमनालम्बमस्थानमव्ययमजं शाश्वतमिति । एवमाह—सर्गप्रलयमेतावत् तत्त्वतोऽयोऽवबुध्यते । उत्तीर्य सोऽशिवादस्माच् छिवमानन्त्यमाप्नुयात् इति ।

विकारहेतुसंयोगस्यैव सङ्गशब्दार्थत्वात्, अन्यथा श्रुतिस्मृतिषु जलसंयोगिनोऽपि पद्मपत्रस्याऽसङ्गतादृष्टान्तता न स्यात्। तत्र महत्तत्वस्य स्वरूपेण मुख्योत्पत्तिः, चेतनस्य तु अभिव्यक्तिरूपा कार्यता। योगभाष्ये व्यासधृतवाक्यान्नवधा कार्यता—

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्॥ इति।

(२।२८ भाष्यम्)। एवमादिशक्तिरपि चेतनविशेषो महत्तत्त्वकारणीभूतगुणत्रयसम्बन्धात् स्वयम्भवाप्यादावुत्पद्यते; उत्पत्तौ च प्रमाणं प्रयोगसारे—'तस्माद्विनिर्गता नित्या सर्वगा विष्णुसम्भवा' इति। वायवीयसंहितायां च—

शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता।
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव॥ इति।

पञ्चरात्रेऽपि—

एवमालोक्य तां शक्तिं सच्चिदानन्दरूपिणीम्।
समस्ततत्त्वसन्धामस्फूर्त्यधिष्ठानरूपिणीम्॥
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान्॥ इति।
प्रादुरासीज्जगन्माता वेदमाता सरस्वती।
गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता।
तस्यामह (हं ?) समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः॥

इत्यादिशिववाक्याच्च। सैव प्रकृत्यधिष्ठात्री देवता महालक्ष्मीः, अम्बा, भवानी, हैमवती, दुर्गा इत्यादिपदैरभिलप्यते पुराणादिषु। सैव च लीलाविग्रहैरादिपुरुषेणमिलिता सती सृष्टिं पालयति। तदुक्तं शङ्कराचार्यैः—शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं, न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि। इति (आनन्दलहरी १)।

एवं सर्वतत्त्वानां तत्तद्देवतानां च सहैवोत्पत्तिर्ज्ञेया। उत्पत्तिक्रमस्तु निरूपणक्रमेणैव। एतस्मान्महतो गुणान्तरसंवलितात् त्रिविधोऽहङ्कार उत्पद्यते चेतनाचेतनात्मको वैकारिको राजसस्तामसश्चेति। ततश्चाहङ्कारात् संकल्पपूर्वकं देहेन्द्रियाणि पञ्च तन्मात्राणि चोत्पद्यन्ते। स्वयम्भुव इन्द्रियाणि देवता-

---

१. कपिलासुरिसंवादे पठ्यते—व्यतिरिक्तं नामासुरे पुरुषः पञ्चविंशकः क्षेत्रज्ञः, यथा पुष्करपर्णस्थो बिन्दुर्न श्लेषमुपगच्छति अन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञ इति (शान्तिपर्व)। अश्वमेधपर्वण्युक्तम्—नित्यं द्वन्द्वसमायुक्तं सत्त्वमाहुर्मनीषिणः। निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः॥१०। समं संज्ञानुगश्चैव स सर्वत्र व्यवस्थितः। उपभुङ्क्ते सदा सत्त्वमपः पुष्करपर्णवत्॥११। सर्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते। जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः॥५०।१२॥

रूपाणि वैकारिकात्, व्यष्टीन्द्रियाणि च तैजसात्, तेष्विन्द्रियेष्वादौ मन उत्पद्यते।

शब्दरागाच्छ्रोत्रमस्य जायते भवितात्मनः।
रूपरागात्[1] तथा चक्षुर्घ्राणं गन्धजिघृक्षया॥

इत्यादि मोक्षधर्मादौ (शान्ति २१३।१६) श्रोत्रादीनां मनोवृत्तिरागादिकार्यत्वश्रवणात्। इन्द्रियतन्मात्रयोश्च कार्यकारणभावस्याभावात् क्रमनियमो नास्ति। तत्रेन्द्रियेषु नास्त्यवान्तरकार्यकारणभावः प्रमाणाभावात्। तन्मात्रेषु त्वस्ति, स यथा—अहङ्काराच्छब्दतन्मात्रं तस्मादहङ्कारोत्पन्नाच्छब्दतन्मात्रादहङ्कारसहितात् स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकम्। एवं क्रमेणैकैकगुणवृद्ध्या तन्मात्रत्रयमुत्पद्यते[2]। ततश्च तन्मात्रेभ्यः पञ्च महाभूतानि जायन्ते। तत्राहङ्कारात् पञ्चतन्मात्राणां तद्द्वारा पञ्चमहाभूतानां चोत्पत्तौ पुराणे क्रम उक्तः; स यथा—

भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज हि।
आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम्॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज हि।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शो गुणो मतः॥[3]

इत्यादिक्रमेणेति। नन्वेवमाकाशादिभूतचतुष्टयस्यापि तत्त्वान्तरप्रकृत्यापत्त्या केवलविकृतित्वाष्टप्रकृतित्वसिद्धान्तक्षतिरिति चेन्न; आकाशादीनां स्पर्शादितन्मात्रेष्वहङ्कारोपष्टम्भमात्रेण कारणत्वस्य पुराणेषूक्तत्वादिति। एवं त्रयोविंशतितत्त्वानां सृष्टिः।

तेषु पञ्चभूतानि वर्जयित्वाऽहङ्कारं च बुद्धौ प्रवेश्य सप्तदशकं[4] लिङ्गशरीरसंज्ञं भवति, वह्नेरिन्धनवदात्मनोऽभिव्यक्तिस्थानत्वात्। तच्च सर्वपुरुषाणां स्वस्वबीजभूतप्रकृतिसंयोगात् सर्गादावुत्पद्य प्राकृतप्रलयपर्यन्तं तिष्ठति। तेनैव चेहलोकपरलोकयोर्जीवानां संसरणं भवति। प्राणश्च बुद्धेरेव

१. २।१७ सांख्यभाष्ये तु 'रूपरागादभूच् चक्षुः' इति पाठ उद्धृतः।

२. कथनमिदं नैमित्तिकदृष्ट्या न तत्त्वदृष्ट्या। तत्त्वतः तन्मात्रमेकस्यैव गुणस्य गुणि, यथा स्पर्शतन्मात्रे स्पर्शगुण एव, रूपतन्मात्रे रूपगुण एव। (द्र० कापिलाश्रमीयपातञ्जलदर्शनम् २।१९)।

३. विष्णु० १।२।३७–३८; मार्कण्डेय० ४५।३९–४१ इत्यत्र च एतत्सदृशाः श्लोका दृश्यते।

४. द्र० सांख्यसू० 'सप्तदशैकं लिङ्गम्' (३।९)।

वृत्तिभेद[1] इत्यतो लिङ्गशरीरे पृथक् न निर्दिश्यते बुद्धावेवान्तर्भावात्। तस्य च लिङ्गशरीरस्य परमसूक्ष्माणि पञ्च महाभूतानि तेजःप्रधानान्याश्रयः, चित्रादिवद् आश्रयं विना लोकान्तरगमनासम्भवात्। तदुक्तं सप्तत्याम् (४१ कारिका)—

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥इति॥

इदं च लिङ्गशरीरमादौ स्वयम्भूवः समष्टिचेतनस्य उपाधिभूतमेकमेव समष्टिरूपं जायते, ततश्च व्यष्टिजीवानामप्युपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते पितुर्लिङ्गशरीरात् पुत्रशरीरवत्। तदुक्तं सांख्य-प्रवचनसूत्रेण—व्यक्तिभेदः कर्मविशेषादिति (३।१०)। मनुनाप्युक्तम्—

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ इति ॥ (१।१६)

षण्णामिति षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकम्। तथा चायमर्थः— स्वयम्भूः स्वलिङ्गशरीरावयवान् सूक्ष्मानल्पान् आत्ममात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेति। इति लिङ्गशरीरनिरूपणम्।

अथ स्थूलशरीरोत्पत्तिः। दशगुणितमहत्तत्त्वमध्येऽहंकारस्तस्मिन्नपि दशगुणे व्योम, तथैव व्योम्न्यपि वायुः, वायावपि तेजः, तेजसि दशगुणे जलम्, तथैव जलस्यापि दशगुणस्य मध्ये पृथिवी समुत्पद्यते, सैव स्थूलशरीरस्य बीज-मण्डरूपेण परिणमते[2]। तस्यापि दशगुणितस्याण्डस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्सङ्कल्पादेवोत्पद्यते। तेनैव शरी-रेण स्वयम्भूर्नारायण इत्युच्यते। स्वयंभुवं प्रकृत्य मनुनाऽप्युक्तम्—

---

१. उक्तं च भिक्षुणा विज्ञानामृतभाष्ये—स [महान्] च क्रियाशक्त्या प्राणः निश्चय-शक्त्या च बुद्धिः, तयोर्मध्ये प्रथमं प्राणवृत्तिरुत्पद्यते इति (२।४।१२)। अतएव सत्त्वात् समानो व्यानश्च इति यज्ञविदो विदुः' इति अश्वमेधपर्वण्युक्तम् (२४।१२)। उक्तं च लक्ष्मीतन्त्रे—महांस्तामस आख्यातो विकारः पूर्वकैर्बुधैः ॥ प्राणो हिरण्यगर्भश्च बुद्धिश्चेति त्रिधा भिदा। (५।३१-३२)। महतस्तामसत्त्वमपि अभ्युपगम्यते—ततो महानुत्पद्यते स तु तमोबहुल इति जयमङ्गलाकारः (२२ कारिका०)।

२. दशगुणितपरिमाणविवरणं पुराणेषु भुवनकोशान्तेऽन्यत्र च प्रायेण दृश्यते। लैङ्गे-पठ्यते—स एव भगवान् रुद्रो विष्णु विंश्वगतः प्रभुः। तस्मिन्नण्डे त्विमे लोका अन्तर्विश्वमिदं जगत् ॥२९। अण्डं दशगुणेनैव वारिणा प्रावृतं बहिः। आपो दशगुणेनैव तद्बाह्यस्तेजसावृतः ॥३०। तेजो दशगुणेनैव बाह्यतो वायुनाऽवृतम्। वायुर्दशगुणेनैव बाह्यतो नभसाऽवृतः ॥३१। आकाशेनावृतोवायु रहंकारेण शब्दजः। महता शब्दहेतुर्वै प्रधानेनावृतः स्वयम् ॥३२। ( लिङ्ग १।३ अ० )।

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाःप्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥८
तदण्डमभवद् धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥९
स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥[१]
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥"१० (१।८-१०)

इत्यादिनेति । तत एवादिपुरुषाद्व्यष्टिपुरुषाणां विभागात् अन्ते च तत्रैव लयात् स एवैक आत्मेति श्रुतिस्मृत्योर्व्यवह्रियते । ततश्च स नारायणो विराट्शरीरी पृथिवीरूप-स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखमवान्तरब्रह्माणं सृष्ट्वा तद्द्वारान्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज । तथा च स्मर्यते—

"तच्छरीरसमुत्पन्नैः कार्यैस्तैः का[क]रणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः"[२] ॥ इति ।

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याविर्भावः श्रूयते, तद्दैनन्दिनसर्गेष्वेव हि कल्पभेदेन[३] मन्तव्यम् । दैनन्दिन प्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां देवानां चतुर्मुखादिक्रमेणाविर्भावः शेषशायिनः सकाशाद् घटते न त्वादिसर्गेषु । दैनन्दिन-प्रलय एव नारायणस्य लीलाविग्रहेण शयनादिति । अस्यां सृष्टौ महत्तत्त्वस्य[अ]बुद्धिपूर्वकः त्रिगुणात्मकः प्रथमः सर्गः । तदनन्तरं तदुपाधिकस्वयम्भुवः सकाशाद् बुद्धिपूर्वकः सर्गः । स्वयम्भुवोऽङ्गदेवताः स्वयम्भूश्च स्थूलदेहनैरपेक्ष्येण ज्ञानवत्त्वात् विदेहादेवा इत्युच्यन्ते; तासु स्वयम्भूरेवेश्वरः नित्येश्वरानङ्गीकारात् । देवताश्चेश्वरकोटयः अविद्यानावृतोपाधिकत्वात् । अविद्यावृतोपाधिकाश्च जीवकोटय एव; अविद्यावृतानावृतोपाधिकत्वे एव जीवेश्वरविभाजके । तदुक्तम्— "स ईशो यद्वशे माया स जीवो यस्तयार्दितः" इति । तदेवं सञ्चरो निरूपितः ।

---

१. मनोवनुपलब्धोऽप्ययं श्लोकः पुराणादिषु सृष्टिप्रसंगे दृश्यते एव; द्र० सौर पु० २१ अ०; मार्कण्डेय० ४५।६४, कूर्म० १।४।३८ ।

२. श्लोकोऽयं सांख्यसारतृतीयपरिच्छेदे, सांख्यतत्त्वविवेचने, चोद्धृतः; पद्म० (५।३।१५६) । अत्र 'कायस्थैः'रिति क्वचिद् दृश्यमानः पाठोऽसमीचीनः ।

३. कल्पभेदरूपो हेतुः पौराणिकैर्बहुधोच्यते, तथाहि—पुराणेषु च वैषम्यं युगकल्पव्यवस्थया (वैशाखमाहात्म्य० १३।१७) । श्रीधरोऽप्याह—यत्र यत्र नाम्नां वैलक्षण्यं दृश्यते तत्र कल्पयुगादिभेदेन व्यवस्थापनीयम् (विष्णु० ४।२२। २ टीका) ।

तत्र यद्यस्माज्जायते तस्येतरापूरणेनैव स्थितिः, तद्व्यतिरेकेणैव तत्संहारोऽपि तत्रैव भवति। तथा चोक्तं महाभारते (शान्ति० ३०६।३१)—

"यस्माद् यदभिजायेत तत् तत्रैव प्रलीयते।"
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम्[1] ॥इति॥

एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाः कूटस्थपुरुषविवेकाय प्रदर्शिताः। सूक्ष्मा अप्येषां परिणामाः स्मर्यन्ते। यथा—

"नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात्तन्न दृश्यते॥" इति॥

(भागवतं ११।२२।४२)। अतएव सर्वं जडवस्तु परमार्थतः सर्वदैव असदुच्यते। ततश्च तस्माज्जडवर्गाद्विरज्यात्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः। परमार्थसत्यत्वं च कूटस्थनित्यत्वम्। तत्र कूटस्थनित्यत्वासंहतत्वापरार्थत्वचिन्मात्रत्वाद्यसाधारणधर्मैरुत्कृष्टैः प्रकृत्यादिभ्यो विवेक्तव्यः।

इदानीं सदेवेत्यादिश्रुत्यर्थ उपपाद्यते (द्र० छान्दोग्य ६।२।१)।[2] प्रतिसञ्चरान्ते यन्निर्विशेषं चित्सामान्यमवशिष्यते, तदेव 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्मे'त्यादि[3] श्रुतिषु सद्ब्रह्मादिपदवाच्यम्। अद्वितीयत्वं तु अवैधर्म्याविभागाख्याभेदेनेति ॥५–६॥

---

१. यद् यस्माज् जायते तत्त्वं तत् तत्र प्रविलीयते इति पूर्वार्धे पाठान्तरम्। कारणे एव कार्यलयः स्मर्यते—तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु। प्रलीयन्ते यथाकालमूर्मयः सागरे यथा (अश्व० ५१।१२)।

२. सदेवदेमग्र आसीदिति वाक्ये सत्पदेन निरुद्धान्तःकरणः सृष्टिकर्ता प्रजापतिरेव गृह्यते, न च चिन्मात्ररूपः, तस्य सृष्टिसंकल्पश्रवणात्। सृष्टेः प्राग् ऐशं चित्तं निरुद्धं तिष्ठति, गुणवृत्त्यनुसारेण तच्चित्तं वैराजाभिमानात्मकं सत् तन्मात्रोपादानभूतं भूतादिनामकमपि भवति, ततश्च ग्राह्यं जगदाविर्भूतं भवति। सृष्टेः प्रागवस्था विशेषरहिता स्तिमिताऽप्रज्ञाता च, अतएव सदिति (अस्तीति) पदमेव तत्र प्रयोक्तुं शक्यते। यथा सदित्यादि वाक्यं प्रयुज्यते तथा 'आप एवेदमग्र आसुः' 'नारायण एवेदमग्र आसीत्' 'प्रजापतिरेवेदमग्र आसीत्' 'प्रजापतिर्वा इदमेक आसीत्' इत्यादीनि वाक्यानि प्रयुज्यन्ते। प्रजापतेः चित्तं त्रैगुणिकम्, तच्च जगदुपादानभूतम्, अतएव तत्त्वदृशा त्रिगुणोपादानकं जगदिति सांख्याः। प्रजापतेः संकल्पनमेव निमित्तकारणम्, अतएव स अभिन्ननिमित्तोपादानभूत इत्यपि कथयितुं शक्यते। प्रजापतिर्महदात्मोपाधिमान्, महदात्मगतः प्रत्यगात्मा खलु निर्विकारः, अतएव तत्त्वदृशा प्रकृति-पुरुषौ एव उपादाननिमित्तभूतौ सर्वेषां पदार्थानाम्।

३. ब्रह्मेति पदं श्रुतौ नास्ति, अर्थपूरणायेदं पदमुपात्तमिति प्रतिभाति। यद्वा आधुनिकासु कासुचिच् श्रुतिषु पदस्यास्य सत्ता कल्पनीया।

इदानीमन्तकालीनभगवत्स्मरणस्य परमगतिहेतुत्वश्रवणात् तत्स्मरणस्य च साध्यात्मसाधिभूतसाधिदैव-भगवदनुचिन्तनजन्यत्वादध्यात्मादिविभागः प्रदर्श्यते सूत्रत्रयेण। तत्र च प्रमाणम्—

"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भाव याति नास्त्यत्र संशयः ॥इति॥ (गीता ८।५)

साधिभूताधिदैव मां साधियज्ञ च ये विदुः।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥" इति (गीता ७।३०)।

**अध्यात्मम् ॥७॥**

**अधिभूतम् ॥८॥**

**अधिदैवतम्[1] ॥९॥**

सूत्रत्रयस्यापि क्रमेणैव व्याख्या[2]—बुद्धिरध्यात्मम्, बोद्धव्यमधिभूतम्, ब्रह्मा तत्राधिदैवतम्। अहङ्कारोऽध्यात्मम्, अधिमन्तव्यमधिभूतम्, रुद्रस्तत्राधिदैवतम्। मनोऽध्यात्मम्, सङ्कल्पयितव्यमधिभूतम्, चन्द्रस्तत्राधिदैवतम्। श्रोत्रमध्यात्मम्, श्रोतव्यमधिभूतम्, दिशस्तत्राधिदैवतम्। त्वगध्यात्मम्, स्पर्शयितव्यमधिभूतम्, वायुस्तत्राधिदैवतम्। चक्षुरध्यात्मम्, द्रष्टव्यमधिभूतम्, सूर्यस्तत्राधिदैवतम्। रसनमध्यात्मम्, रसोऽधिभूतम्, वरुणस्तत्राधिदैवतम्। घ्राणमध्यात्मम्, गन्धोऽधिभूतम्, पृथिवी तत्राधिदैवतम्। वागध्यात्मम्, वचनमधिभूतम्, वह्निस्तत्राधिदैवतम्। पाणिरध्यात्मम्, आदेयमधिभूतम्, इन्द्रस्तत्राधिदैवतम्। पादावध्यात्मम्, गन्तव्यमधिभूतम्, विष्णुस्तत्राधिदैवतम्। पायुरध्यात्मम्, उत्स्रष्टव्यमधिभूतम्, मित्रस्तत्राधिदैवतम्। उपस्थमध्यात्मम्, आनन्दयितव्यमधिभूतम्, प्रजापतिस्तत्राधिदैवतमिति त्रयोदशविध त्रितयमपि। तत्रात्मानं सङ्घातमधिकृत्य वर्तते तदध्यात्म त्रयोदशकरणवर्गः। भूतानि अधिकृत्य वर्तते तदधिभूतं विषयवर्गः। देवतामधिकृत्य वर्तत इत्यधिदैवत करणाभिमानि-देवतावर्गः। एतत्सहितेश्वरानुचिन्तितस्यान्तकालीनभगवत्स्मृत्या परमगतिः फलम्। तस्मादेतत्रिकमवश्यं ज्ञातव्यमिति भावः। सर्वतत्त्वाना ज्ञानफल चोक्त पञ्चशिखधृतवाक्येन—

---

१. अधिदैवम् (पाठा०)।

२ अध्यात्मादित्रयपदार्थविषये साख्येऽन्यत्र च विवरणमुपलभ्यते। किमध्यात्ममधिभूत मधिदैवत चेति प्रश्न कृत आसुरिणा। कपिलकृतमस्योत्तर कपिलासुरिसंवादे शान्तिपर्वणि (कुम्भ० सस्क०) दृश्यते। उक्तमत्र—एतदध्यात्ममधिभूतमधिदैवत च सर्वत्र प्रत्येतव्यानि इति। अध्यात्मादित्रयविवरण बहुत्रोपलभ्यते, यथा—अश्व० ४२ अ०, सुबालोप० ५।

"तत्त्वानि यो वेदयते यथावद्[1]
गुणस्वरूपाण्यधिदैवतं च।
विमुक्तपाप्मा गतदोषसङ्घो
गुणांस्तु भुङ्क्ते न गुणैः स भुज्यते[2] ॥"

तत्त्वानीति तान्त्रिकी[3] संज्ञा। तदर्थश्चात्मानात्मविवेकप्रतियोग्यनुयोगिनस्तत्पदार्थाः तेषां भावस्तत्तत्पदप्रवृत्तिनिमित्तानि पुरुषत्वप्रकृतित्वादीनि पञ्चविंशतिजातयः धर्मधर्म्यभेदात् व्यक्तयोपि तत्त्वानीत्युच्यन्ते। वेदयते वेत्तीत्यर्थः। गुणाः सत्त्वरजस्तमांसि तान्येव स्वरूपाणि तात्त्विकरूपाणि येषां तानि गुणस्वरूपाणि। अधिदैवतञ्च अध्यात्माधिभूतयोरुपलक्षणम्। गुणांस्तु भुङ्क्ते गुणास्तस्य वशे भवन्तीति। न गुणैः स भुज्यते गुणवशो न भवतीत्यर्थः ॥७–९॥

॥ इति तत्त्वपादः प्रथमः ॥

इदानीं द्वितीयः प्रकीर्णपाद आरभ्यते। तत्र—"पञ्चस्रोतोऽम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम्। पञ्चावर्त्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः" (श्वेताश्व० १।५) इत्यादिश्रुत्यर्थोपपत्तये पञ्चकानि निरूपयति सूत्रजातेन—

**पञ्चाभिबुद्धयः[4] ॥१०॥**

अभिबुद्धिरभिमान इच्छा कर्त्तव्यता क्रियेति पञ्चाभिबुद्धिसंज्ञिताः। तत्राभिबुद्धिर्नाम अभिमुखी बुद्धिः, इदमवश्यं करणीयमितिरूपा बुद्धिवृत्तिः। अभिमानश्चाहं करोमीति वृत्तिः। इच्छा वाञ्छा सङ्कल्पो मानसी वृत्तिः।

---

१. शान्तिपर्वणि (कुम्भ० संस्क०) इदं कपिलवचनमुद्धृतम्—तत्त्वान्येतान्यथोक्तानि यथावद् योऽनुबुध्यते। न स पापेन लिप्येत निर्मुक्तः सर्वसंकरात् इति। अतएवोक्तम्—पुण्यपापक्षयार्थं हि सांख्यज्ञानं विधीयते। तत्क्षये ह्यस्य पश्यन्ति ब्रह्मभावे परां गतिम् (शान्ति० २७५।३९)। सांख्ययोगविवरणेषु तत्त्वपदं बहुशः प्रत्युक्तम्, यथा—तत्त्वज्ञानासिना (अश्व० ४७।१४), एतत्सर्वं प्रसंख्याय यथावत् तत्त्वनिश्चयात् (अश्व० ४५-५५), चतुर्विंशतिरेका च तत्त्वसंख्या प्रकीर्त्तिता (अश्व० ३५।४८)।

२. अश्वमेधे पठ्यते—तत्त्वानि यो वेदयते यथातथं गुणांश्च सर्वानखिलांश्च देवताः। विधूतपाप्मा प्रविमुच्य बन्धनं स सर्वलोकानमलान् समश्नुते ॥ ३५।५०॥

३. सांख्ये तत्त्वमिति संज्ञाशब्द एव। अतएव सांख्ययोगविवरणवाक्ये 'तत्त्वसंज्ञितः' इति पदं प्रयुक्तम् (शान्ति० ३०२।३८)। तत्त्वस्वरूपं भूमिकायां विवृतम्।

४. पञ्च वह्नयः इति क्वचिदपपाठः।

कर्तव्यता ज्ञानेन्द्रियाणां शब्दादिविषया वृत्तिः। क्रिया वचनादिलक्षणा कर्मेन्द्रियाणा वृत्तिरिति। अभिबुद्धयो[1] व्याख्याताः ॥१०॥

**पञ्च कर्मयोनयः[2] ॥११॥**

कर्मजन्याः कर्मजनकाश्च धृतिः श्रद्धा सुखाऽविविदिषा विविदिषा चेति पञ्च—

"[3]वाचि कर्मणि सङ्कल्पे प्रतिष्ठां योऽभिरक्षति।
तन्निष्ठस्तत्प्रतिष्ठश्च धृतेरेतद्धि लक्षणम्॥
अनुसूया ब्रह्मचर्यं यजनं याजन तपः।
दानं प्रतिग्रहो होमः श्रद्धाया लक्षणं स्मृतम्॥
अर्थार्थी यस्तु सेवेत विद्याकर्मतपांसि च।
प्रायश्चित्तपरो नित्य सुखेय परिकीर्त्तिता॥"

अविविदिषा वेदवेदनेच्छा प्रतिबन्धकक्रिया। विविदिषा यथा—

"एकत्वं च पृथक्त्वं च नित्य चेदमचेतनम्।
सूक्ष्म सत्कार्यमक्षोभ्य ज्ञेया विविदिषा[4] हि सा॥

आत्मनि एकत्वपृथक्त्वादि-विषयिणी जिज्ञासा विविदिषा। एतासु चतस्रो बन्धाय विविदिषैका मोक्षाय ज्ञानमोक्षप्रतिबन्धनाशककर्मजन्यत्वात्तज्जनकत्वाच्च[5] ॥११॥

---

१ पञ्चाभिबुद्धय खलु पञ्च ज्ञानेन्द्रियाणि इति सर्वोपकारिणीकार। तत्त्वसमाससूत्रवृत्तौ 'व्यवसायोऽभिमानेच्छा कर्तव्यता क्रियेति' उक्तम्।

२ पञ्च कर्मयोनय इत्यनेन पञ्च कर्मेन्द्रियाणि उच्यन्ते इति सर्वोपकारिणीकार,।

३ सांख्यकारिका २९ व्याख्याने युक्तिदीपिकायामस्य सूत्रस्य उल्लेखो व्याख्यान च दृश्येते। युक्तिदीपिकायाम् 'आह च' इत्युक्त्वा 'वाचि कर्मणि ', 'अनसूया ब्रह्मचर्यं ', 'सुखार्थी यस्तु ', 'द्वित्वैकत्वपृथक्त्वम् ' 'विषपीतसुसमत्त ' इतीमे श्लोका उद्धृता धृति-श्रद्धा-सुखा-विविदिषा-अविविदिषालक्षणपरा।

४ विविदिषा क्रिया (पाठा०)।

५ पञ्च कर्मयोनिप्रसगे शान्तिपर्वगतकपिलासुरिसवादे यदुक्त तदिहोच्यते—यदप्युक्त कति कर्मयोनयो भवन्तीति। अत्र ब्रूम—पञ्च कर्मयोनयो भवन्ति—धृतिः श्रद्धा सुखा विविदिषाऽविविदिषा चेति। तत्र धृतिर्नाम कर्मयोनि। धृति योऽनुरक्षति त्रिविधेन कर्मणा वाङ्मन कायसमुत्थेनेति। एवमाह—वाचि कर्मणि सकल्पे प्रतिज्ञा योऽनुरक्षति। तन्निष्ठस्तत्प्रतिज्ञश्च धृतेरेतत् स्वलक्षणम्॥ श्रद्धा नाम कर्मयोनि— श्रद्धा यत्स्वनुतिष्ठते सोऽनसूया दमादिभि। विज्ञानसयोग ब्रह्मचर्यगुरुकुलनिवासगृहस्थवान् प्रस्थदानाध्ययनप्रतिग्रहमन्त्रादिभिर्नक्षत्रनियमैः श्रेय

पञ्च वायवः ॥१२।

हृदि प्राणो गुदेऽपानो व्यानः सर्वशरीरगः ।
उदानः कण्ठदेशे च समानो नाभिसंस्थितः[1] ॥

एते पञ्च क्रियाशक्तिमदन्तःकरणवृत्तिभेदा अपि वायुसमानगतिकत्वा-द्वायुदेवताकत्वाच्च वायव इत्युक्तम्। प्रकर्षेण अवनाद् गमनात् प्राण इत्यु-च्यते। अधोगमनादपानः। भुक्तस्यान्नस्य रसादेर्विक्षेपणाद् विजृम्भक्षणाच्च व्यान इत्युच्चते। उद्गारवमनादिकं करोतीति उदानस्तेन गीयते। भुक्तस्य समाशं रसं नयतीति समानः। तन्त्रान्तरोक्ता अप्यन्ये नागकूर्मकृकर (कृकल)-देवदत्तधनञ्जयाख्यास्तत्रैवान्तर्भाव्याः। इत्येते पञ्चप्राणा व्याख्याताः[2] ॥१२॥

पञ्च कर्मात्मानः[3] ॥१३॥

वैकारिकस्तैजसो भूतादिः सानुमानो निरनुमानश्चेति कर्मात्मानः कर्मिण इत्यर्थः। तत्र वैकारिकः शुभकर्मकर्त्ता। तैजसोऽशुभकर्मकर्त्ता। भूतादिर्मूढकर्मकर्त्ता। सानुमानः शुभमूढकर्मकर्त्ता। निरनुमानोऽशुभमूढ-कर्मकर्त्ता। इति पञ्च कर्मात्मानो व्याख्याताः ॥१३॥

---

प्राप्स्यामीत्येवमनुष्ठानं कुरुते इति। एवमाह—ब्रह्मचर्यानसूये च दानमध्ययनं तपः। यजनं याजनं चैव श्रद्धाया लक्षणं स्मृतम्। सुखं नाम कर्मयोनिः—यः सुखकामो भवति प्रायश्चित्तपरः परेण यत्नेनानुतिष्ठति। तद्यथा सत्यं काममन्यु-विषय-गोब्राह्मणकर्म। अनुलोमानामपि प्रोक्ता सावित्रीत्यन्याश्च विद्या बह्व्यो ब्रह्मलोकं प्रापयन्तीति। एवमाह—कर्मविद्यातपोभिस्तु यो यत्नमनुतिष्ठति। प्रायश्चित्तं तपश्चैव तत्सुखायास्तु लक्षणम्। विविदिषा नाम कर्मयोनिः—सर्वं ज्ञातुकामता। आगमांश्च कुरुते श्रुतिविशेषाकाङ्क्षी क्व संज्ञा क्व वासंज्ञेति। एवमाह—सर्वमेतत्परिज्ञाय कर्म ह्यारभते तु यः। सैषा विविदिषा नाम कर्म-योनिः। सर्वमेवाज्ञातुकामता सर्वकर्मभ्यो विनिवर्तनमिति। एवमाह— सर्व-मेतत्परिज्ञाय कर्मभ्यो यो निवर्तते। सैषा विविदिषा नाम कर्मयोनिरनुष्ठिता ॥

१. तुलनीयः श्लोकः—हृदि प्राणो गुदेऽपानो नाभिस्थस्तु समानकः। कण्ठदेशेऽप्युदानः स्याद् व्यानः सर्वशरीरगः ॥ देवीभाग० ७।३२।४० ॥

२. पञ्चवायुविषये—अश्व० २१-२४ अ० द्र०।

३. पञ्चकर्मात्मविषये गीतावचनमपि आलोच्यम्—अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥१८।१४॥ अत्र 'प्रोच्यते गुणसंख्याने' इत्यप्युक्तम् (१८।१९)। गुणसंख्यानं नाम सांख्यशास्त्र मिति शंकरः। अधिष्ठानमित्यादिकः श्लोकः शान्तिपर्वण्यपि दृश्यते (३४७।८९)। त्रयोदशसूत्रं खलु पञ्चवायुकार्यनिर्देशकमिति सर्वोपकारिणीकृत्।

इदानीं 'पञ्चाशद्भेदां पञ्चपर्वामधीम' इति श्रुत्यर्थोपपत्तये बुद्धेः पञ्चाशत्सर्गान् बहुभिः सूत्रै रुद्दिशति—

**पञ्चपर्वाऽविद्या[1] ॥१४॥**

अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या पतञ्जल्युक्त-(योगसूत्र २।५)सर्वदर्शनसम्प्रतिपन्ना। सा च पञ्चधा—अविद्यास्मितारागद्वेषाभिनिवेशाः, क्लेशजनकत्वात् क्लेशा इति योगे परिभाषिताः। अस्मितादीनां चतुर्णामविद्याकार्यत्वादविद्यात्वम्। अस्मिता अनात्मन्यहंवृत्तिः। अविद्यास्मितयोरयं भेदः—अविद्यायामधिकरणमपि पृथग् भासतेऽस्मितायां त्वारोपरूपत्वेऽपि नाधिकरणं भासते। विषयेषूत्कटेच्छा रागः। द्वेषो वैरबुद्धिः। अभिनिवेशो मरणत्रासः, विदुषामपि स्वरसवाही अनादिमरणदुःखानुभवजनितवासनाजन्यः। श्रुतिस्मृतिपुराणेषु एते अविद्याभेदास्तमआदिशब्दैः परिभाषिताः[2]। तमो मोहो महामोहस्तामिस्रोऽन्धतामिश्रश्चेति तत्तन्नामकनरकप्रदत्वात्तत्तन्नामकाः। ते च विषयभेदाद् द्विषष्टिभेदाः। ते यथा—अष्टप्रकृतिषु आत्मत्वारोपात् अष्टभेदं तमः। देवा अणिमाद्यष्टविधमैश्वर्यमासाद्य वयममृता इत्यभिमानिनो भवन्ति सोऽयमभिमानो मोहोऽष्टविधः। दृष्टानुश्रविकेषु द्वादशसु विषयेषु प्राप्तेषु मुक्तोऽहमिति मन्यते सोऽभिमानो रागातिशयनिमित्तत्वान् महामोहो दशविधः। अणिमाद्यष्टगुणैश्वर्ये दशविधविषये च प्रतिहतस्य क्रोधाद् यद् दुःखमुत्पद्यते स तामिस्रोऽष्टादशविधः। देवा अणिमाद्यष्टकमैश्वर्यं शब्दादींश्च दश विषयान् भुञ्जानाः क्षयशङ्कयात्र सन्ति स त्रास एवाष्टादशविधोऽन्धतामिश्र इति द्विषष्टिभेदा पञ्चपर्वा अविद्या ॥१४॥

**[3]अष्टाविंशतिधाऽशक्तिः[4] ॥१५॥**

---

१. पञ्चपर्वाऽविद्या इति वार्षगण्य आहेति तत्त्वकौमुदीकारः (४७ कारिकाव्याख्याने); कपिलासुरिसंवादे उक्तम्—कति पर्वाणि भवन्तीति, अत्रोच्यते—पञ्चपर्वाणि तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति। तम इति अज्ञानमेवाधिकुरुते, मोह इत्यालस्यमेवाधिकुरुते, महामोहमिति काममेवाधिकुरुते...तामिस्रमिति क्रोधमेवाधिकुरुते, अन्धतामिस्रमिति विषादमेवाधिकुरुते...एवं ह्याह—पर्वाणि पञ्चाणि घोराणि योऽविद्वान् नावबुध्यते। स बध्यते मृत्युपाशैर्हर्षशोकसमन्वितः॥ इति। श्वेताश्वतरोपनिषदि 'पञ्चपर्वाम्' इति पदेनैषाऽविद्यैवोक्ता (द्र० भाष्यम्)।

२. उक्तं च लिङ्गपुराणे—तमो मोहो महामोहस्तामिस्रश्चान्धसंज्ञितः। अविद्या पञ्चधा ह्येषा प्रादुर्भूता स्वयंभुवः॥ (१।५।२)। प्रादुर्भूता महात्मन इति विष्णुपुराणे (१।५।५)।

३. अशक्तिरष्टाविंशतिधेति देवलः।

४. अष्टाविंशतिरशक्तिः (पाठा०); अष्टाचत्वारिंशधा अशक्तिरित्यपपाठः।

तत्राशक्तयः एकादशेन्द्रियवधाः, सप्तदश बुद्धिवधाः। तत्रेन्द्रियवधाः—स्वस्वार्थक्रियाऽक्षमतारूपाः फलतो बुद्धिरेव ते।

"बाधिर्यं कुष्ठितान्धत्वं जडताऽजिघ्रता तथा।
मूकता कौण्यपङ्गुत्वे क्लैब्योदावर्त्तमुग्धताः[1] ॥

सप्तदश बुद्धेरेव वधाः तुष्टिसिद्धीनां विपर्ययरूपाः। तत्र तुष्टिविपर्ययाः—नास्ति प्रधानमिति ज्ञानमस्तीत्यभिधीयते। महत्तत्त्वं नास्तीति ज्ञानम ज्ञानसलिलाः। अहङ्कारो नास्तीति मोहा। नैव सन्ति पञ्चतन्मात्राणीति दृष्टिरदृष्टिः। विषयाणामर्जने प्रवृत्तिः असुतारा। रक्षणे प्रवृत्तिरसुपारा। क्षयदोषमपश्यतः प्रवृत्तिः असुनेत्रा। भोगे शक्तिः असुमात्रिका। हिंसादोषमपश्यतो भोगे प्रवृत्तिः अनुत्तमाम्भसिका। इति तुष्टिर्विपर्यया नवधा।

सिद्धिविपर्यासाद् अष्टौ बुद्धिवधा उच्यन्ते। नानात्वमूहमानस्यैकत्वानुसन्धानं सुतारमुच्यते। शब्दमात्रश्रवणाद्विपरीतग्रहणमसुतारा। यथा नानात्मज्ञो मुक्त इति श्रुत्वा विपरीतं प्रतिपन्नो नानात्मज्ञोऽहममुक्त इति। अध्ययनश्रवणनिविष्टस्यापि जडत्वादसच्छास्त्रोपहतबुद्धित्वाद्वा पञ्चविंशतितत्त्वज्ञानसिद्धिर्न भवति तदज्ञानम्। यदा आध्यात्मिकेन दुःखेन चाभिभूयते तदज्ञानप्रमादम्। एवमाधिभौतिकदुःखेनाभिभूयते तत्प्रमोदमानम्। एवमेवाधिदैविकदुःखेनाभिभवः प्रमुदितमिति। सुहृदुपदिष्टेत्यात्मनि अनिश्चयबुद्धिरनर्थकम्। स्वदानमनर्थकम् ज्ञात्वा दानपात्रस्य गुरुणि दुःखे जाते प्रमोदः प्रमुदिता। एवमष्टौ सिद्धिविपर्यया व्याख्याताः। एवं सप्तदश बुद्धिवधाः ॥१५॥

## नवधा तुष्टिः[2] ॥१६॥

नवधा तुष्टिरुच्यते। तत्र कारिका—

आध्यात्मिक्यश्चतस्रः प्रकृत्युपादान काल-भाग्याख्याः।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोभिहिताः॥ (५० का०)।

कुतश्चित् सर्वाकारेण परिणममाना प्रकृतिरेव ज्ञानं करिष्यतीति श्रुत्वा या तुष्टिः सा प्रकृत्याख्या तस्या अम्भेति[3] संज्ञा। प्रव्रज्ययैव ज्ञानं भविष्यतीति श्रुत्वा प्रव्रज्योपादानेन या तुष्टिः सा सलिलसंज्ञा। कालेनैव ज्ञानं भविष्यतीति श्रुत्वा प्रव्रज्यया बहुकालेन या तुष्टिः सा ओघेत्युच्यते। भाग्येनैव ज्ञानं भविष्यति मदालसा बालकानामिवेति कुतश्चिच्छ्रुत्वा या तुष्टिः सा वृष्टिरितिसंज्ञा। एताश्चतस्र आध्यात्मिक्यः। अथ बाह्याः पञ्च—शब्दादिविषयेष्वर्जन-

१. श्लोकोऽयम् सांख्यभाष्ये (३।३८) सांख्यचन्द्रिकाया (४९) चोद्धृतः।
२. तुष्टिर्नवधेति देवलः।
३. अस्त्रेति भ्रष्टः पाठः।

रक्षणक्षयभोगहिंसादि-दोषदर्शनाद्या निवृत्तितुष्टयस्तास्वेका तुष्टिः अपारमुच्यते, द्वितीया सुपारम्, तृतीया पारम्, अनुत्तमाम्भसिका चतुर्थी, उत्तमाम्भः पञ्चमी, इति नव तुष्टयो व्याख्याताः ॥१६॥

अष्टधा सिद्धिः[1] ॥१७॥

अथाष्टौ सिद्धयः। तत्र कारिका (सांख्यकारिका ५१)—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः॥

अस्यार्थः। भगवत्कृपावशादूहनेन तर्केणैव ज्ञानमुत्पद्यते सा प्रथमा सिद्धिस्तारेत्युच्यते। शब्दश्रवणमात्रादेव यज् ज्ञानं सा द्वितीया सुतारा। शिष्यभावेनाध्ययनेन यज् ज्ञानं सा तृतीया तारतरेति। यदाध्यात्मिकदुःखस्यापनोदकं ज्ञानं सा चतुर्थी प्रमोदेति। यदाधिभौतिकदुःखापनोदकं ज्ञानं सा पञ्चमी प्रमुदितेति। यदाधिदैविकदुःखनाशकं ज्ञानं सा षष्ठी प्रमोदमाना। यत् सुहृत्संसर्गितया ज्ञानं सा सप्तमी रम्यकेति। यद्दानेन परितोषितात् गुरोर्ज्ञानं साष्टमी सदामुदितेति। आसु प्रथमास्तिस्रो दुःखविघातात्मकानां मुख्यानां तिसृणां सिद्धीनामङ्कुश आकर्षकः साधक इति यावत्। सिद्धयस्त्वेता एव। अणिमाद्यास्तु ज्ञानप्रतिबन्धकत्वादसिद्धय एवेत्याचार्याशयः। एवमष्टौ सिद्धयो व्याख्याताः[2] ॥१७॥

इदानीं सांख्यशास्त्रस्य षष्टितन्त्रत्वप्रतिपादनाय पञ्चाशत्सु सिद्धिसर्गेषु दशान्यान् पूरयति सूत्रेण—

दश मूलिकार्थाः[3] ॥१८॥

अस्तित्वमेकत्वमथार्थवत्त्वं पारार्थ्यमन्यत्वमकर्तृता च।
योगो वियोगो बहवः पुमांसः स्थितिः शरीरस्य च शेषवृत्तिः[4] ॥

---

१. सिद्धिरष्टधेति देवलः। अष्टधा शक्तिरिति क्वचित् कोशे पठ्यते।

२. विपर्ययाशक्तितुष्टिसिद्ध्याख्याः पञ्चाशत् प्रत्ययभेदाः पुराणविशेषे प्रपञ्चिता इति शंकराचार्यः श्वेताश्वतरभाष्ये (१।४) आह—एवं ब्राह्मपुराणे कल्पयोनिषद्व्याख्यानप्रदेशे षष्टितमाध्याये पञ्चाशत् प्रत्ययभेदाः प्रतिपादिताः।

३. दश मूलिकार्था इति देवलः। दश मूलिका अर्थाः (पाठा०); दश फलिकार्था इत्यपपाठः।

४. श्लोकोऽयं सांख्यग्रन्थेषु सांख्यतत्त्वविवेचनादिषु बहुश उद्धृतः; इदं देवलवचनमिति विज्ञायते (याज्ञ० प्रायश्चित्त १०९ अपरार्कटीका)।

मूलयोः प्रकृति-पुरुषयोरर्था धर्मा मूलिकार्थाः। तत्रास्तित्वं द्वयोर्धर्मः। एकत्वं सर्गभेदेन नानात्वाभावरूपं प्रकृतेः। अर्थवत्त्वं पुरुषार्थत्वं पुरुषस्यैव। पारार्थ्यं च प्रकृतेरेव। अन्यत्वं जडवर्गाद् भिन्नत्वं पुरुषस्यैव। अकर्तृता च पुरुषस्यैव। योगो वियोगश्च द्वयोः। बहुत्वं पुरुषस्यैव। जीवन्मुक्तस्य संस्कारमात्रेण चक्रभ्रमिवच्छरीरस्य या स्थितिः सा शेषवृत्तिः पुरुषस्य। इति दश पदार्थाः। प्रत्ययसर्गाख्याः पञ्चाशत् पूर्वोक्ताः, एते च दश मूलिकाः। एवं षष्टिपदार्था षष्टितन्त्रे उक्ताः ॥१८॥

## अनुग्रहः सर्गः[1] ॥१९॥

इदानीं पञ्चतन्मात्रसर्गं सूचयति—अनुग्रहः सर्ग इति। पञ्चतन्मात्रा अनुगृह्योपादानकारणत्वेन स्वीकृत्य यः सर्गः सोऽनुग्रहः सर्गः। पञ्चानां ब्राह्मणानां सचतुर्मुखसनकादीनां स्वस्य लीलाविग्रहे सर्गो भक्तानामनुग्रहार्थं सोऽप्यनुग्रहसर्गः पञ्चतन्मात्रेभ्य एव[2] ॥१९॥

## चतुर्दशविधो[3] भूतसर्गः ॥२०॥

इदानीं भूतसर्गमाह—चतुर्दशविधो भूतसर्ग इति। ब्राह्म-प्राजापत्य-सौम्यैन्द्र-गान्धर्व-याक्ष-राक्षस-पैशाचा इत्यष्टौ देवसर्गाः। पशु-पक्षि-मृग-सरीसृप-स्थावरा इति पञ्चविधास्तैर्यग्योनयः। मानुषश्चैकविधो ब्राह्मणादिश्चाण्डालान्त इति। गवादिमूषकान्ताः पशवः। गरुडादिमशकान्ताः पक्षिणः। सिंहादिशृगालान्ता मृगाः[4]। शेषादिदुन्दुभान्ताः सरीसृपाः। पर्वतादितृणान्ताः स्थावरा इति। अत्र कारिका (सांख्यकारिका ५३)—

---

१. अनुग्रहसर्ग इतिपाठोऽसाधुः।

२. इदमपि संभाव्यते यत् स्रोतविशेषः अत्र लक्षितः, यथोक्तम् कापिलासुरिसंवादे—पञ्चस्रोतांसि भवन्ति मुख्यस्रोतस्तिर्यक्स्रोत ऊर्ध्वस्रोतोऽर्वाक्स्रोतोऽनुग्रहस्रोतश्चेति।' 'अनुग्रहः सर्गः' पुराणे पठ्यते, तथाहि—अष्टमोऽनुग्रहः स्मृतः (लिङ्ग० १।५।८), अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च यः (विष्णु० १।५।२२)। विपर्याशक्तितुष्टिसिद्धिव्यवस्थितः सर्ग एवानुग्रहः सर्ग इति वायौ उक्तम् (द्र० श्रीधरी टीका १।५।२२)।

३. चतुर्दशविषये इमानि वचनानि द्रष्टव्यानि—अष्टभेदान् सुरान् कृत्वा तिर्यग्योनिं च पञ्चधा। मनुष्यानेकभेदाश्च सृष्टिमेवं ससर्ज हं ॥अवन्तीक्षेत्र २।३१॥ अष्टास्वेतासु सृष्टासु देवयोनिषु (वायु० ९।४१)।

४. अस्ति च मृग-पशूनां भेदः, अत एव पशुभावान्मृगो भवेदिति वायावुक्तम् (१४।३६)।

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥इति॥
एतत्संसारमण्डलम्[1] ॥२०॥

अन्यानप्यनुक्तान् सर्गानुद्दिशति सूत्रत्रयेण—

**त्रिविधो बन्धः[2] ॥२१॥**

**त्रिविधो मोक्षः ॥२२॥**

**त्रिविधं प्रमाणम् ॥२३॥**

प्राकृतिको वैकृतिको दाक्षिण इति त्रयो बन्धाः । प्राकृतोऽष्टप्रकृतिष्वभिमानरूपः । द्वितीयस्तु प्रव्रजितानामपि शब्दादिषु मनसः सङ्गः । तृतीयस्तु गृहस्थादीनां कामोपहतचेतसां दक्षिणां ददतां दक्षिणाबन्धः । उक्तं च पञ्चशिखाचार्यैः—

"प्राकृतेन तु बन्धेन तथा वैकारिकेण च ।
दक्षिणाभिस्तृतीयेन बद्धो जन्तुर्विवर्तते"[3] ॥इति॥२१॥

मोक्षत्रैविध्यं चोक्तम्—

"आदौ[4] तु मोक्षो ज्ञानेन द्वितीयो रागसंक्षयात् ।
कृत्स्नक्षयात्[5] तृतीयस्तु व्याख्यातं मोक्षलक्षणम् ॥"

ज्ञानोद्रेकाद् अविद्यानिवृत्तिरूप एकः, रागसंक्षयाद् इन्द्रियोपशमो द्वितीयः, कृत्स्नक्षयाद्धर्माधर्माकरणरूपाद् धर्माधर्मानुत्पादरूपस्तृतीयः । एतत्त्रयं ज्ञानद्वारभूतत्वाद् गौणं मोक्षत्रयम् । आत्यन्तिकत्रिविधदुःखनिवृत्तिरेव मुख्यो मोक्षः । तदुक्तं गोतमेन सूत्रेण—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति[6] (न्यायसूत्रं १।१।२) ॥२२॥

---

१. एतदनन्तरं क्वचित् कोशे 'त्रिविधो धातुसर्ग' इति सूत्रं पठ्यते ।

२. त्रिविधो बन्ध इति देवलः ।

३. प्राकृतेन च बन्धेन तथा वैकारिकेण च । दक्षिणाभिस्तृतीयेन बद्धोऽत्यन्तं विवर्तते । ब्रह्माण्ड० ३।३।३७–३८ ॥

४. त्रिविधमोक्षविवरणं पुराणादिषूपलभ्यते । वायौ पठ्यते—पूर्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात् । लिङ्गाभावात् तु कैवल्यं कैवल्यात्तु निरञ्जनम् ॥७९॥ निरञ्जनत्वाच् छुद्धस्तु ततो नेता न विद्यते । तृष्णाक्षयात् तृतीयस्तु व्याख्यातं मोक्षकारणम् ॥१०२।८०॥

५. कृच्छक्षयादिति पाठोऽसमीचीनः । उक्तं च कपिलासुरिसंवादे—सम्यग्दर्शनसम्पन्नः कृत्स्नक्षयमवाप्नुयात् । कृत्स्नक्षयं न चाप्नोति असम्यग्दर्शने रतः इति ।

६. सूत्रेऽपायादिति क्वचित् पठ्यते ।

उक्तानां पदार्थानां सिद्ध्यर्थं प्रमाणान्याह मानाधीनत्वान्मेयसिद्धेः—त्रिविधं प्रमाणमिति[1]—प्रत्यक्षानुमानशब्दा इति। तत्रानधिगतयथार्थं ज्ञानं प्रमा, तत्करणं प्रमाणमिति समान्यलक्षणमेकम्। अर्थाकारानधिगतयथार्थान्तःकरणवृत्तिरिति द्वितीयम्। तत्र प्रत्यक्षमिन्द्रियजन्यमनधिगतयथार्थज्ञानं प्रत्यक्षप्रमा। तत्करणं प्रत्यक्षप्रमाणम्। इन्द्रियजन्यानधिगतयथार्थान्तःकरणवृत्तिरिति द्वितीयम्! यथार्थलिङ्गज्ञानाज्जायमानं ज्ञानमनुमितिस्तत्करणमनुमानमित्येकम्। लिङ्गज्ञानाज्जायमाना साध्यविशिष्टपक्षाकारान्तःकरणवृत्तिरिति द्वितीयम्। आप्तवचन-जन्य-ज्ञानं शब्दप्रमा तत्करणं शब्दप्रमाणमित्येकं लक्षणम्। आप्तवचनजन्या पदार्थसंसर्गाकारान्तःकरणवृत्तिरिति द्वितीयं शब्दप्रमाणलक्षणम्।

आप्तस्तु स्वकर्मण्यभियुक्तो[2] रागद्वेषरहितो ज्ञानवान् शीलसम्पन्नः। इद तु ज्ञानोपदेष्टुरेवाप्तलक्षणम्; वस्तुतो यथाभूतार्थस्योपदेष्टा पुरुष इत्येव।

उक्तपदार्थेषु केचित्प्रत्यक्षसिद्धाः केचिदनुमानसिद्धाः। उभाभ्यां यन्न सिद्धं तच्छब्दप्रमाणेन सिध्यति—यथेन्द्रो देवानां राजा, उत्तराः कुरवः, सौवर्णो मेरुः, स्वर्गेऽप्सरसः। एते पदार्था न प्रत्यक्षानुमानगम्याः, किन्तु शब्दैकगम्याः।

अत्र चैषा ज्ञानप्रक्रिया[3]। अन्तःकरणस्येन्द्रियाणां चाविभक्तः सङ्कोचविकासशाल्यग्रभागो वृत्तिरभ्युपेयते, भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति (५।१०७) सांख्यप्रवचनसूत्रात्। भागो विभक्तोऽवयवस्तस्माद् गुणाच्च तत्त्वान्तरं पदार्थान्तरमविभक्तोऽवयव इत्यर्थः। तथा चान्तःकरणवृत्तिरिन्द्रियवृत्तिद्वाराऽर्थसन्निकृष्टा भवति, तत इन्द्रियवृत्त्या सहार्थाकारा परिणमते, सा चार्थाकारा वृत्तिर्गुणरूपा सर्वात्मनां विभूत्वेऽपि स्वस्वामिन्येवात्मनि प्रतिबिम्बते नान्यत्र, अनादिस्वस्वामिभावस्य प्रतिबिम्बनियामकत्वाद् अन्यथाऽतिप्रसङ्गात्। प्रतिबिम्बश्चाधिष्ठानगताया बुद्धेर्विकारः परिणामः, स्वत्वं च स्वामिप्रकाशितवृत्तिजन्यसंस्कारवत्त्वम्। स्वामित्वं च स्वनिष्ठसंस्कारजनकवृत्तिप्रकाशकत्वम्, सा च वृत्तिरात्मनि स्थिता सती अर्थाकारा आत्माकारा च स्वसमानाकारं परिणामान्तरं धत्ते; स एवात्मनि वृत्तिप्रतिबिम्बो विषय-

---

१. त्रीणि प्रमाणानीति देवलः।

२. आप्तविषय उक्तम्—स्वकर्मण्यभियुक्तो यः रागद्वेषविवर्जितः। निर्वैरः पूजितः सद्भिराप्तो ज्ञेयः स तादृशः इति (५ कारिकाजयमङ्गलोद्धृतं वाक्यम्)।

३. ज्ञानोत्पत्तिविषये वाचस्पतिरूचे—उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते (तत्त्वकौ० ५)।

ताख्यः सम्बन्ध इति तदवच्छिन्नं चैतन्यं प्रत्यक्षप्रमा—'घटमहं जानामी'त्याकारार्थात्मविषयिणी। तदुक्तम्—

अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना।
तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते ॥

दृश्येन वृत्त्या। इयं च प्रत्यक्षा वृत्तिर्विषयदेशे जायमाना तत्रैवात्मनि प्रतिबिम्बते आत्मनो विभुत्वात्; यत्र चेन्द्रियद्वारं विना मनः स्ववासनावशाद्यत्रार्थेन सम्बद्ध्यते तत्र तदाकारा वृत्ति र्मानसं प्रत्यक्षम्। उक्तं च—

शरीरलयमुत्सृज्य यत्र चित्तविहङ्गमः।
स्ववासनावशाद्याति तत्रैवात्मानुभूयते ॥

इति वासिष्ठे। इति प्रत्यक्षप्रक्रिया।

एवं व्याप्तिप्रमाजन्यसाध्यविशिष्टपक्षाकारा वृत्तिरनुमानं तत्प्रतिबिम्बावच्छिन्नचैतन्यमनुमितिः। इत्यनुमानप्रक्रिया।

यथार्थपदस्मृतिजन्या पदार्थसंसर्गाकारा वृत्तिः शब्दप्रमाणम्, तत्प्रतिबिम्बावच्छिन्नचैतन्यं शाब्दी प्रमा; इदं प्रमाणद्वयमान्तरमेव। अपरोक्षत्वं परोक्षत्वं स्मृतित्वं संशयत्वं विपर्ययत्वं प्रमात्वाप्रमात्वं च सर्वे वृत्तिधर्मा एव तत्प्रतिबिम्बवशाच्चैतन्येऽप्युपचर्यन्ते। तत्रापरोक्षत्वपरोक्षत्वस्मृतित्वानि जातयः, संशयश्च भासमानविरोधोभयकोटिस्पृग्वृत्तिः। यत्र यन्नास्ति तत्र तन्निश्चयो विपर्ययः; यथार्थवृत्तिः प्रमा, अयथार्थवृत्तिरप्रमा। अत्र[1] प्रमात्रादि विभागविषये विज्ञानाचार्याणां कारिका—

प्रमाता चेतनः शुद्धः प्रमाणं वृत्तिरेव च।
प्रमार्थाकारवृत्तीनां चेतने प्रतिबिम्बनम् ॥
प्रतिबिम्बितवृत्तीनां विषयो मेय उच्यते।
वृत्तयः साक्षिभास्याः स्युः करणस्यानपेक्षणात्।
साक्षाद्दर्शनरूपं च साक्षित्वं सांख्यसूत्रितम् ॥ इति ॥

ज्ञानस्य च जन्यत्वं विनाशित्वमात्मधर्मत्वं च प्रतिबिम्बावच्छिन्नत्वेनोपपादनीयम्, आत्मरूपस्य ज्ञानस्य नित्यत्वात्। विशिष्टे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध इति न्यायात्। आधाराधेयभावोऽपि खे खगोदय इतिवदुपपादनीयः। वृत्तीनामात्मनि प्रतिबिम्बे प्रमाणम्—

---

१. 'अत्रायं प्रमात्रादिविभाग' इत्युक्त्वा 'प्रमाता चेतनः शुद्धः···' इत्यादयः कारिका उपन्यस्ता भिक्षुणा १।८७ सूत्रभाष्ये। अत्र त्रयः श्लोकाः। विज्ञानामृतभाष्येऽपि इमे श्लोका उपलभ्यन्ते।

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥

इति वासिष्ठम् (उपशम ९१।११३) । इति समासतो ज्ञानप्रक्रिया ॥२३॥

अत्र शास्त्रेऽनुक्ताः स्वाविरोधिनः शास्त्रान्तरीया अपि पदार्था ग्राह्याः, 'सारादानं षट्पदवदि'ति सांख्यप्रवचनसूत्रात् (४।१३) । "सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः" इति स्मृतेश्च (भागवतं ११।८।१०) । एते च प्रकृत्यादयः पदार्थाः संहतत्व-परार्थत्व-जडत्व-प्रतिक्षणपरिणामित्वादि-दोषैर्दुष्टत्वाद्धेयास्तेभ्योऽप्यधिकं हेयमाह—

[1]त्रिविधं दुःखम्[2] ॥२४॥

आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति[3] । तत्राध्यात्मिकं द्विविधं शारीरं मानसं च । तत्र शारीरं वातपित्तश्लेष्मणां वैषम्येणोत्पन्नं ज्वरातिसारादि । कामक्रोधलोभादिजन्यं मानसम् । मानुषमृगसर्पादिजन्यमाधिभौतिकम् । शीतोष्णवातवृष्टिजन्यमाधिदैविकम् । अनेन त्रिविधदुःखेनाभिभूतस्य 'तरति शोकमात्मविदिति (छान्दोग्य० ७।१।३) श्रुत्वा आत्मनि जिज्ञासा जायते । यथा तृषितस्य पानीयपिपासा[4] ॥२४॥

एतत् परं[5] याथातथ्यम्[6] एतज् ज्ञात्वा[7] कृतकृत्यः स्यान्न पुनस्त्रिविधदुःखे[8]नाभिभूयते[9] ॥२५॥

---

१. त्रिविधं दुःखमिति देवलः ।

२. 'त्रिविधं दुःखमिति' इति पाठान्तरम् ।

३. त्रिविधदुःखविवरणं बहुत्रोपलभ्यते—शान्ति० १९० अ०, शिवपु० ५।२३ अ०, मार्क० ११।२६—३२, लिङ्ग० १।८६ अ०, विष्णु० ६।५ अ० ।

४. दुःख-दुःखरोध-विषये इमानि शान्तिपर्ववचांसि द्रष्टव्यानि—दुःखं विद्यादुपादानादभिमानाच्च वर्धते । त्यागात्तेभ्यो निरोधः स्यान् निरोधज्ञो विमुच्यते ॥२१३। १९॥ अनिष्टसंप्रयोगाच्च विप्रयोगात् प्रियस्य च । मनुष्याः मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः ॥ प्रज्ञया मानसं दुःखं हन्याच् शारीरमौषधैः । एतद् विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ शान्ति० ३३०।१२-१३॥

५. इत्येतत् (पाठा०) ।

६. याथार्थ्यम् (पाठा०) । कपिलासुरिसंवादे याथातथ्यपरकमिदं वाक्यं द्रष्टव्यम्—कुशलं नाम सर्वेषु वेदेषु सर्वेषु शास्त्रेषु सर्वासु विद्यासु अधिगतयाथातथ्यत्वम् इति ।

७. सम्यग् ज्ञात्वा (पाठा०) ।

८. त्रिविधेन दुःखेन (पाठा०) ।

९. क्वचित् कोशे सूत्रमिदं द्विधा विभज्य पठितम्—यथातथ्यमित्यन्तमेकमिति ।

कृतस्य तत्त्वनिरूपणस्य पुरुषार्थसम्बन्धं दर्शयति—एतत्परं याथातथ्यम् एतज्ज्ञात्वा कृतकृत्यः स्यान्न पुनस्त्रिविधदुःखेनाभिभूयत इति। एतद्याथार्थ्यं परं शास्त्रान्तरोक्ताद्यार्थार्थ्यादुत्कृष्टं न्यायवैशेषिकोक्तयाथार्थ्यस्याष्टप्रकृत्यकथनादपूर्णत्वम्। इदं तु तत्कथनेन पूर्णं श्रुतिसम्मतत्वाच्च परं सर्वोत्कृष्टमित्यर्थः। श्रुतिश्च गोपालतापनीये—एकमेवाद्वितीयं ब्रह्मासीत् तस्मादव्यक्तादव्यक्तमेकाक्षरं तस्मान्महान्महतोहङ्कारस्ततः पञ्चतन्मात्राणि तेभ्यो भूतानि (२।९) इति स्पष्टमेव सांख्ययोगोक्तमहदादिक्रमेण सृष्टिः श्रूयत इति। एतज्ज्ञात्वा आत्मानात्मविवेकसाक्षात्कारद्वारा कृतकृत्यः स्यान्निष्प्रयोजनः स्यादित्यर्थः। किं पुनस्तत्प्रयोजनं तत्राह—न पुनस्त्रिविधदुःखेनाभिभूयत इति। पूर्वोक्तत्रिविधदुःखेन न युज्यते दुःखात्यन्तनिवृत्तिरूपो मोक्षो भवतीत्यर्थः। ननु दुःखं तावत् त्रिविधम्—अनागतं वर्तमानमतीतं चेति। सांख्ययोगवेदान्तानां सत्कार्यवादाश्रयणात् सर्वमेव कार्यमवस्थात्रयेण नित्यम्। अनागतो घटो वर्त्तमानो घटोऽतीतो घट इत्यवस्थात्रयेऽपि घटस्यावस्थाधर्मिणोऽनुगतप्रत्ययात्। प्रागभावप्रध्वंसयोश्चानङ्गीकारात्। न च तत्काले कथमभावप्रत्यय इति वाच्यम्, वर्त्तमानप्रतियोगिकसामयिकात्यन्ताभावेनैव तदुपपत्तेरिति। एवं चानागतातीतदुःखयोरभावेऽपि न पुरुषार्थः भोग्यदुःखाभावस्यैव पुरुषार्थत्वात्। वर्तमानदुःखं च भोग्यमपि भोगेनैव नङ्क्ष्यतीति तदभावो न पुरुषार्थः पुरुषप्रयत्ननिरपेक्षत्वात् पुरुषप्रयत्नसापेक्षस्यैव पुरुषार्थत्वात्। तथा च कथं दुःखाभावस्य पुरुषार्थत्वमिति चेदुच्यते—अनागतदुःखस्य भोग्यहेतुतया तदभावस्य च पुरुषकृतिसाध्यतया पुरुषार्थत्वं दुःखहेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवदिति। तदुक्तं पतञ्जलिना—हेयं दुःखमनागतम्, विवेकख्यातिरविप्लवा हानोपाय इति सूत्रद्वयेन (२।१६,२६)।

सांख्यानां च सर्वात्मनामवैधर्म्याभेद एव तत्त्वमसिवाक्यार्थो नाविभागादिः, तज्ज्ञानस्यैवाभिमाननिवर्त्तकत्वात्। तद्वाक्यस्य च श्वेतकेतोरनूचानत्वाद्यभिमाननिवृत्त्यर्थमेव प्रवृत्तेः; तथा च लयावशिष्टचित्सामान्यं तत्पदार्थः। तदुक्तं विज्ञानाचार्यवर्यैरस्मद्गुरुभिर्भाष्याद्यश्लोकेन—

एकोऽद्वितीय इति वेदवचांसि पुंसि
सर्वाभिमानविनिवर्तनतोऽस्य मुक्त्यै।
वैधर्म्यलक्षणभिदा विरहं वदन्ति
नाखण्डतां ख इव धर्मशताविरोधात्॥इति॥

---

१. छान्दोग्ये षष्ठाध्याये अनूचानमानिनः श्वेतकेतो राख्यायिका श्रूयते।

अन्यच्चात्र सांख्यविद्यायां भगवद्भक्तेरेवासाधारणकारणत्वं ज्ञेयम्, अन्यथा देवकृतविघ्नैर्योगभ्रंशो भवत्येव । यथोक्तं भागवते—

"येऽन्येऽरविन्दाक्ष विमुक्तमानिन
स्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ (१०।२।३२)

श्रेयःस्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम ॥" इति । (१०।१४।४)

इदानींतनाः केचन वैष्णवा एतादृशवाक्यैर्भगवद्भक्तिं पुरस्कृत्य सामान्यतो ज्ञानमार्गं खण्डयति, ते तु विद्याविवेकानभिज्ञाः स्थूलमतय एव । नारदीये च सांख्यविद्याधिकारे—

मायाप्रवर्तके विष्णौ कृता भक्तिर्दृढा नृणाम् ।
सुखेन प्रकृतेरन्यं स्वं दर्शयति दीपवत् ॥
चित्ते हि स्ववशे योगः सिद्ध्येत् तत्तु जगत्पतिम् ।
कोऽनाश्रित्य निगृह्णीयादव्यक्तमतिचञ्चलम् ॥
तस्मान्मुमुक्षोः सुसुखो मार्गः श्रीविष्णुसंशयः ।
चित्तेन चिन्तयानेन वञ्च्यते ध्रुवमन्यथा ॥ इति ।

गीतायां चतुर्दशाध्याये (१४।२६)—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ इति ।

ब्रह्मभूयाय पूर्णत्वेनाभिव्यक्तये गुणाभिधानं तत्तदवच्छिन्नत्वेनैवाभिव्यज्यते, तस्माद् भदवद्भक्तिरेव मुख्यं साधनं सांख्ययोगविद्यायामिति[2] सिद्धम् ॥२५॥

---

१. सांख्यशास्त्रे भक्तिरपि प्रपञ्चिता । एतद्विषयेऽस्मत्कृतो 'भक्तिकौस्तुभो' नाम ग्रन्थो द्रष्टव्यः (सूर्योदयपत्रे [४०।८] प्रकाशितः) । पुराणेषु आध्यात्मिकभक्तिप्रसङ्गे सांख्यीया भक्तिः प्रपञ्चिचितेति ग्रन्थान्तरे प्रतिपादयिष्यामः ।

२. द्र० बृ० ना० २।४७ वाक्यम्—सांख्याःसर्वत्र पश्यन्ति परिपूर्णात्मकं हरिम् इति । तत्त्वदृशा तु प्रधानप्रकृतिकं सर्वं जगत् ।

कृतं परोपकाराय तत्त्वयाथार्थ्यदीपनम् ।
तेन मे प्रीयतां कृष्णः परमात्मा जगद्गुरुः ॥
स्वतन्त्रत्वात् स एवैकः कर्ता गोपालबालकः ।
श्रीकृष्णाख्यो महेशानो दारुयन्त्रसमस्त्वहम् ॥
पुराणार्थं बुभुत्सूनां [व्याख्यानं] च मयेरितम् ।
तेभ्यः समर्पितं चैतत् तेनापि प्रीयतां हरिः ॥

इति श्रीभावाविश्वनाथदीक्षितसूनु-भावागणेशविरचितं
तत्त्वयाथार्थ्यदीपनं समाप्तम् ।

---

तत्त्वसमाससूत्राणां टिप्पणी या कृता मया ।
सांख्ययोगप्रदो धाता तया तुष्यतु शंकरः ॥

विज्ञानभिक्षुविरचितः

# साङ्ख्यसारः

## पूर्वभागः

### प्रथमः परिच्छेदः

महादाख्यः स्वयम्भूर्यो जगदङ्कुर ईश्वरः।
सर्वात्मने नमस्तस्मै विष्णवे सर्वजिष्णवे ॥१॥
साङ्ख्यकारिकया लेशादात्मतत्त्वं विवेचितम्।
साङ्ख्यसारविवेकोऽतो विज्ञानेन प्रचुच्यते ॥२॥
प्रायः सङ्कलिता साङ्ख्य-प्रक्रिया कारिकागणे।
साऽतोऽत्र वर्ण्यते लेशात् तदनुक्तांशमात्रतः ॥३॥
साङ्ख्यभाष्ये प्रकृत्यादेः स्वरूपं विस्तरान्मया।
प्रोक्तं तस्मात् तदप्यत्र सङ्क्षेपादेव वक्ष्यते ॥४॥

आत्मानात्मविवेकसाक्षात्कारात् कर्तृत्वाद्यखिलाभिमाननिवृत्त्या तत्कार्यरागद्वेषधर्माधर्माद्यनुत्पादात् पूर्वोत्पन्नकर्मणां चाऽविद्यारागादिसहकार्युच्छेदरूपदाहेन विपाकानारम्भकत्वाद् आरब्धसमाप्त्यनन्तरं पुनर्जन्माभावेन त्रिविधदुःखात्यन्तनिवृत्तिरूपो मोक्षो भवतीति श्रुतिस्मृतिडिण्डिमः। तत्र श्रुतयः—"अथाकामयमानो योऽकामो निष्कामो न तस्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते।[1]

आत्मानं चेत् विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् ॥[2]

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥[3]

---

१. तु० बृहदा० ४।४।६

२. बृहदा० ४।४।१२; अत्रार्थे भागवतमपि—आत्मानं चेद् विजानीयात् परं ज्ञानधुताशयः। किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः॥ (७।१५।४०)।

३. क० २।६।१४

कामान् यः कामयते मन्यमानः स कर्मभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥[1]

इत्याद्याः ।

स्मृतयश्च कौर्माद्याः । यथा कौर्मे—

"रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ।
कार्यो ह्यस्य भवेद् दोषः पुण्यापुण्यमिति श्रुतिः ॥[2]
तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः । इति ।

मोक्षधर्मे च—

"इन्द्रियाणीन्द्रियार्थाश्च नोपसर्पन्त्यतर्षुलम् ।
हीनश्च करणैर्देही न देहं पुनरर्हति ॥[3]
तस्मात् तर्षात्मकाद् रागाद् बीजात् जायन्ति जन्तवः ॥ इति ।

ननु रागाभावेऽपि केवलकर्मवशाद् नरकादिप्राप्तेः कथं रागस्य कर्मसहकारित्वं विपाकारम्भ उपपन्नम्, नरकादौ विशेषतो रागाभावेऽपि सामान्यतो रागसत्त्वात्, निषिद्धस्त्र्यादिगामिनां स्त्र्यादिरागादेव तप्तलोहमयनारीसमालिङ्गनादिरूपनरकोत्पत्तेः । यद्यप्यविद्याऽस्मितारागद्वेषभयाख्यं क्लेशपञ्चकमेव जन्मादिविपाकारम्भे कर्मणां सहकारि भवति—"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य"[4] इति श्रुतावभिमानरागद्वेषादिजन्यस्य विषयवासनाख्यसङ्गसामान्यस्यैव जन्मादिविपाकारम्भे कर्मसहकारित्वसिद्धेः ।

"यत्र यत्र मनो देही धारयेत् सकलं धिया ।
स्नेहाद् द्वेषात् भयात् वाऽपि याति तत्तत्स्वरूपताम् ॥

इत्यादिस्मृतेश्च । तथा च—"क्लेशमूलः कर्माशयः", "सति मूले तद्विपाको जात्यायुर्भोगाः"[5] इति योगसूत्राभ्यामप्यदृष्टे तद्विपाकारम्भे च क्लेशानां हेतुत्ववचनाच्च । तथाऽप्यविद्याऽस्मितासत्त्वे रागस्याऽऽवश्यकत्वाद् द्वेषभययोश्च रागमूलकत्वाद् राग एव मुख्यतो जन्मादिहेतुतया यथोक्तवाक्यैर्निर्दिश्यत इति ।

ननु "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"[6] इत्यादिश्रुतेर्ज्ञानस्य प्राचीनकर्मनाशकत्वमेवोचितम्, दाहकत्वं कथमिष्यते इति चेत्, न;

---

१. मुण्डक० ३।२।२

२. कूर्म० २।६।२१-२२, सपाठभेदम् ।

३. तु० शान्ति० २१३।२१

४. बृहदा० ४।४।६

५. योगसू० २।१२-१३

६. मुण्डक० २।२।८

"ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः"[1] इत्यादिवाक्यैर्दाहस्यापि श्रवणेन लाघवात् दाहपरत्वस्यैव नाशादिवाक्येष्वपि कल्पनौचित्यात्। कर्मणां दाहश्च क्लेशाख्यसहकार्युच्छेदेन नैष्फल्यम्। कर्मणां नाशस्तु प्रारब्धभोगान्ते चित्तनाशादेव भविष्यति, अतो लोकसिद्धेनाविद्यानाशेनैव द्वारेण कर्मफलानुत्पत्तिसम्भवाद् न ज्ञानस्य कर्मनाशकत्वं गौरवादित्यादिकं योगवार्त्तिके[2] प्रपञ्चितमस्माभिरिति दिक्।

तस्माद् विवेकसाक्षात्कारादविद्याऽस्मितारागादिक्लेशनिवृत्तौ त्रिविध-दुःखात्यन्तनिवृत्तिरूपपरमपुरुषार्थः सिध्यतीत्युपपन्नम्। तथा च योगसूत्र-द्वयम्—"हेयं दुःखमनागतम्",[3] "विवेकख्यातिरविप्लवा हानोपायः" इति[4]।

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारेऽभ्यर्हितत्वादादौ विवेक-ख्यातिफलस्य परमपुरुषार्थस्य परिच्छेदः।

---

## द्वितीयः परिच्छेदः

अथाऽऽत्मानात्मविवेकज्ञानस्य किं स्वरूपं तदुच्यते—आत्मा तावत् सुखदुःखाद्यनुभवितेति सामान्यतो लोकप्रसिद्धिः; अनात्मा च प्रकृत्यादिर्जड-वर्गः; तयोरन्योऽन्यवैधर्म्येण परिणामित्वापरिणामित्वादिरूपेण दोषगुणात्म-केन हेयोपादेयतया पृथक्त्वेन ज्ञानं विवेकज्ञानम्। तथा च श्रुतिः—"स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति"[5] इत्यादि। स्मृतिश्च—

"सोऽथ प्रतिनिवृत्ताक्षो गुरुदर्पणबोधितः।
स्वतोऽन्यां विक्रियां मौढ्यादास्थितामञ्जसैक्षत॥
अथासौ प्रकृतिर्नाहमियं हि कलुषात्मिका।
शुद्धबुद्धस्वभावोऽहमिति त्यजति तां विदन्॥
एवं देहेन्द्रियादिभ्यः शुद्धत्वेनाऽऽत्मनि स्मृते।
निखिला सविकारेयं त्यक्तप्रायाऽहिचर्मवत्॥" इति।

सूत्रञ्च एवं—"तत्त्वाभ्यासान् नेति नेतीति त्यागात् विवेकसिद्धिः"[6] इति। तत्त्वज्ञानस्य लक्षणञ्च मात्स्ये कृतम्—

१. गीता ४।१९
२. योगवा० १।१; २।१३
३. योगसू० २।१६
४. योगसू० २।२६
५. बृहदा० ३।९।२६
६. सांख्यसू० ३।७५

"अव्यक्ताद्ये विशेषान्ते विकारेऽस्मिंश्च वर्णिते ।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥"[1] इति ।

यद्यप्यन्योऽन्यभेदज्ञानमेव विवेकज्ञानं तथाऽप्यात्मविशेष्यकमेव तन्मोक्षकारणं भवति, "आत्मा वा अरे द्रष्टव्यः"[2] इत्यादिश्रुतिस्मृतिभ्यः । नन्वनात्मन्यात्मबुद्धिरूपा याऽविद्या पातञ्जलादिषूक्ता[3] तस्याः कथमात्मात्मविशेष्यकविवेकज्ञाननाश्यत्वं प्रकारादिभेदाद् इति चेत्, न; तादृशाविद्याया अनात्मविशेष्यकविवेकज्ञानद्वारेणाऽऽत्मविशेष्यकविवेकज्ञाननाश्यत्वादिति ।

यच्च योगेन निर्विकल्पकमात्मज्ञानं जायते, तद् विवेकज्ञानद्वारैव मोक्षकारणं भवति न तु साक्षात्, अविद्यानिवर्त्तकत्वाभावात् । 'अहं गौरः कर्त्ता सुखी दुःखी' इत्यादिज्ञानमेव ह्यविद्या संसारानर्थहेतुतया श्रुतिस्मृतिन्यायसिद्धा, तस्याश्च निवर्त्तिका 'नाहं गौरः' इत्यादिरूपा विवेकख्यातिरेव भवति । समाने विषये ग्राह्याभावत्वप्रकारकग्राह्यभावज्ञानत्वेनैव विरोधात्; अन्यथा शुक्तिनिर्विकल्पकस्यापि 'इदं रजतम्' इति ज्ञानविरोधित्वापत्तेः । किञ्च यथोक्ताभावज्ञाने ग्राह्यज्ञानविरोधित्वस्याऽवश्यकतया निर्विकल्पकज्ञानस्य भ्रमनिवर्त्तकत्वं न पृथक् कल्प्यते गौरवात् । अपि च "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति"[4] इत्यादि श्रुत्वा विवेकोपदेशापेक्षयोत्तमोपदेशो नास्तीत्युच्यते ।

"क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥"[5]

इति गीतादिवाक्यैश्च विवेकज्ञानस्यैव मोक्षहेतुत्वम् उच्यते । अतो विवेकज्ञानमेव साक्षादविद्यानिवृत्त्या मोक्षहेतुः । योगेन केवलात्मसाक्षात्कारस्तु योग्यानुपलब्धिविधयोपाध्यादिगतधर्माभावमुपाध्यादिभेदञ्च ग्राहयति, ततोऽविद्यानिवृत्तिरिति ।

एतेन सर्वभूतेषु समताज्ञानमात्मनः सर्वात्मकत्वादिज्ञानञ्च श्रुतिस्मृत्योर्गीयमानं विवेकज्ञानस्यैव शेषभूतं सर्वदर्शनेषु मन्तव्यम्; ज्ञानान्तराणां

---

१. मत्स्य० १४५।५५ (अव्यक्तादिविशेषान्तविकारेऽस्मिन् निवर्तते । चेतनाचेतनं ज्ञात्वा ज्ञाने ज्ञानी स उच्यते) । अस्य पाठान्तराण्यपि उपलभ्यन्ते । आग्नेय० ३७९।३ क–४ ख इत्यत्र पठ्यते—अव्यक्तादौ विशेषान्ते विकारोऽस्मिन् निवर्तते । चेतना चेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥

२. बृहदा० ४।५।६; २।४।५ वाऽरे इति पाठोऽसाधुः ।

३. योगसूत्रम् २।५; द्र० वायवीयवाक्यम्—अस्वे स्वमिति च ज्ञानमशुचौ शुचिनिश्चयः······(१०२।६१-६२) ।

४. बृहदा० २।३।६

५. गीता १३।३४

साक्षादभिमानानिवर्त्तकत्वात्। ब्रह्ममीमांसायां त्वयं विशेषो यत् परमात्मविवेकशेषत्वम्; साङ्ख्यशास्त्रे तु सामान्यात्मविवेकशेषत्वमिति दिक्।

ननु यथोक्तविवेकख्यातितोऽप्यत्यन्तमविद्योच्छेदो न घटते, विवेकख्यातेरविद्याप्रतिबन्धकत्वमात्रत्वेन विवेकख्यातिनाशोत्तरं पुनरभिमानसम्भवात्, शुक्तिरजतविवेकदर्शिनोऽपि कालान्तरे शुक्तौ रजतभ्रमवदिति, मैवम्; दृष्टान्तवैषम्यात्; शुक्त्यादिषु जातेऽपि साक्षात्कारे दूरत्वादिरूपविषयदोषाणां पटलादिरूपकरणदोषाणाञ्चोत्पत्तिसम्भवेन पुनर्भ्रमो युक्तः। अनात्मन्यात्माभिमाने त्वनादिवासनैव दोषः सर्वास्तिकसम्मतः, जातमात्रस्याभिमाने दोषान्तरानुपलब्धेः। सा मिथ्याज्ञानवासना यदा विवेकख्यातिपरम्पराजन्यदृढवासनोन्मूलिता तदैव विवेकसाक्षात्कारनिष्ठोच्यते। तत्पूर्वमवश्यं वासनालेशतो मिथ्यांशस्य कस्याप्यात्मनि भावात् तस्याञ्च विवेकख्यातिनिष्ठायां जातायां न पुनरभिमानः सम्भवति वासनाख्यदोषाभावादिति तु महद् वैषम्यम्। यदि तु बुद्धिपुरुषयोरन्योऽन्यप्रतिबिम्बनादिकमविवेककारणं दोष इष्यते, तदा तु तद्दोषं बाधित्वैव विवेकसाक्षात्कार उदित इति न तस्य पुनर्भ्रमहेतुत्वं फलबलेन योगजधर्मासहकृतस्यैव तस्य दोषत्वकल्पनासम्भवादिति। विवेकख्यातिनिष्ठा च गीतादिषु लक्षिता—

> "प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव।
> न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति॥
> उदासीनवदासीनो गुणैर्यो न विचाल्यते।
> सर्वारम्भपरित्यागी गुणातीतः स उच्यते॥"[1] इति।

गुणातीतो निवृत्तगुणाभिमानः। अधिकन्तु ज्ञानिलक्षणमग्रे[2] वक्ष्यामः।

नन्वेवमपि विवेकप्रतियोगिपदार्थानामानन्त्येन प्रातिस्विकरूपैः सर्वपदार्थेभ्यो विवेकग्रहासम्भवात् कथं विवेकख्यातेर्मोक्षहेतुत्वम् इति चेत्, न; दृश्यत्वपरिणामित्वादिसामान्यरूपैर्विवेकग्रहसम्भवात्। तथा हि—द्रष्टा स्वसाक्षात्प्रकाश्येभ्यो भिन्नः प्रकाशकत्वात्, यो यस्य प्रकाशकः स तस्माद् भिन्नः, यथा घटादालोको वृत्तिप्रकाश्याच्च वृत्तिरित्यनुमानेनाऽऽदावन्तर्दृश्येभ्यो बुद्धिवृत्तितदारूढार्थेभ्यो विवेकतो बुद्धिसाक्षी सिध्यति। कर्मकर्तृविरोधश्चानुकूलस्तर्कः। अत्र आत्मनि व्यभिचारवारणाय साक्षात्पदं, वृत्तिद्वारैवाऽऽत्मनः स्वविषयत्वात्।

नन्वत्रानुमाने बुद्धिवृत्तिमात्राद् विवेकः सिध्यतु, तस्या एव साक्षादात्मदृश्यत्वाद्, न प्रकृत्यादिभ्य इति चेत्, न; वृत्तीनामज्ञातसत्त्वाभावेन

---

१. गीता १४।२२-२३

२. द्र० ७ परि०।

ह्यत्रानुमाने लाघवाद् वक्ष्यमाणतर्कगणाच्चाखिलवृत्तीनां द्रष्टा विभुकूटस्थनित्यैकज्ञानस्वरूपतयैव सिध्यति। यथा नैयायिकानां 'क्षितिः सकर्तृका कार्यत्वादि'त्यनुमाने लाघवात् कर्त्तुरेकत्वनित्यत्वादिकं तद्वत्। तत्र विभुत्वं परिच्छिन्नभिन्नत्वं, कूटस्थत्वादिकत्वञ्च परिणामिभिन्नत्वादिकमतो बुद्ध्यात्मनोर्दृग्दृश्यरूपतो विवेकग्रहे सति तदुत्तरानुमानेन परिणामित्वापरिणामित्वादिरूपैः सामान्यतोऽप्यात्मानात्मविवेकग्रहो घटत इति। अत एव पातञ्जले सत्त्वपुरुषान्यताख्यातिरेव मोक्षहेतुतया स्थले स्थले व्यासभाष्ये प्रोक्ता[1]। सत्त्वपुरुषान्यताख्यातिरूपदृग्दृश्यविवेकग्रहोत्तरं यथोक्तरीत्या प्रकृत्यादिविवेकग्रहात्। तत्र च सत्त्वशब्दे बुद्धिस्थत्वेन बुद्धिसत्त्वमुक्तमिति। एवञ्च प्रकृत्यादिपदार्थानां विशिष्यज्ञानाभावेऽपि तद्विवेकज्ञानं घटते। एतेन दृग्दृश्यविवेकादविद्यानिवृत्तिरिति प्राचां प्रवादोऽप्युपपादितः।

किञ्चाऽऽत्मा प्रकृतितत्कार्येभ्यो भिन्नोऽपरिणामित्वादित्याद्यनुमानैरपि सामान्यतो दृश्यविवेको द्रष्टरि सम्भवतीति। यत्तु आधुनिका वेदान्तिब्रुवा दृश्यत्वेनैव प्रकृत्यादीनां द्रष्टृत्वेन च प्रकृत्याद्यखिलजडेभ्य आत्मविवेकं मन्यन्ते,

> घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा।
> देहद्रष्टा तथा देहो नाहमित्यादिरूपतः॥

तन्न; "आत्मा वा अरे द्रष्टव्यः"[2] इत्यादिश्रुतिभिरात्मनोऽपि दृश्यत्वात् साक्षाद् दृश्यत्वविवक्षया च प्रकृत्यादेरसङ्ग्रहात् करणद्वारैव तद्दर्शनात्। अथैवं कल्पनीयम् आत्मनो वृत्तिव्याप्यत्वमेव दृश्यत्वं श्रुत्यादिभिर्विधीयते, न तु प्रकाश्यत्वरूपफलव्याप्यत्वं स्वयम्प्रकाशस्वरूपस्य प्रकाशापेक्षाविरहात्; अतोऽत्र दृश्यत्वं प्रकाश्यत्वम्, तच्चात्मनि नास्तीति तदपि तुच्छम्। यथा ह्यहमित्यनुभूयमानोऽप्यात्मा चैतन्याख्यफलव्याप्यो न भवतीति भवद्भिरुच्यते, तथैव बौद्धैरपीष्यते, सुखदुःखादिमत्त्वेनापि बुद्धिः स्वप्रकाशतया चैतन्यव्याप्या न भवतीति। तथा चात्मनीव बुद्धावपि दृश्यत्वासिद्ध्या दृश्यत्वेन रूपेण

---

१. तदेव (चित्तमेव) रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति (व्यासभाष्यम् १।२); यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रत्ययमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति···एतस्यामवस्थायां कैवल्यं भवति (भाष्यं ३।५५); सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः···सा विवेकख्यातिरविप्लवा हानस्योपायः···इत्येष मोक्षस्य मार्गो हानस्योपायः (भाष्यं २।२६); अत्रार्थे 'सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च, तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्' इति योगसूत्रे द्रष्टव्ये (३।४९।५०)।

२. बृहदा० ४।५।६

बुद्धिविवेकोऽत्यन्तापेक्षितोऽपि न सिध्यतीति; भाष्यादिषु[1] चान्यान्यत्र दूषणान्युक्तानीति दिक्।

ननु सम्भवत्वेवं सामान्यरूपेण विवेकग्रहः, तथाऽपि सामान्यान्येव बहूनि सन्ति परिणामित्व-संहत्यकारित्व-सुखदुःखमोहात्मकत्व-चतुर्विंशतितत्त्वत्वादीन्यतः तैस्तै रूपैर्विवेकग्रहाणां मोक्षहेतुत्वेऽननुगमदोष इति चेत्, न; अभिमानप्रतिबन्धकज्ञानत्वेनैवानुगमादिति। अथैवं सामान्यरूपेण विवेकस्यैव सर्वाभिमाननिवर्त्तकतया 'नाहं देहो नेन्द्रियाणी'त्यादिप्रत्येकरूपैर्विवेकग्रहाणां मोक्षहेतुत्वं श्रुतिस्मृत्योरुच्यमानं कथं घटेतेति चेत्, न; अवान्तरविवेकानां सामान्यविवेकप्रपञ्चमात्रत्वादिति।

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे मोक्षहेतुविवेकज्ञानस्य स्वरूपस्य परिच्छेदः।

---

## तृतीयः परिच्छेदः

अथ के ते प्रकृत्यादयो येभ्यः पुरुषो विवेचनीय इत्युच्यते—

"प्रकृतिर्बुद्ध्यहङ्कारौ तन्मात्रैकादशेन्द्रियम्।
भूतानि चेति सामान्याच्चतुर्विंशतिरेव[2] ते॥"

एतेष्वेव धर्मधर्म्यभेदेन गुणकर्मसामान्यानामन्तर्भावः। तत्र प्रकृतित्वं साक्षात् परम्परयाऽखिलविकारोपादानत्वम्—प्रकृष्टा कृतिः परिणामरूपा अस्या इति व्युत्पत्तेः। प्रकृतिः शक्तिरजा प्रधानमव्यक्तं तमो[3] मायाऽविद्येत्यादयः प्रकृतेः पर्यायाः[4]।

---

१. द्र० व्यासभाष्यं ४ पा०।

२. उक्तं च भारते-एषा तत्त्वचतुर्विंशा सर्वाकृतिषु वर्तते (शान्ति० ३०२।२९)। चतुर्विंशतितत्त्वगणना बहुत्रोपलभ्यते—स्कन्द० प्रभास० वस्त्रापथ १८।१३-१६; मान्त्रिकोपनिषदि 'चतुर्विंशतिसंख्याकमव्यक्तं व्यक्तमुच्यते' इत्युक्तम्। शारीरकोपनिषदि अपि—त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि तु। चतुर्विंशतिरव्यक्तं प्रधानम्'''इत्युक्तम्। त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि च। चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् (कूर्म० २।७।२४-२५)।

३. आह दुर्गः—सांख्यास्तु तमःशब्देन प्रधानमुपादानमुच्यमानमिच्छन्ति। ते हि पारमर्षं सूत्रमधीयते—तम एव खलु इदमग्र आसीत् तस्मिन् तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत (निरुक्त ७।३); आह स्कन्दस्वामी—तमश्चास्मिन् पक्षे प्रकृत्यव्यक्तादिपर्यायं प्रधानमुच्यते।

४. अत्रेमानि वचांसि द्रष्टव्यानि—गुणसाम्यलक्षणमव्यक्तं प्रधानं प्रकृतिर्विधानम् इत्यनर्थान्तरम् (देवलवचनम्), प्रकृतिर्गौः प्रकीर्तिता (वायु० २३।५५); अलिङ्गां प्रकृतिं त्वाहुः (शान्ति० ३०३।४७); तमोऽव्यक्तं शिवं धाम रजो योनिः सनातनः''''''ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः॥ (अश्व० ३९।२३-२४)।

"ब्राह्मीति विद्याऽविद्येति मायेति च तथा परे।
प्रकृतिश्च परा चेति वदन्ति परमर्षयः॥" इति स्मृतेः।

सा च साम्यावस्थयोपलक्षितं सत्त्वादिद्रव्यत्रयम्। कार्यसत्त्वादिवारणायोपलक्षितान्तम्। साम्यावस्था च न्यूनाधिकभावेनासंहननावस्था, अकार्यावस्थेति यावत्। महदादिकन्तु कार्य्यसत्त्वादिकं न कदाऽप्यकार्यावस्थं भवतीति तद्व्यावृत्तिः। वैषम्यावस्थायामपि प्रकृतित्वसिद्धये उपलक्षितमित्युक्तम्। अकार्यमिति तूपलक्षितान्तस्य निष्कृष्टार्थः।

सत्त्वादिगुणवती सत्त्वाद्यतिरिक्ता प्रकृतिरिति न शङ्कनीयम्; "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्"[1] इति साङ्ख्यसूत्रेण सत्त्वादीनां प्रकृतिस्वरूपत्वहेतुना प्रकृतिधर्मत्वप्रतिषेधात्, योगसूत्र-तद्भाष्याभ्यामपि[2] गुणानामेव प्रकृतित्ववचनाच्च। गुणेभ्य एव कार्योत्पत्तौ तदन्यप्रकृतिकल्पनावैयर्थ्याच्च। प्रकृतेर्गुणा इत्यादिवाक्यन्तु वनस्य वृक्षा इतिवत् बोध्यम्। "सत्त्व रजस्तम इति प्रकृतेरभवन् गुणाः"[3] इति सत्त्वादीनां प्रकृतिकार्य्यत्ववचनन्तु गुणनित्यतावाक्यविरोधेन महत्तत्त्वकारणीभूतकार्यसत्त्वादिपरमेव। महदादिसृष्टिर्हि गुणवैषम्याच् श्रूयते। तच्च वैषम्यं सजातीयसवलनेन गुणान्तरव्यावृत्तप्रकाशादिफलोपहितः सत्त्वादिव्वहारयोग्यः परिणाम इति। एतेनाष्टाविंशतितत्त्वपक्षोऽप्युपपादितो मन्तव्यः।

वैषम्य एव सत्त्वादिव्यवहारश्च श्रुतौ दृश्यते; यथा "तम एवेदमग्र आस तत्परेणेरितं विषमत्वं प्रयात्येतद् वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद् वै सत्त्वस्य रूपम्"[4] इति। सत्त्वादित्रयञ्च सुखप्रकाशलाघवप्रसादादिगुणवत्तया संयोगविभागादिमत्तयाऽनाश्रितत्वोपादानत्वादिना च द्रव्यत्वेऽपि[5] पुरुषोपकरणत्वात् पुरुषबन्धकत्वाच्च गुणशब्देनोच्यते, इन्द्रियादिवत्। गुणानां सुखदुःखमोहात्मकत्वप्रवादस्तु धर्मधर्म्यभेदात्, मनसः सङ्कल्पात्मकत्वत्। तत्र सत्त्वं सुखप्रसादप्रकाशाद्यनेकधर्मकं प्राधान्यतस्तु सुखात्मकमुच्यते। एवं रजोऽपि दुःखकालुष्यप्रवृत्त्याद्यनेकधर्मकं प्राधान्यतस्तु दुःखात्मकमुच्यते, तथा तमोऽपि मोहावरणस्तम्भनाद्यनेकधर्मकं प्राधान्यतस्तु मोहात्मकमुच्यते। त एव धर्मास्तेषां लक्षणानि भवन्ति।

सत्त्वादिसंज्ञा चान्वर्था, सतो भावः सत्त्वमुत्तमत्वमिति व्युत्पत्त्या हि धर्मप्राधान्येनोत्तमं पुरुषोपकरणं सत्त्वशब्दार्थः। मध्यमञ्च रजःशब्दार्थो राग-

---

१. सांख्यसू० ६।३९

२. २।१८

३. भागवतं ११।२४।५

४. मैत्रायण्यारण्यकं ५।२

५. द्र० व्यासभाष्यभास्वतीटीका—एते सत्त्वादयो गुणाः पुरुषस्य बन्धनरज्जव इत्यर्थः। सत्त्वादीनि द्रव्याणि, न तानि द्रव्याश्रया गुणाः, तेभ्यो व्यतिरिक्तस्य गुणिनोऽभावादिति वेदितव्यम् (२।१८)।

योगात्। अधमञ्च तमःशब्दार्थः अधर्मावरणयोगात्। तानि च सत्त्वादीनि प्रत्येकमसङ्ख्यव्यक्तयः, "लघुत्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यञ्च गुणानाम्" इति साङ्ख्यसूत्रात्[1]। अत्र हि सूत्रे लघुत्वादिना बहूनां सत्त्वानां साधर्म्यं तेनैव रजस्तमोभ्यां वैधर्म्यम्। एवं चलत्वादिना गुरुत्वादिना च बहूनां रजसां बहूनाञ्च तमसां तदुभयमुक्तमिति। किञ्च यदि सत्त्वादित्रयमेकैकव्यक्तिरेव स्यात्, तत् त्रयं विभ्वेव वक्तव्यम्, एकदाऽनेकब्रह्माण्डादिसृष्टिश्रवणात्; तथा च कार्याणामनन्तवैचित्र्यं न घटते। न च संयोगवैचित्र्यात् वैचित्र्यं स्यादिति वाच्यम्; विभूनां त्रयाणां गुणानां स्वतः संयोगवैचित्र्यासम्भवात्, द्रव्यान्तरस्य चावच्छेदकीभूतस्याभावादिति। तस्मात् सत्त्वादीन्यसङ्ख्यव्यक्तिकान्येव द्रव्याणि। तेषु त्रित्ववचनन्तु सत्त्वत्वादिविभाजकोपाधित्रयेण वैशेषिकाणां नवद्रव्यवचनवदिति सिद्धम्।

तानि च सत्त्वादीनि यथायोग्यमणुविभुपरिमाणकानि, अन्यथा रजसश्चलस्वभावत्ववचनविरोधात्, आकाशकारणत्वस्य च विभुत्वौचित्यात्, सर्वेषां कारणद्रव्याणां विभुत्वे कार्याणां परिच्छिन्नत्वानुपपत्तेश्च। नन्वेवं वैशेषिकोक्तान्येव पार्थिवाण्वादीनि प्रकृतिरित्यायातमिति चेत्, न; गन्धादिगुणशून्यत्वेन कारणद्रव्येषु पृथिवीत्वाद्यभावतोऽस्माकं विशेषात्। तदुक्तं विष्णुपुराणादिषु[2]—

"अव्यक्तं कारणं यत् तत् प्रधानमृषिसत्तमैः।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम्॥ १९॥
शब्दस्पर्शविहीनं तद् रूपादिभिरसंयुतम्॥२०॥
त्रिगुणं तज् जगद्योनिरनादिप्रभवाप्ययम्॥" २१॥ इत्यादिना।

वैशेषिकाणां कारणद्रव्येषु गन्धाद्यनुमानन्तु भाष्येऽस्माभिर्निराकृतम्[3]। अथैवमपि प्रकृतेरणुविभुसाधारणसत्त्वाद्यनेकव्यक्तिरूपत्वेऽपरिच्छिन्नत्वैकत्वाक्रियत्वसिद्धान्तक्षतिरिति, मैवम्; कारणद्रव्यत्वरूपप्रकृतित्वेनैवापरिच्छिन्नत्वचनात्, गन्धत्वेन गन्धानां पृथिवीव्यापकतावत्, आकाशादिप्रकृतीनां विभुत्वेनैव प्रकृतिविभुत्वसिद्धान्तोपपत्तेश्च। तथा पुरुषभेदेन सर्गभेदेन च भेदाभावस्यैवैकशब्दार्थत्वात्, "अजामेकाम्" इति[4] श्रुतितस्तथाऽवगमात्। अथाध्यवसायाभिमानादिक्रियाराहित्यस्यैवाक्रियशब्दार्थत्वात्,

१. सांख्यसू० १।१२८

२. विष्णु० १।२।१९–२१ (असंहतमिति मुद्रितपुराणपाठः)। सदसदात्मकं कार्यकारणशक्तियुतम् इति श्रीधरः। वायु० ४।१८–२१ इत्यत्रापि इमे श्लोकाः।

३. सांख्यप्रवचनभाष्यम् १।६२, १।६५, अन्यत्र च।

४. श्वेताश्व० ४।५

अन्यथा श्रुतिस्मृतिसूक्तस्य प्रकृतिक्षोभस्यानुपपत्तेरिति[1]। प्रकृतिगताश्चापरे विशेषा भाष्ये[2] द्रष्टव्याः। प्रकृत्यनुमानं चेदम्—सुखदुःखमोहात्मकं महदादि-कार्यं सुखदुःखमोहात्मकद्रव्यकार्यं सुखदुःखमोहात्मकत्वात् वस्त्रादिकार्य-शय्यादिवदिति। श्रुतिस्मृती चात्रानुग्राहकस्तर्कः।

एवं सामान्यतोऽनुमितायाः प्रकृतेर्विशेषाः शास्त्राद् योगाच्चाव-गन्तव्याः, अनुमानस्य सामान्यमात्रविषयकत्वात्[3]। नन्वन्तरेव सुखादिकमुप-लभ्यते, बाह्यवस्तुषु सुखादौ किं प्रमाणं येन दृष्टान्तता स्यात्? इति। उच्यते—अन्तःकरणस्य सुखादिहेतुतया विषयेषु सुखादिकं सिध्यति; न च रूपादि-गतोत्तमत्वादिकमेव सुखाद्युत्पादने नियामकम्, उत्तमत्वादेर्जातिरूपत्वे नीलत्व-पीतत्वादिना जातिसाङ्कर्यापत्तेः, कालादिभेदैरेकस्या एव रूपव्यक्तेः सुखदुःखोत्पादकत्वाच्च। अतः सुखादिमत्त्वमेवोत्तमत्वादिकम्। किञ्च घट-रूपमिति प्रत्ययवत् स्त्रीसुखं चन्दनसुखमित्यादिप्रत्ययादपि विषये सुखाद्यु-चितम्। अधिकन्तु भाष्ये[4] द्रष्टव्यम्। तदेवं प्रकृतिर्निरूपिता।

महत्तत्त्वं निरूप्यते—प्रकृतेः सकाशाद् बुद्ध्याख्यं महत्तत्त्वं जायते; तस्य धर्मादिरूपप्रकृष्टगुणयोगात् महत्संज्ञा, तदेव च लक्षणम्। महान् बुद्धिः प्रज्ञेत्यादयश्च तस्य पर्यायाः[5]; तथा चोक्तमनुगीतायाम्[6]—

"महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्यवान्।
बुद्धिः प्रज्ञोपलब्धिश्च तथा ब्रह्मा धृतिः स्मृतिः॥ २॥
पर्यायवाचकैरेतैर्महानात्मा निगद्यते॥ ३॥
सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः।
सर्वतः श्रुतिमाँल्लोके सर्वं व्याप्य स तिष्ठति॥ ४॥
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः॥ ५॥
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः॥ ७॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत॥ ८॥
विष्णुरेवाऽऽदिसर्गेषु स्वयम्भूर्भवति प्रभुः॥" ११। इति।

अत्र सत्त्वाद्यंशत्रयेण महतो देवतात्रयोपाधित्वात् तदविवेकेन ब्रह्म-विष्णुशिवत्ववचनम्। तदुक्तं विष्णौ—

---

१. प्रकृतिक्षोभपराणीमानि वचांसि द्र०—क्षोभयामास योगेन परेण परमेश्वरः (वायु० ५।११); प्रधानात् क्षोभ्यमाणात् तु रजो वै समवर्तत (वायु० ५।१२)।

२. प्रवचनभाष्यम् १।६१, १।६५, १।७५-७६, १।२५—१३५ अन्यत्र च।

३. द्र० सामान्यमात्रे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम्—व्यासभा० १।२५।

४. द्र० भा० १।२७ इत्यादि।

५. अहिर्बुध्न्यसंहितायां महतो नामान्युक्तानि—विद्या गौ युवती ब्राह्मी वपुर्बुद्धि-र्मतिर्मधुः॥८॥ अख्यातिरीश्वरः प्राज्ञेत्येते तद्वाचका मुने।९ (अ० ७)।

६. अश्व० ४०।२—११; अत्रार्थे अनुशा० १४।४१६—४२० अपि० द्र०।

"सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्"[१] इति ।

मात्स्ये[२] च—

"सविकारात् प्रधानात्तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥३।१७
गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे ।
एका मूर्त्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥३।१६॥ इति ।

अणिमेत्यादिभावनिर्देशो धर्मधर्म्यभेदात् । ब्रह्मशङ्करापेक्षयाऽप्यादौ विष्णुरूपेणैव महानाविर्भवतीति "विष्णुरेव" इत्यर्द्धेनोक्तम् (अश्व० ४०।११) ।

इदमेव महत्तत्त्वमंशतो रजस्तमःसम्भेदेन परिणतं सत् व्यष्टिजीवानामुपाधिधर्मादियुक्तं क्षुद्रमपि भवति—"महदुपरागात् विपरीतम्" इति साङ्ख्यसूत्रात्[३] । महत्तत्त्वस्य प्राधान्येनासाधारण्येन चाध्यवसायो वृत्तिः, महदहङ्कारमनस्त्रितयात्मकस्यान्तःकरणस्य महत्तत्त्वं बीजावस्थेति । अत्र प्रकृतेर्महान् महतोऽहङ्कार इत्यादिसृष्टिक्रमे शास्त्रमेव प्रमाणम्, अनुमानेन सामान्यतः कार्याणां सकारणकत्वमात्रसिद्धेः, न तु सृष्टौ भूतादिक्रमो वाऽन्तःकरणादिक्रमो वेत्येकतरावधारकमनुमानं सम्भवति, स्पष्टलिङ्गाभावात् । श्रुतिस्मृत्यनुगृहीतं यथाकथञ्चिल्लिङ्गन्तु महदादिक्रमेऽस्तीति भाष्ये[४]ऽस्माभिः प्रदर्शितम् । महत्तत्त्वं निरूपितम्[५] ।

अहङ्कारो निरूप्यते—महत्तत्त्वादहङ्कार उत्पद्यते, अङ्कुरात् शाखिवत् । तस्य चाभिमानवृत्तकत्वादहङ्कारसंज्ञा, कुम्भकारसंज्ञावत्; तदेव लक्षणम् । तस्य च पर्यायाः कौर्मे प्रोक्ताः,—

"अहङ्कारोऽभिमानश्च कर्त्ता मन्ता च संस्मृतः ।
आत्मा देही च जीवश्च यतः सर्वाः प्रवृत्तयः ॥" इति[६] ।

स चाहङ्कारस्त्रिविधतया त्रिविधकार्यहेतुः । तदुक्तं कौर्मे—

"वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहङ्कारो महतः सम्बभूव ह ॥१८॥
तैजसादिन्द्रियाणि स्युर्देवा वैकारिकाद् दश ॥२२॥

---

१. विष्णु० १।२।३४

२. महत्तत्त्वं प्रजायते, क्षोभमाणेभ्यः इति मुद्रितपुराणपाठः ।

३. सांख्यसू० २।१५

४. द्र० भा० २।१०

५. महद्विषये इदं विज्ञेयं यदयमणुमात्र आत्मा । अणुत्वं न परिमाणापकर्षविशेषं लक्षयति, प्रत्युत सूक्ष्मत्वम्, अतएव 'सूक्ष्माणामप्यहं जीव' इत्युक्तं भागवते । जीवः महतत्त्वोपाधिमानात्मा ।

६. कूर्म० १।४।१९ (आत्मा च मत्परो जीवः गतः सर्वाः प्रवृत्तय इति मुद्रितपुराणपाठः । पुरुषेत्यत्र पुष्कल-प्रबल-पुद्गलेति पाठान्तराणि दृश्यन्ते) ।

एकादशं मनश्चात्र स्वगुणेनोभयात्मकम् ॥
भूततन्मात्रसर्गस्तु भूतादेरभवन् प्रजाः ॥२३॥ इति[१]।

वैकारिकः सात्त्विकः। तैजसो राजसः। स्वगुणेनेन्द्रियवृत्तिषु साहाय्यरूपेणोत्कर्षेण। उभयात्मकं ज्ञानकर्मोभयेन्द्रियात्मकम्; "अन्यत्रमना अभूवं नाश्रौषम्" इत्यादिश्रुत्या मनसो ज्ञानकर्मोभयेन्द्रियसहकारित्वसिद्धेरिति। एकादशेन्द्रियदेवाश्च[२]—दिग्वातार्कप्रचेतोऽश्वि-वह्नीन्द्रोपेन्द्रमित्रकाम[३]-चन्द्राश्च। इति अहङ्कारो निरूपितः।

इन्द्रियादीनि निरूप्यन्ते—अहङ्कारादादौ मन उत्पद्यते।

"शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः।
रूपरागात् तथा चक्षुर्घ्राणं गन्धजिघृक्षया[४] ॥"

इत्यादिना मोक्षधर्मादाविन्द्रियादीनां मनोवृत्तिरागादिकार्यत्वश्रवणात्। ततश्चाहङ्कारात् सङ्कल्पपूर्वकं दशेन्द्रियाणि पञ्चतन्मात्राणि चोत्पद्यन्ते। इन्द्रिय-तन्मात्रयोश्च कार्यकारणभावस्याभावात् क्रमनियमो नास्ति। तत्रेन्द्रियेषु नास्त्यवान्तरकार्यकारणभावः, प्रमाणाभावात्; तन्मात्रेषु त्वस्ति; स यथा—शब्दतन्मात्राद् वक्ष्यमाणक्रमेण स्पर्शतन्मात्रं शब्दस्पर्शोभयगुणकम्, एवं क्रमेणैकैकगुणवृद्ध्या परतन्मात्रत्रयं पूर्वपूर्वतन्मात्रेभ्य उत्पद्यते, पातञ्जलभाष्ये[५] तन्मात्रेषु क्रमेणैकैकगुणवृद्धिवचनात्। ततश्च पञ्चतन्मात्रेभ्यः पञ्चभूतानि जायन्ते। तत्राहङ्कारात् पञ्चतन्मात्राणां तद्द्वारा भूतानाञ्चोत्पत्तौ क्रमः कूर्मविष्ण्वादिपुराणेषूक्तः; यथा कूर्मे—

"भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह।
आकाशं शुषिरं तस्मादुत्पन्नं शब्दलक्षणम् ॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह।
वायुरुत्पद्यते तस्मात् तस्य स्पर्शो गुणो मतः ॥"[६]

---

१. कूर्म० १।४।१८-२३; भूततन्मात्रसर्गोऽयं भूतादेरभवद् द्विजा इति मुद्रितपुराणपाठः।

२. द्र० सुबालोप० ५ ख०; अश्व० ४२ अ०।

३. जीवानन्दसंस्करणे 'दिग्वातार्क···मित्रकाः' इति श्लोकैकचरणरूपेण पठितम्। पाठोऽयमसमीचीनः।

४. शान्ति० २१३।१६

५. व्यासभाष्यम् २।१९—षडविशेषाः तद् यथा शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं च इत्येकद्वित्रिचतुष्पञ्चलक्षणाः···।

६. कूर्म० १।४। २४—२५ (आकाशो जायते तस्मात्तस्य शब्दो गुणो मतः; तस्य स्पर्शं गुणं विदुः इति पाठोऽपि पुराणे उपलभ्यते)।

इत्यादिक्रमेणेति।

नन्वेवमाकाशादिभूतचतुष्टयस्यापि तत्त्वान्तरारम्भकत्वेन प्रकृतित्वापत्त्या केवलविकृतित्वसिद्धान्तक्षतिरिति चेन्न; आकाशादीनां स्पर्शादितन्मात्रेष्वहङ्कारोपष्टम्भमात्रेण कारणत्वस्य पुराणेषूक्तत्वादिति[1]। तदेवं त्रयोविंशतितत्त्वानामुत्पत्तिरुक्ता।

तत्र पञ्चभूतानि वर्जयित्वा अहङ्कारञ्च बुद्धौ प्रवेश्य सप्तदशकं लिङ्गशरीरसंज्ञं भवति, वह्नेरिन्धनवदात्मनोऽभिव्यक्तिस्थानत्वात्। तच्च सर्वपुरुषाणां सर्गादावुत्पद्य प्राकृतप्रलयपर्य्यन्तं तिष्ठति, तेनैव चेहलोकपरलोकयोः संसरणं जीवानां भवति। प्राणश्च बुद्धेरेव वृत्तिभेदः[2] इत्यतो न लिङ्गशरीरात् पृथक् निर्दिश्यते। तस्य लिङ्गशरीरस्य सूक्ष्माणि पञ्च भूतान्याश्रयश्चित्रादिवत्, आश्रयं विना परमसूक्ष्मस्य लोकान्तरगमनासम्भवात्। इदञ्च लिङ्गशरीरमादौ स्वयम्भुव उपाधिभूतमेकमेव जायते, तस्यैव विराडाख्यवक्ष्यमाणस्थूलशरीरवत्। ततश्च व्यष्टिजीवानामुपाधिभूतानि व्यष्टिलिङ्गशरीराणि तदंशभूतानि ततो विभज्यन्ते, पितुर्लिङ्गशरीरात् पुत्रलिङ्गशरीरवत्। तदुक्तं सूत्रकारेण—"व्यक्तिभेदः कर्मविशेषात्"[3] इति। मनुनाऽप्युक्तम्—

"तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्।
सन्निवेश्याऽऽत्ममात्रासु सर्वभूतानि निर्ममे॥" इति[4]

षण्णामिति षडिन्द्रियं समस्तलिङ्गशरीरोपलक्षकम्; तथा च स्वयम्भूः स्वलिङ्गशरीरावयवान् सूक्ष्मान् अल्पान् आत्ममात्रासु स्वांशचेतनेषु संयोज्य सर्वप्राणिनः ससर्जेत्यर्थः।

लिङ्गशरीरं निरूपितम्। स्थूलशरीरोत्पत्तिरुच्यते—दशगुणितमहत्तत्त्वमध्येऽहङ्कारः, अहङ्कारस्यापि दशगुणितस्य मध्ये व्योम, व्योम्नोऽपि दशगु-

---

१. भूत-तन्मात्रमयं ग्राह्यं जगदहंकारप्रसूतमिति सांख्यमतं भारते दर्शितम्—त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् इति(शान्ति० २१२।१९)। अहंकारश्च सृजति महाभूतानि पञ्च वै। पृथिवीवायुराकाशमापोज्योतिश्च पञ्चमम् इत्यपि पठ्यते (शान्ति०, कुं० संस्क०)। अत्रार्थे 'अहंकारेणाहरतो गुणान्…' श्लोको द्र० (अश्व० ४१।५)।

२. यथोक्तं लक्ष्मीतन्त्रे—महांस्तामस आख्यातो विकारः पूर्वकैर्बुधैः॥ प्राणो हिरण्यगर्भश्च बुद्धिश्चेति त्रिधा भिदा। ५।३१-३२। अहिर्बुध्न्यसंहितायामपि—महान्नाम महत्तत्त्वमव्यक्तादुदितं मुने॥ कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते। ७।८-९।

३. सांख्यसू० ३।१०

४. मनु० १।१६; अत्राह मेधातिथिः—तत्र षट्संख्यया वक्ष्यमाणानि पञ्च तन्मात्राणि अतिक्रान्तश्चाहंकारः प्रतिनिर्दिश्यते।

णितस्य मध्ये वायुः, वायोरपि दशगुणितस्य मध्ये तेजः, तेजसोऽपि दशगुणितस्य मध्ये जलम्, जलस्यापि दशगुणितस्य[1] मध्ये पृथिवी समुत्पद्यते; सैव स्थूलशरीरस्य बीजम् ; तदेव च पृथिवीरूपं बीजमण्डरूपेण परिणमते; तस्यापि दशगुणितस्याण्डरूपस्य पृथिव्यावरणस्य मध्ये चतुर्दशभुवनात्मकं स्वयम्भुवः स्थूलशरीरं तत्सङ्कल्पादेवोत्पद्यते, तेनैव शरीरेण स्वयम्भूर्नारायण इत्युच्यते। तदुक्तं मनुना स्वयम्भुवं प्रकृत्य—

> "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
> अप एव ससर्जाऽऽदौ तासु बीजमवासृजत्॥ ८।
> तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
> तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥ ९।
> स वै शरीरी प्रथमः स वै पुरुष उच्यते।
> आदिकर्त्ता स भूतानां ब्रह्माऽग्रे समवर्त्तत॥[2]
> आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
> ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥"[3] १०।

इत्यादिनेति[4]। तत एव चाऽऽदिपुरुषाद् व्यष्टिपुरुषाणां विभागादन्ते च तत्रैव लयात् स एव चैक आत्मेति श्रुतिस्मृत्योर्व्यह्रियते। अतो न व्यवहारपरतया नारायण एव सर्वभूतानामात्मेति श्रुतिस्मृतिविरोध इति। ततश्च स नारायणो विराट्शरीरी स्वनाभिकमलकर्णिकास्थानीयस्य सुमेरोरुपरि चतुर्मुखाख्यस्वयम्भुवं सृष्ट्वा तद्द्वारा अन्यानपि व्यष्टिशरीरिणः स्थावरान्तान् ससर्ज। तथा च स्मर्यते—

> "तच्छरीरसमुत्पन्नैः कार्यैस्तैः कारणैः सह।
> क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः॥"[5] इति।

---

१. दशगुणितपरिमाण-अण्ड-अण्डावरणविषये विष्णुपुराणे उक्तम्—एतदण्डकटाहेन तिर्यक्चोर्ध्वमधस्तथा। कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥२२। दशोत्तरेण पयसा मैत्रेयाण्डं च तद् वृतम्। सर्वोऽम्बुपरिधानोऽसौ वह्निना वेष्टितो बहिः ॥२३। वह्निश्च वायुना वायुर्मैत्रेय नभसावृतः। भूतादिना नभः सोऽपि महता परिवेष्टितः ॥२४। दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै। महान्तं च समावृत्य प्रधानं समवस्थितम् ॥२।७।२५॥

२. स वै…इति श्लोको मनौ नोपलभ्यते, सौरादिषु पुराणेषु तूपलभ्यते इति ज्ञातव्यम्।

३. आप इत्यादिकः श्लोको सपाठभेदो बहुत्रोपलभ्यते—लिङ्ग० १।७०।११९।१२०; वायु० ६।५ अग्नि० १०।८; हरिवंश १।१।३६; वनपर्व २७२।४१

४. मनु० १।८-१०

५. पद्म० ५।३।१५६

यत्तु शेषशायिनो नारायणस्य नाभिकमलश्रोत्रचक्षुरादिभ्यश्चतुर्मुखस्याऽऽविर्भावः श्रूयते, तद् दैनन्दिनसर्गेष्वेव कल्पभेदेन मन्तव्यम्[1]। दैनन्दिनप्रलयेष्वेव हि नारायणशरीरे प्रविश्यैकीभूय सुप्तानां चतुर्मुखादिक्रमेणाविर्भावः शेषशायिनः सकाशाद् घटते, न त्वादिसर्गेषु ; दैनन्दिनप्रलय एव लीलाविग्रहेण शयनादिति ।

तदेवं सङ्क्षेपतश्चतुर्विंशतितत्त्वानि तेषां सृष्टिरूपं प्रयोजनञ्चोक्तम् । तत्र यद् यस्मात् जायते तस्य तदापूरणेनैव स्थितिः, ततस्तस्य संहारोऽपि तत्रैव भवति—

"यद् यस्मात् जायते तत्त्वं तत् तत्र प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ।।"[2]

इति भारतादिभ्य इति । एते च सृष्टिस्थितिसंहाररूपाः स्थूला एव परिणामाश्चतुर्विंशतितत्त्वानां कूटस्थपुरुषविवेकाय प्रदर्शिताः । सूक्ष्मा अप्यन्ये प्रतिक्षणपरिणामा एतेषां स्मर्यन्ते । तथा च—

"नित्यदा ह्यङ्ग भूतानि भवन्ति न भवन्ति च ।
कालेनालक्ष्यवेगेन सूक्ष्मत्वात् तन्न दृश्यते ।।"[3] इति ।

अतश्च सर्वं जडवस्तु परमार्थतः सर्वदैवासदुच्यते; ततश्च तस्मात् विरज्याऽऽत्मैव परमार्थसत्यो दुःखभीरुभिर्द्रष्टव्यः । तदुक्तमनुगीतायाम्—

"अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ।।२०।।

महाभूतप्रशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ।।२१।।

आजीवः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एतज्ज्ञात्वा च तत्त्वेन ज्ञानेन परमासिना ।।२२।।

---

१. कल्पभेदेन सृष्ट्यवान्तरभेदकथनं पूर्वाचार्यसंमतम् । यथाह नीवकण्ठः—कल्पभेदेनोभयमप्युपपद्यते । यथा पुराणेषु क्वचिच् शिवात् ब्रह्मविष्णवोरुत्पत्तिः क्वचित् तु ब्रह्मणः सकाशात् शिवविष्णवोः, क्वचिद् गणेशादेतेषां त्रयाणां, तथा सूर्यादेतेषां त्रयाणां कल्पभेदेनोत्पत्तिरभिहिता (देवीभाग० नवमस्कन्धटीकारम्भे) ।

२. शान्ति० ३०६।३१ पठ्यते—यस्माद् यदभिजायेत तत् तत्रैव प्रलीयते । लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ॥

३. भाग० ११।२२।४२; वाक्यमिदं विज्ञानेन ब्रह्मसूत्रभाष्येऽप्युद्धृतम् । अत्राङ्गेति संबोधनपदम् , तथैव सर्वैर्भागवतव्याख्याकृद्भिर्व्याख्यानात् ।

छित्त्वा चाक्षरतां प्राप्य जहाति मृत्युजन्मनी[१] ॥२३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे विवेकप्रतियोगिनां प्रकृत्यादीनां स्वरूपपरिच्छेदः ।

इति साङ्ख्यसारस्य पूर्वभागः ।

---

१. अनुगीता (=अश्वमेध० ३५।२०–२३); ब्रह्मबीज इति क्वचित्(२२ श्लो०) पठ्यते ।

## उत्तरभागः

### प्रथमः परिच्छेदः

अथ शिष्यैः सुखेनैव ग्रहीतुं पद्यमालया ।
विवेकस्यानुयोग्यात्मा पुरुषाख्यो[१] निरूप्यते ॥ १ ॥
तत्र सामान्यतः सिद्धो जानेऽह[२]मिति धीबलात् ।
द्रष्टाऽतो नित्यविभ्वादिधर्मै रेव स साध्यते ॥ २ ॥
भोक्ता[३] नित्यस्तदर्थत्वात् तत्कर्मोत्पादितत्त्वतः ।
महदादिविकाराणां सर्वेषामविशेषतः ॥ ३ ॥
अपि चादृष्टसंस्काराधारत्वाद् बीजरूपतः ।
धीरनादिरतोऽस्याश्च सिद्धा भोक्तुरनादिता ॥ ४ ॥
स्वस्वामिभावानादित्व[४]मृते भोक्त्रव्यवस्थितेः ।
स्वभुक्तवृत्तिसंस्कार-वत्त्वं स्वत्वन्तु बुद्धिषु ॥ ५ ॥
स्वाम्यं स्वनिष्ठसंस्कार-हेतुवृत्तेश्च भोक्तरि ।
अतश्च घटते स्वत्व-नाशे कैवल्यमात्मनः ॥ ६ ॥
भोक्तुश्चानादिभावस्य विनाशे हेत्वसम्भवात् ।
न नाशो भोक्तुरस्तीति भोक्ता नित्यो हि सिध्यति ॥ ७ ॥
जन्यो ज्ञानप्रकाशोऽस्य नित्यत्वे तु न युज्यते ।
न ह्यप्रकाशे कुत्रापि प्रकाशोत्पत्तिरीक्ष्यते ॥ ८ ॥

---

१. तुलनीयं भागवतीयं वाक्यम्-पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः······ (११।७।२१) ।

२. तुलनीयमुद्योगपर्ववाक्यम्—आत्मनाऽत्मानमन्विच्छेत् इति । अत्राह देवबोधः—आत्मना अहमिति प्रतीतिलक्षणेन चिद्रूपेण आत्मानं तमेवान्विच्छेत्(३४।६२) ।

३. पुरुषः खलु अपरिणामिनी भोक्तृशक्तिः । वाक्यपदीयटीकायां हरिराह—अन्ये तु संक्रान्तविषयरूपाया बुद्धेरात्मनि समवायाद् बुद्धिरूपनिवेशेन तद्रूपतामिवापन्ने बोधात्मके पुरुषे पुरुषार्थस्य प्रसिद्धिं मन्यन्ते । प्रकाशस्वभावया बुद्ध्या चितिस्वरूपस्यार्थस्य प्रतिबिम्बकयोगेन उपग्रहे सम्भवति ग्राह्यविषयरूपविपर्यासायाम् उपगृहीतपुरुषरूपायां बुद्धौ भोग्यभोक्तृशक्त्योः अत्यन्तविविक्तयोः अत्यन्तासंकीर्णयोः अविभागप्राप्ताविव सत्यां विभागः प्रकल्पते (२।३१) ।

४. द्र० सांख्यसू० ६।६७

कार्य्ये प्रकाशाख्यगुणेऽवयवानां हि तद्गुणः ।
कारणं तेन नानित्यः प्रकाशो नित्यवस्तुनि ।।९।।

प्रकाशाश्रयसंयोगात् प्रकाशभ्रम इन्धने ।
आदर्शे चावृतेर्भङ्गात् प्रकाशोत्पत्तिविभ्रमः ।।१०।।

तस्मान्नित्यात्मनो[1] ज्ञानं नित्यं वाच्यं तथा सति ।
लाघवाज्ज्ञानमेवात्मा[2] निराधारः प्रकल्प्यते ।।११।।

अनाश्रिततया द्रव्यं संयोगादेश्च तन्मतम् ।
अतो जानेऽहमित्यादि-बुद्धिरप्युपपद्यते ।।१२।।

पिण्डेऽहंधी र्हि मूढानां ध्रुवैवानादिदोषतः ।
संयोगात् तत्र पिण्डे तु ज्ञानवत्त्वमतिः प्रमा ।।१३।।

सन्तु वाऽधेयताल्पत्व-जन्मनाशादिबुद्धयः ।
श्रोत्रस्य नभसो वार्थ-ज्ञानस्य ज्ञानमात्रके ।।१४।।

तस्माल्लाघवतर्केण बाधकाभावतस्तथा ।
श्रुत्यादिभिश्च नित्यात्मा चिद्रूपेणैव[3] सिध्यति ।।१५।।

तज्ज्ञानं विभु नित्यवात् देहव्यापितयाऽपि च ।
मध्यत्वे नाशिता हि स्यादणुत्वे वाऽल्पदेशता ।।१६।।

विभुत्वेऽपि स्वाधीवृत्तेरेव साक्षान्निरीक्षणात् ।[4]
न सर्वत्र सदा सर्वभानं ज्ञाने प्रसज्यते ।।१७।।

अर्थभानं चितावर्थ-प्रतिबिम्बो मतो बुधैः ।
वृत्तेरेव चितौ साक्षात् प्रतिबिम्बनयोग्यता ।।१८।।

१. सदाज्ञाताश्चित्तवृत्तयः तत्प्रभोरपरिणामित्वादिति न्यायेन ज्ञः पुरुषो नित्य इति सिध्यति ।

२. अतएव दृशिमात्रः पुरुष इत्युच्यते । उक्तं च विवरणकारेण—दृशिर्दर्शनमुपलब्धिस्तावन्मात्रो दृशिमात्रः (२।२०) ।

३. आत्मनः चिद्रूपता केनोपनिषद्भाष्ये शंकराचार्येणेत्थमुक्ता—आत्मा हि चिच्छक्तिस्वरूपमात्रः सर्वप्रत्ययदर्शी प्रत्ययैरेव प्रत्ययेषु अविशिष्टतया लक्ष्यते (२।४) ।

४. स्वधीवृत्तीक्षणादेव पुरुषः प्रत्यगात्मेत्युच्यते—प्रत्यक् स्वबुद्धिं चेतयते इति प्रत्यक्चेतन आत्मेत्याह विवरणकारः (१।२९) । बुद्धिबोधात्मा पुरुष इति व्यासभाष्यम् (१।४) । आह शंकराचार्यः—अन्तःस्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं तेन सवृत्तिकं मनो येन ब्रह्मणा मतं विषयीकृतं व्याप्तमाहुः (केनभाष्यं १।५) ।

अतोऽसङ्गेऽपि कूटस्थ-चैतन्ये विभुनि ध्रुवे ।
वृत्तिद्वारकमेवान्य-भानं फलबलान्मतम्[1] ॥१९॥
अन्वयव्यतिरेकाभ्यां वृत्तिजन्यतयाऽखिलः ।
वृत्त्यैकाधिकरण्येन कामादिर्धीषु नात्मसु ॥२०॥
अतोऽन्तःस्थविकाराणां स्वस्वबुद्धिष्ववस्थितेः ।
कूटस्थ एव सर्वोऽपि चिदाकाशगणः समः ॥२१॥
नित्यशुद्धो नित्यबुद्धो नित्यमुक्तो निरञ्जनः ।
स्वप्रकाशो निराधारः प्रदीपः सर्ववस्तुषु ॥२२॥
नन्वेवमेकतैवास्तु लाघवादात्मनां खवत् ।
धीष्वेव सुखदुःखादि-वैधर्म्यादिति चेन्न तत् ॥२३॥
भोगाभोगादिवैधर्म्येणैकरूपेऽपि चिद्गणे ।
श्रुतिस्मृतिभ्यामुक्तेन भेदसिद्धेः परस्परम् ॥२४॥
सुखादिप्रतिबिम्बात्मा भोगोऽप्यस्य न वस्तुतः ।
तथाऽप्यस्य चितौ भावाभावौ स्यातां हि भेदकौ ॥२५॥
औपाधिकौ यथा श्याम-रागौ स्फटिकभेदकौ ।
खदृष्टान्तश्च विषमो वैधर्म्यासिद्धितोऽम्बरे ॥२६॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे पुरुषस्वरूपपरिच्छेदः ।

---

## द्वितीयः परिच्छेदः

अथात्मानात्मवैधर्म्यं गुणदोषात्मके तयोः ।
वक्ष्ये विस्तरतो[2] येन विवेको[3]ऽतिस्फुटो भवेत् ॥१॥

---

१. उक्तं च युक्तिदीपिकायाम्—तथा च वार्षगणाः पठन्ति—बुद्धिवृत्त्याविष्टो हि प्रत्ययत्वेन अनुवर्तमानामनुयाति यथा पुरुष इति । तथा च—अर्थाकार इवाभाति यथा बुद्धिस्तथा पुमान् । आभासमानो बुद्ध्याऽतो बोद्धा मणिवदुच्यते ॥ यथा यथा मनोवृत्तिः पुरुषोऽपि तथा तथा । बुद्धिरूपमवाप्नोति चेतनत्वात् पराश्रयम् ॥इति (१७ कारिकाव्याख्यानम्) ।

२. योगसारसंग्रहे भिक्षुणोक्तम्—"सांख्यसाराख्ये सांख्यप्रकरणे स्वस्माभिर्विस्तरतः प्रकृतिपुरुषौ विवेचितावतः विस्तरभयान्नेह प्रकरणे प्रस्तूयेते" (पृ० ३६) ।

३. प्रकृतिपुरुषभेदो यदा समाधिना ज्ञातो भवति, तदा तज्ज्ञानं विवेक इत्युच्यते । विवेकोत्पत्तये एव यमादीनि साधनान्यनुष्ठीयन्ते, अतएवोच्यते—योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः इति । विवेकख्यातौ सिद्धायां चित्तव्यापारा निवर्तन्ते, अतएव 'विवेकख्यातिपर्यन्तमज्ञानाच् चित्तचेष्टितम्' इत्युक्तं सांख्याचार्यैः (वचनमिदं बृहदा० ४।५।१५ गिरिटीकायामुद्धृतम्) । अतएव विवेकज्ञानस्य विशदीकरणमावश्यक मिति कृत्वा भिक्षुणेदं प्रकरणमारब्धम् ।

सामान्यात्मघनाकाशे सान्निध्येरितशक्तिभिः ।
जायते लीयते भूत्वा भूयोऽयं जगदम्बुदः ॥२॥
त्रिगुणात्मकशक्तीनां परिणामैरतश्चितिः ।
आधारविधया विश्वोपादानमविकारतः ॥३॥
यथाऽधारतया तोयं धरोपादानमिष्यते ।
स्वस्थपार्थिवतन्मात्र-द्वारेणैवं चितिर्मता ॥४॥
अतो जगदुपादानमपि ब्रह्माऽविकारतः ।
कूटस्थनित्यपर्य्याय·परमार्थसदुच्यते ॥५॥
स्वार्थत्वात् स्वानुभूत्या च सिद्धत्वात् परमार्थसत् ।
स्वतः स्थित्या स्वतः सिद्ध्या लोकैः सन्निति गीयते ॥६॥
प्रतिक्षणविकारेण तैस्तै रूपैरपायतः ।
प्रकृत्यादिरसत् सर्वो जडार्थोऽब्धौ तरङ्गवत् ॥७॥
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिशम्भूतां तत् वस्त्वित्यादिकस्मृतेः[1] ॥८॥
परार्थाधीनसत्त्वाच्च परदृष्ट्या च सिद्धितः ।
परतः सन्नसन्नेव तत्परापेक्षया मतः ॥९॥
सतोऽस्तित्वन्तु नासत्ता नास्तित्वे सत्यता कुतः ।
इति गारुडतश्चैवं सदसत्त्वव्यवस्थितेः ॥१०॥
अतो न सन्नासदिदं जगत् सदसदात्मकम्[2] ।
असद्विषयकत्वाच्च तस्य धीस्तात्त्विको भ्रमः ॥११॥
जगद्वृक्षस्य चैतन्यं सारोऽसारस्तथेतरत् ।
प्रपञ्चस्य स्थिरांशो हि चितिरेवाविकारतः ॥१२॥
तदन्यदखिलं तुच्छमसारत्वादुदीर्य्यते ।
तथाऽनृतमसच्चापि तदपेक्ष्यस्थिरत्वतः ॥१३॥

---

१. विष्णु० २।१३।९५

२. जगतः सदसत्त्वविषये योगवासिष्ठवाक्यानि यथा—न सन्नासन्नसञ्जात श्चेतसो जगतो भ्रमः । अथ धीसमवायानामिन्द्रजालमिवोत्थितः ॥ (३।६५।६) । नातः सत्यमिदं दृश्यं न चासत्यं कदाचन (३।४४।३३) । न तत्सत्यं न चासत्यं रज्जुसर्पभ्रमो यथा (३।४४।४१) । न सत्यं न च मिथ्यैव स्वप्नजालमिवोत्थितम् । एवं न सन्नासदिदं भ्रान्तिमात्रं विभासते ॥३।४४।२७॥ असत्यमस्थैर्यवशात् सत्यं सम्प्रतिभासतः । यथा स्वप्नस्तथा चित्तं जगत्सदसदात्मकम् (३।६५।५) । यथा नभसि मुक्ताली पिच्छकेशोण्ड्कादयः । असत्याः सत्यतां याता भात्येवं दुर्दशां जगत् ॥३।४२।७॥ असत्यमेवं सत्याभं प्रतिभानमिदं स्थिरम् । अकृतं चानभूतं च न सत्यं सत्यवत् स्थितम् ॥३।१३।४२॥

एवंविधैवात्मसत्ता अन्याऽसत्ता च दर्शिता ।
वासिष्ठादौ विस्तरतो यथा लेशात् तदुच्यते ॥१४॥
स्वप्ना जाग्रत्यसद्रूपः स्वप्ने जाग्रदसद्वपुः ।
मृतिर्जन्मन्यसद्रूपा मृतौ जन्माप्यसन्मयम् ॥१५॥
जगन्मयी भ्रान्तिरिति न कदाऽपि न विद्यते ।
विद्यते न कदाचिच्च जलबुद्बुदवत् स्थितम् ॥१६॥
आत्मैवास्ति परं सत्यं नान्याः संसारदृष्टयः ।
शुक्तिकारजतं यद्वद् यथा मरुमरीचिका ॥१७॥
अस्ति सर्वगतं शान्तं परमात्मघनं शुचि ।
अचिन्त्यचिन्मात्रवपुः परमाकाशमाततम् ॥१८॥
तत् सर्वगं सर्वशक्ति सर्वं सर्वात्मकं स्वयम् ।
यत्र यत्र यथोदेति तथाऽस्ते तत्र तत्र वै ॥१९॥
आविर्भावतिरोभाव-मयास्त्रिभुवनोर्मयः ।
स्फुरन्त्यतितते यस्मिन्मरौविव मरीचयः ॥२०॥
असत्येव सती तोय-नद्येव लहरी चला ।
मनसेवेन्द्रजालश्रीर्जागती प्रवितन्यते ॥२१॥
ब्रह्मणा तन्यते विश्वं मनसैव स्वयम्भुवा ।
मनामयमतो विश्वं यन्नाम परिदृश्यते ॥२२॥
या ह्यशुद्धमतिर्मूढा रूढा न वितते पदे ।
वज्रसारमिदं तस्य जगदस्त्यसदेव सत् ॥२३॥
अव्युत्पन्नस्य कनके कानके कटके यथा ।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥२४॥
तथाऽज्ञस्य पुरागार-नगनागेन्द्रभासुरा ।
इयं दृश्यदृगेवास्ति न त्वन्या परमार्थदृक् ॥२५॥
इत्यादिवाक्यैर्वासिष्ठे[1] नात्यन्तासत्यतोदिता ।
जगतोऽपरवाक्यैर्हि सत् कार्य्यं प्राकृतं मतम् ॥२६॥
नामरूपविनिर्मुक्तं यस्मिन् सन्तिष्ठते जगत् ।
तमाहुः प्रकृतिं केचिन्मायामेकेऽपरे त्वणून् ॥२७॥
सुषुप्तावस्थाया चक्र-पद्मरेखा शिलोदरे ।
यथा स्थिता चितेरन्तस्तथेयं जगदावली[2] ॥२८॥

---

१. योगवासिष्ठग्रन्थत अत्रत्याः श्लोका उद्धृताः, यथा—२३ श्लोकः ३।४२।१ इत्यत्र, २४ श्लोकः ३।४२।५ इत्यत्र, २५ श्लोकः ३।४२।६ इत्यत्र दृश्यते ।

२. योगवासिष्ठे उक्तम्—वटश्च वटधानायामिव पुष्पफलादिमान् । चिदन्तरस्ति त्रिजगन् मरिचे तीक्ष्णता यथा (६।२।५२) ।

प्रकृतिव्रततिर्व्योम्नि जाता ब्रह्माण्डसत्फला ।
इत्यादिवाक्यैः साङ्ख्यीय-सत्कार्याद्युपवर्णनात्[1] ॥२९॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः
सत्यत्वासत्यत्ववैधर्म्यपरिच्छेदः ।

---

## तृतीयः परिच्छेदः

तदेवमात्मनः सत्ता दर्शिताऽन्यविलक्षणा ।
अथ चिद्रूपतां[2] वक्ष्ये बुद्धिवृत्तिविलक्षणाम् ॥१॥
अनुभूतिश्चितिर्[3]बोधो वेदनं चोच्यते पुमान् ।
वेद्यं जडं तमोऽज्ञानं प्रधानादिकमुच्यते ॥२॥
वेदनं वेद्यसम्बन्धादेव वेत्त्रभिधीयते ।
यथा प्रकाश्यसम्बन्धात् प्रकाशोऽपि प्रकाशकः ॥३॥
यथा वाऽर्थोपरागेण भानमर्थस्य भासकम् ।
एवं वेद्योपरक्तस्यास्यांशस्याऽधारतांऽशिनि ॥४॥
असङ्गायां चितौ वेद्योपरागोऽयं न धीष्विव ।
किन्तु साक्षाद् द्वारतो वा चिति तत्प्रतिबिम्बनम् ॥५॥
बाह्यं वृत्त्याख्यकरणाभावादनुपरागतः ।
चितिर्नैवेक्षते चेत्यं विभुत्वेऽपि च सर्वतः ॥६॥
तथा चिदपि वृत्त्याख्य-करणाभावतोऽर्थवत् ।
स्वगोचरां वृत्तिमृते तिष्ठत्यज्ञातसत्तया ॥७॥

---

१. उक्तं च वासिष्ठे—फलपुष्पलतापत्रशाखाविटपमूलवान् । वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् (३।१००।११); सूर्यकान्ते यथावह्निर्यथा क्षीरे घृतं तथा । तत्रेदं संस्थितं सर्वं देशकालक्रमोदये ॥ (११।२७–२८) ।

२. आत्मा चिदेव, चैतन्यमेव आत्मा पुरुषो वा; न पुनः 'चैतन्यलक्षणः पुरुष' इति कथनं तत्त्वतः सत्यं भवति । चैतन्यलक्षणः पुरुष इति गौणः प्रयोग इति मन्तव्यम् । तथा चोक्तं कैयटेन—तत्त्वाख्यानमपि लक्षणं भवति, यथा चैतन्यलक्षणः पुरुष इति भावः (प्रदीप ३।२।१२६) । अत्राह नागेश उद्द्योते—तत्स्वरूपत्वात् पुरुषस्य यथा तत्र लक्षणत्वारोपेण शब्दप्रयोगस्तथाऽत्रापि तदारोपेण प्रत्यय इति भावः ।

३. चितिःचितिशक्तिरिति वा प्रयुज्यते योगशास्त्रे बहुशः । आह भाष्यविवरणकारः—चितिरेव शक्तिः चितिशक्तिः । यथा पच्यादयः शक्तयः शक्तिमदपेक्षाप्रापणीयजन्मानो न स्वयं शक्तयः, चितिः पुनः स्वयमेव शक्तिर्नार्थान्तरमपेक्षते तेन नित्यावस्थितत्वम् । चितिशब्दस्य चिन्मात्राभिधायिनः शक्तिशब्देन सामानाधिकरण्यमविकृतरूपाया एव चिते विषयित्वप्रदर्शनार्थम् (१।२) ।

तदेवं चिन्निराकारा प्रकाशाकाशरूपिणी ।
तिष्ठत्यव्यक्तरूपा च मोक्षादौ वृत्त्यभावतः ॥८॥
बुद्धिवृत्तिस्तु[1] साकारा परिच्छिन्ना च दीपवत् ।
व्यक्ता च सर्वदा तद्वदसङ्ख्या क्षणभङ्गुरा ॥९॥
जडा च परदृश्यत्वाद् घटदीपादिवन्मता ।
वृत्तेः प्रकाशता त्वर्थाकारत्वादक्षतैव हि ॥१०॥
यथाऽस्याकारताऽर्हत्वादादर्शस्तत्प्रकाशकः ।
सर्वाकारत्वयोग्यत्वात् सैवं सर्वप्रकाशिका ॥११॥
न पुनर्वृत्तिद्रष्टृत्वं चितस्तद्भिन्नद्रष्टृता ।
वृत्तेर्यतो गौरवं स्यात् तयोर्ज्ञातृत्वकल्पने ॥१२॥
बुद्ध्यारूढं त्वन्यवस्तु तद्द्वारा प्रतिबिम्बितम् ।
पश्यत्यनुभवो नान्यो द्रष्टा बुद्ध्यादिकोऽखिलः ॥१३॥
इत्येवं बुद्धिवृत्तिभ्यो वैलक्षण्यं चितीरितम् ।
चिदचित्त्वाख्यवैधर्म्यं देहादिभ्यः स्फुटन्त्विदम् ॥१४॥
अन्योऽन्यप्रतिबिम्बेन सारूप्याद् वृत्तिबोधयोः ।
बोधव्यवहृतिर्वृत्तौ लोहेऽग्निव्यवहारवत्[2] ॥१५॥
नैवाल्पबुद्ध्या शक्योऽयं विवेको वृत्तिबोधयोः[3] ।
तार्किका यत्र सम्मूढाः साङ्ख्यानां श्रेष्ठता यतः ॥१६॥
विज्ञानवादिनो बाद्धा वृत्तिबोधाविवेकतः ।
ज्ञातात्मत्वश्रुतौ मूढा मेनिरे क्षणिकां चितिम् ॥१७॥
सत्त्वपुंसो विवेकोऽयं वृत्तितद्बोधरूपयोः ।[4]
नाशक्यः सुधियां यद्वद्धंसानां क्षीरनीरयोः ॥१८॥
एतदन्तश्च संसारो मोक्षस्तत्रैव संस्थितः ।
यद्वृत्तिभ्यो विवेकेन तद्बोधस्यावधारणम् ॥१९॥
सर्वोऽप्यनुभवं वेद न कश्चिदपि वेदनाम् ।
विवेकमात्रमस्मिन् हि भासमानेऽप्यपेक्षते ॥२०॥

---

१. वृत्तयोऽपि दीपशिखा इव द्रव्यरूपा भङ्गुराश्चित्तस्य परिणामा इति सांख्यीयं मतम् (१।४ नागोजीभट्टवृत्तिः) ।

२. द्र० सांख्यसू० अन्तःकरणस्य तदुज्ज्वलितत्वात् लोहवदधिष्ठातृत्वम् (१।९९) ।

३. यथोक्तं व्यासभाष्ये—तदतेच् चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमपि अविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते।। तदनेन चित्तसारूप्येण भ्रान्ताः केचित् तदेव चेतनमित्याहुः (४।२३) ।

४. योगसू० ४।१९-२४ द्र० । अत्र चित्त-पुरुषयोर्विवेको युक्त्या स्थापितः ।

आत्मा विवेक्तुं बाह्यार्थे न शक्यो वृत्तिमिश्रणात् ।
अतो वृत्तौ विवेक्तव्यो वृत्तिबोधतयैव सः ॥२१॥
यथा बुद्ध्या विवेकार्हो नाग्निरङ्गारमिश्रणात् ।
सोऽङ्गारे तु विवेकार्हो काष्ठदग्धृतया स्फुटम् ॥२२॥
अत एव श्रुतौ स्वप्ने दृश्यवृत्तिविवेकतः ।
स्वयंज्योतिःस्वरूपेण[1] तस्या द्रष्टा प्रदर्शितः ॥२३॥
साक्षात् प्रकाशो यो यस्य स तद्भिन्नो मतो बुधैः ।
घटादिभ्यो यथाऽऽलोक आलोकाच्चापि वृत्तयः ॥२४॥
वृत्तेः साक्षात् प्रकाशत्वादतोऽनुभवरूपकः ।
वृत्तिभ्यो भिन्न आत्मेति शीघ्रो मार्गः स्वदर्शने ॥२५॥
एवमादिप्रकारेण बुद्धिसत्त्वप्रकाशतः ।
विलक्षणतया[2] सिद्धश्चित्प्रकाशोऽस्य भासकः ॥२६॥
स्वप्नदेहादिदृष्टान्तैस्तस्माच्छ्रुत्यादिदर्शितैः ।
जाग्रद्देहेन्द्रियार्थेभ्यश्चितिर्भिन्नतया मता ॥२७॥
स्वप्ने देहादिकं सर्वं चिद्भिन्नं चिति भासते ।
जाग्रत्येवं विशेषस्तु यद् बाह्यमपि भासते ॥२८॥
स्वप्ने मनोमयत्वाच्च साक्षाच्चिद्विषयोऽखिलम् ।
करणद्वारतो बाह्यं चितो जाग्रति गोचरः ॥२९॥
सर्वं देहादिकं स्वप्न-जाग्रतोरेकरूपतः ।
भाति चिद्व्योम्नि नात्रार्थ-बाह्यान्तर्भेदतो भिदा ॥३०॥
चिद्व्योम्नि वासनातो धीः प्रमाणात् वाऽर्थरूपिणी ।
ततश्चितोऽर्थभानं यत् तत् समं स्वप्नजाग्रतोः ॥३१॥
तदिदं स्वानुभूत्यैव प्रोच्यते न परोक्षतः ।
स्वप्नदृष्टान्तसदृशो नोपायोऽस्त्यात्मदर्शने ॥३२॥
सुषुप्तौ हि यथा स्वप्ने स्वात्मन्येवेक्षतेऽखिलम् ।
आत्मानं चैकदेशस्थं मन्यते जागरे तथा ॥३३॥
सुषुप्तिरात्मनस्तत्त्वं स्वरूपावस्थितेस्तदा ।
जाग्रत्स्वप्नौ मायिकौ तु मृषा सारूप्यतो धिया ॥३४॥

---

१. द्र० बृहदारण्यकम् ४।३।९

२. बुद्धि-पुरुषयोर्भेदो व्यासभाष्ये दर्शितो युक्तिभिः; तद्यथा—"(१) ज्ञाताज्ञातविषयत्वात् परिणामिनी हि बुद्धिः...सदाज्ञातविषयत्वं तु पुरुषस्य; (२) परार्था बुद्धिः संहत्यकारित्वात्, स्वार्थः पुरुष इति; (३) सर्वार्थाध्यवसायकत्वात् त्रिगुणा बुद्धिस्त्रिगुणत्वादचेतनेति, गुणानां तूपद्रष्टा पुरुष इति" (२।२०)।

बुद्धेः सुषुप्तिस्तमसाऽवरणं तद्विलक्षणा ।
चितेः सुषुप्तिर्वृत्त्याख्य-दृश्यावरणशून्यता ॥३५॥

पूर्णः कूटस्थनित्यश्च स्वस्वधीमात्रवृत्तिदृक्[1] ।
वृत्त्याख्यदृश्यविरहात् सर्वदा नेक्षते पुमान्[2] ॥३६॥

वृत्तिदेशे यथा बोधस्तथा सर्वत्र सर्वदा ।
वृथैव तप्यते मूढैर्व्ययनाशादिनाऽऽत्मनः ॥३७॥

दुःखभोगमहारोग-निदानं देहगेहिनी ।
बुद्धिर्न त्यज्यते मूढैर्महानिद्रासुखं यतः ॥३८॥

अनादिबुद्धिगार्हस्थ्यं विवेकस्त्यज्यते न चेत् ।
न मोक्षो बाह्यसंन्यासा[3]दिहामुत्रासुखं परम् ॥३९॥

समचिन्मात्ररूपेषु स्वपरात्मसु सर्वदा ।
बुद्धिमात्रविवेकेन स्वपरादिभिदा मृषा ॥४०॥

चिन्मात्रे निर्गुणे स्वामिन्यारोप्यैवात्मकर्तृताम् ।
स्वान्यवञ्चापराधेन बध्यते धीः स्वकर्मभिः ॥४१॥

साध्वी तु धीः पतिं दृष्ट्वा याथातथ्येन तत्परा ।
इहानन्दमयी चान्ते पतिदेहे लयं व्रजेत् ॥४२॥

नाहं कर्त्ता सुखी दुःखी चिन्मात्राकाशरूपकः ।
एवं नाथं चिन्तयन्ती न पत्युर्दुःखभागदा ॥४३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनो-
श्चिदचित्त्ववैधर्म्यपरिच्छेदः ।

---

१. अत्र भाष्यविवरणोक्तं द्रष्टव्यम्—बुद्धिं वृत्तिरूपेण परिणतां बुध्यते इति बुद्धेर्बोद्धा पुरुषः । तद्बोधनमेव पुरुषस्य स्वं रूपम्, नान्यो बोद्धा, नान्यद् बोधनम् । बोद्धुश्च बोधनादन्यत्वे सति विक्रियात्मकता स्यात्, ततश्च दर्शितविषयत्वं च न स्यात्, तथा च करणान्तरापेक्षित्वं पुरुषस्य प्रसज्येत । तस्माद् बोधनं बोद्धृत्वं चोपचरितं तद्वृत्तिसारूप्येण (१।३) । प्रत्यक् स्वबुद्धिं चेतयते इति प्रत्यक् चेतन आत्मा इति विवरणकारः (१।२९) ।

२. बुद्धिलये आत्मा स्वद्रष्टा भवति, शान्तचित्तद्रष्टा वा । अतएवेयं सांख्यविद्या शान्तब्रह्मविद्येत्युच्यते । शान्तब्रह्मवादिनो हि सांख्या इति भोज आह (४।२२–२३) ।

३. अतएवोपादानतुष्टिर्हेयेति प्राञ्चः ।

## चतुर्थः परिच्छेदः

इत्येवमात्मनः प्रोक्तो बुद्ध्यादिभ्यो विलक्षणः ।
चित्प्रकाशोऽधुनाऽनन्द-रूपता वक्ष्यते यथा[१] ॥१॥

दुःखं कामसुखापेक्षा सुखं दुःखसुखात्ययः ।
इति स्मृतेः सुखात्मत्वं नित्यनिर्दुःखताऽऽत्मनः ॥२॥

परिभाषाबलाद् रूढि-बाधः सर्वत्र सम्मतः ।
अन्यथा परिभाषेयं मोक्षशास्त्रे भवेद् वृथा ॥३॥

यद्वा परोक्षवादेन परमप्रियताऽप्तये ।
रूपिका सुखगीः पुंसि विभुत्वाप्त्यै खशब्दवत् ॥४॥

नानन्दं न निरानन्दमित्या[२]दिश्रुतिभिः स्फुटम् ।
आत्मन्यानन्दरूपत्व-निषेधाद्[३] युक्तिसंयुतात् ॥५॥

उपास्याद्यर्थशून्यत्वान्नेति नेति श्रुतेस्तथा[४] ।
निषेधवाक्यं बलवद् विधिवाक्यादिति स्थितिः ॥६॥

निर्निरानन्दमिति च स्वोपाध्यानन्दभोक्तृताम् ।
स्वामित्वरूपिणीं वक्ति न निर्धन इतीव हि ॥७॥

प्रेयोऽन्यस्माच्च सर्वस्मादिति श्रुत्या[५] सुखादपि ।
उक्त आत्मा प्रियस्तस्य सुखत्वोक्तिश्च नोचिता ॥८॥

आनन्दाद्याः प्रधानस्य इति[६] वेदान्तसूत्रतः ।
वेदान्तेऽपि न सिद्धान्त आत्मनः सुखरूपता ॥९॥

---

१. मोक्षरूपमात्मस्वरूपं शान्त्यात्मकमिति सांख्यनयः, न तत्र बौद्धस्यानन्दस्य सत्ताऽभ्युपगन्तव्या । शान्तिरेव सुखमिति कृत्वा सुखात्मक आत्मा (=शान्तवृत्तिकस्य चित्तस्य उपद्रष्टा कूटस्थ आत्मा) इति कथयितुं शक्यते । अनया दृशैव देवलोक्तिः संगच्छते—स तथा निवृत्तो निर्गुणः छिन्नबन्धो जन्मजरामरणदुःखविनिर्मुक्तः··· सत्त्वादिहीनः तन्मात्रावस्थितः परमसुखमैकान्तिकमधिगच्छतीति सांख्यम् ।

२. महोपनिषद् ५।१८

३. मोक्षे आत्मनः सुखरूपत्वमभिव्यज्यते इति मतं न्यायभाष्येऽपि खण्डितम् (१।१।२२) । योगसारसंग्रहग्रन्थान्तेऽपि नित्यानन्दावाप्तिरूपो मोक्षः खण्डितो भिक्षुणा; भोजेनापि योग-वृत्त्यन्ते ।

४. बृहदा० २।३।६

५. बृहदा० ४।५।६

६. ब्रह्मसू० ३।३।११

विस्तराद् ब्रह्ममीमांसा-भाष्येऽस्माभिः[1] परीक्षितम् ।
चितेरसुखरूपत्वं प्रेमा व्याख्यायतेऽधुना ॥१०॥
मा न भूवमहं शश्वद् भूयासमितिरूपकः।
निर्निमित्तोऽनुरागो यः स प्रेमा परमश्चिति ॥११॥
अन्याशेषतया बुद्धेः स्नेहोऽयं न सुखेष्वपि ।
अतः प्रियतमः स्वात्मा नान्योऽतो ह्यधिकः प्रियः ॥१२॥
आत्मत्वेनात्मनि प्रेमा न सुखत्वाद्यपेक्षते ।
अहं स्यामिति चेद् यस्मात् सुखं स्यामिति नेष्यते ॥१३॥
तथा च सुखतादुःखाभावते वाऽत्मताऽपि च ।
प्रेम्णि प्रयोजिका सिद्धा स्वतः प्रेमात्मतैव तु ॥१४॥
तस्माद् वस्तुत आत्मैव प्रियो नौपाधिकत्वतः ।
औपाधिकीतरप्रीतिरस्थिरत्वान्न तात्त्विकी ॥१५॥
प्रीतिरन्यत्र चानित्याऽविवेकाद्यैः सुखादिषु ।
आत्मप्रीतिस्तु नित्याऽतो नित्यानन्दः पुमान् मतः ॥१६॥
आत्मनः प्रियतां बुद्धिर्यदि पश्येत् समाहिता[2] ।
सर्वातिशायिनीं तर्हि सुखाब्धौ किं न मज्जति ॥१७॥
प्रियदर्शनतो बुद्धेः सुखं लोकेषु दृश्यते ।
अतोऽनुमेयं परम-प्रियदृष्ट्या परं सुखम् ॥१८॥
आत्मार्थत्वेन सर्वत्र प्रीतिरात्मा स्वतः प्रियः ।
इति शश्वच्छ्रुतिः[3] प्राह आत्मदृष्टिविधित्सया ॥१९॥
ततोऽप्यनुपमं ज्ञेयं प्रियात्मेक्षणतः सुखम् ।
भुञ्जते तत् सुखं धीरा जीवन्मुक्ता महाधियः ॥२०॥

---

१. विज्ञानामृतभाष्यम् (अ० ३) ।

२. आत्मनः सर्वप्रियत्वादेव बुद्धिः पुरुषख्यातिं लब्ध्वा गुणेभ्यो विरक्ता सती, पुरुषालम्बना अतिस्थिरा च भवति, अतएव आत्मख्यातिमतो योगिनः मनः बाह्यार्थशून्यं जायते । अत्रेमानि वचांसि द्रष्टव्यानि——यदा कर्मगुणैर्हीना बुद्धिर्मनसि वर्तते । तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ (शान्ति० २०५।१०); यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् । तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ (शान्ति० २०५।१३); यच्छेद् वाङ्मनसी बुद्ध्या य इच्छेज् ज्ञानमुत्तमम् । ज्ञानेन यच्छेदात्मानं य इच्छे च् छान्तिमात्मनः ॥ (शान्ति. २३६।४-५) । अन्तरात्मनि संलीय मनःषष्ठानि मेधया । इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयम् ॥ ध्यानेनोपरमं कृत्वा विद्यासंपादितं मनः । अनीश्वरः प्रसन्नात्मा ततोऽर्च्छत्यमृतं पदम् ॥ (शान्ति २४६।६-७) ।

३. द्र० बृहदारण्यकवचनम् ४।५।६

अन्तरात्मसुखं सत्यमविसंवादि योगिनम् ।
अपश्यन् कृपणो बाह्य-सुखार्थी वञ्चितो जनः ॥२१॥

सुखाशया बहिः पश्यन् देही हीन्द्रियरन्धकैः ।
वातायनैर्गृहीत्वाऽन्तः सुखं वेत्ति न बाह्यदृक् ॥२२॥

दुःखलभ्यान् दुःखमयान् परिणामेऽतिदुःखदान् ।
विषयोत्थान् सुखाभासान् धिक् स्वात्मसुखरोधकान् ॥२३॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मानात्मनोः प्रियाप्रियत्ववैधर्म्यपरिच्छेदः ।

---

## पञ्चमः परिच्छेदः

परिच्छेदत्रयेणोक्तं सच्चिदानन्दरूपकम् ।
मीयमानं श्रुतिस्मृत्योरात्मनो लक्षणत्रयम् ॥१॥

तद्वैपरीत्यमन्येषां लक्षणञ्चेरितं स्फुटम् ।
आभ्यान्तु गुणदोषाभ्यां विवेको दोषहृत् परः ॥२॥

नैर्गुण्यसगुणत्वादि-वैधर्म्याण्यपराण्यपि ।
बहूनि वक्ष्ये सङ्क्षेपात् पुम्प्रकृत्योरतः परम् ॥३॥

धियोऽर्थाकारया वृत्त्या जनितत्वात् सुखादयः ।
सामानाधिकरण्येन कल्प्यन्ते लाघवाद् धियाम् ॥४॥

महदादेर्जडत्वेन तद्धेतुश्च जडो मतः ।
कार्य्यकारणसाजात्यं दृष्टं लोके हि सर्वतः ॥५॥

अत आत्मा बोधमात्र-तया सिध्यति[१] लाघवात् ।
गुणाः सर्वे प्रकृत्यादेर्विकाराश्चेतरेऽखिलाः ॥६॥

आत्मा तु निर्गुणस्तद्वत् कूटस्थश्च मतो बुधैः ।
चितेः कूटस्थसंज्ञा[२] तु स्थिरत्वाद् गिरिकूटवत् ॥७॥

लेपश्चेतरसम्बन्धे तद्रूपैरुपरक्तता ।
यथा विषयसम्बन्धाद् बुद्धौ भवति वासना ॥८॥

भाण्डादौ द्रव्ययोगाच्च तत्तद्द्रव्यस्य वासना ।
लेपहेतुश्च सम्बन्धः सङ्गः सम्बन्धि चाञ्जनम् ॥९॥

---

१. प्रश्नोपनिषद् भाष्ये (६।२) इदं युक्तिभिरुपपादितम् ।
२. कूटस्थविषये गीताभाष्यं १२।३ द्र०

अतो निरञ्जनोऽसङ्गो निर्लेपश्चोच्यते पुमान् ।
नभःपुष्करपत्रादि-दृष्टान्तैः परमर्षिभिः[1] ॥१०॥
चिन्मात्रानन्तशक्त्यब्धौ पुमर्थपवनेरिताः ।
सत्त्वादिशक्तयो यान्ति विश्वबुद्बुदरूपताम् ॥११॥
अत ईशश्चिदात्मैव जगतः सन्निधानतः ।
मणिवत्[2] प्रेरकत्वेन जडानामनसामिव ॥१२॥
पुमानेव जगत्कर्त्ता जगद्धर्त्ताऽखिलेश्वरः ।
स्वाम्यर्थे[3] भृत्यवद्[4] यस्माज्जडवर्गः प्रवर्त्तते ॥१३॥
करणानि च देहेषु राजार्थमधिकारिवत् ।
भोग्यजातं मनोमन्त्रिण्यर्पयन्ति स्वभावतः ॥१४॥
तैर्भोग्यैर्युक्तमात्मानमावेदयति धीश्चिति ।
ईक्षामात्रेण तद् भुङ्क्ते राजेवात्माखिलेश्वरः ॥१५॥
धनादेरीश्वरो देहो देहस्येन्द्रियमीश्वरम् ।
इन्द्रियस्येश्वरी बुद्धिर्बुद्धेरात्मेश्वरः परः ॥१६॥
कूटस्थस्येश्वरस्यान्यो नास्ति प्रेरक इत्यतः ।
ईश्वरस्यावधित्वेन द्रष्टा वै परमेश्वरः ॥१७॥
अन्यस्यागन्तुकैश्वर्य्यं बहुव्यापारसङ्कुलम् ।
निर्व्यापारस्य निर्दोषमनाद्यैश्वर्य्यमात्मनः ॥१८॥
सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवः ।
संसारं तन्निवृत्तिञ्च माययाऽप्नोति हेलया ॥१९॥
सर्वातिशायि निर्दोषमैश्वर्य्यमिदमात्मनः ।
पश्यतो योगिनो ब्राह्ममप्यैश्वर्य्यं तृणायते ॥२०॥
बाह्यस्यात्मोच्यते देहो देहस्यात्मेन्द्रियाणि च ।
बुद्धिरात्मेन्द्रियान्तस्य बुद्धेरात्मा तु चिन्नभः ॥२१॥

---

१. कपिलासुरिसंवादे पठ्यते—व्यतिरिक्तं नाम आसुरे पुरुषः पञ्चविंशकः क्षेत्रज्ञः; यथा पुष्करपर्णस्थो बिन्दुर्न श्लेषमुपगच्छति अन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः। यथा मुञ्जादिषीका निष्कृष्टा न पुनराविशति अन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः। यथोदके प्रवर्तमाने मत्स्यो न प्रवर्ततेऽन्यत्वात् तथा क्षेत्रं क्षेत्रज्ञः'''तथा अन्यत् क्षेत्रम् क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः (शान्तिपर्व)।

२. तत्सन्निधानादधिष्ठातृत्वं मणिवत् (सांख्य सू० १।९६)

३. पुरुषाय प्रकृतेः प्रवृत्तिरिति सूत्रादिषु बहुधोक्तम्—आत्मार्थत्वात् सृष्टेः (२।११), पुरुषार्थं संसृतिः (३।१६)। तदर्थ एव दृश्यस्यात्मेति योगसूत्रमपि द्र०।

४. भृत्यदृष्टान्तः सांख्यसूत्रे उपलभ्यते—द्र० बहुभृत्यवद् वा प्रत्येकम् (२।४); गर्भदासवत् (३।५१), भृत्यवत् (३।६१) इति।

अत आत्मावधित्वेन परमात्मोच्यते चितिः ।
तथाऽन्तःकरणैर्योगाज्जीव इत्युच्यते[1] चितिः ॥२२॥
अविद्याकार्य्यैरहितः परमात्मेति[2] च स्मृतिः ।
यस्य यद् व्यापकं तस्य तद् ब्रह्माऽतो धरादिकम् ॥२३॥
प्रकृत्यन्तं भवेद् ब्रह्म स्वस्वकार्य्याद्यपेक्षया ।
सेश्वरे साङ्ख्यवादेऽपि[3] चितेरेवानुमन्यते ॥२४॥
परे वा परमात्मत्वादिकन्तु न जडे क्वचित् ।
अध्यक्षव्यापकत्वाभ्यां परं ब्रह्म तु चेतनः ॥२५॥
तस्याध्यक्षं व्यापकञ्च न हेतुविधयाऽस्ति हि ।
असङ्ख्यात्मा नभोराशिरविभक्तैकरूपकः ॥२६॥
सोऽतश्चिद्घनविज्ञान-घनात्मघनसंज्ञकः ।
प्रकाशस्यानपेक्षत्वात् स्वस्य द्रष्टृतयाऽपि च ॥२७॥
स्वप्रकाशः पुमानुक्त इतरे तद्विलक्षणाः ।
भोगोऽभ्यवहृतिः सा च कूटस्थे नास्ति धीष्विव ॥२८॥
धीवृत्तिप्रतिबिम्बाख्य-गौणभोगा तु भोक्तृता ।
साक्षाद् धीवृत्तिद्रष्टृत्वाद् बुद्धिसाक्ष्युच्यते पुमान्[4] ॥२९॥
विना विकारं द्रष्टृत्वात् साक्षी तूक्तोऽखिलस्य सः ।
चेत्योपरागरूपत्वात् साक्षिताऽप्यध्रुवा चितः ॥३०॥
उपलक्षणमेवेदमपि व्यावृत्तये जडात् ।
अतः पुमाननिर्देश्योऽणुश्च सूक्ष्मश्च कथ्यते ॥३१॥
विना दृश्यमदृश्यत्वादव्यक्तश्चोच्यते स्वतः ।
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना ।
अदृश्यं चाऽस्यमादर्शे चित् तथा स्वस्वबुद्धिषु ॥३२॥
चिति विश्वस्य सङ्गश्चेद् विश्वं भासेत सर्वदा ।
विश्वाधारोऽप्यतः शून्यमिति चिद्गीयते खवत् ॥३३॥

---

१. द्र० सांख्यसू० 'विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्' (६।६३)

२. आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः । तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥ (शान्ति० १८७।२३; श्वेताश्वतरभाष्ये उद्धृतश्च) ।

३. सांख्यं सेश्वरं निरीश्वरं चेति द्विविधमिति केचन (द्र० ललितासहस्रनामभाष्य पृ० ६३) । दृष्टिरियमसमीचीनेति विस्तरेण प्रतिपादितम स्माभिः (वेदवाणीपत्रिका १५।५-९) । ईश्वरता नाम बुद्धिधर्मोऽतः 'सांख्यं निरीश्वरम्' इति कथनं वाङ्मात्रमेव ।

४. तु० बुद्धिबोधात्मा पुरुषः (व्यासभाष्यम् १।४) । पुरुषो बुद्धेः प्रतिसंवेदीति सांख्यमतममुमेवार्थं पुष्णाति ।

दृश्यदोषान् मृषाबुद्धि र्द्रष्टर्य्यारोप्य निर्मले ।
आदर्शे मलवद् व्योम्नि दोषदृष्ट्या तु तप्यते ॥३४॥
वस्तुतश्चिति नास्त्येव मलो दृश्याश्रितः सदा ।
अतश्च निर्मलः स्वस्थो निर्दोषश्चोच्यते पुमान् ॥३५॥
सजातीयेषु वैधर्म्य-लक्षणा नास्ति यद् भिदा ।
अत आत्मा समः प्रोक्त ऐकरूप्याच्च सर्वदा ॥३६॥
देहाध्यक्षतया देही पुर्य्यभिव्यक्तितः पुमान्[१] ।
एकाकित्वादद्वितीयः केवलश्चोच्यते तु सः ॥३७॥
चिच्छक्त्यप्रतिबन्धेन प्रोच्यतेऽनावृतः पुमान्[१] ।
सर्वस्वामितया चाऽत्मा क्षेत्रज्ञः क्षेत्रवेदनात्[२] ॥३८॥
हृत्सरोवरधीपद्म-दलवृत्तिषु लीलया ।
चरन्निवानन्दमीनान् भुञ्जानो हंस[३] उच्यते ॥३९॥
हकारेण बहिर्याति सकारेण विशन् पुनः ।
प्राणवृत्त्याऽनये चापि प्राण्यात्मा हंस उच्यते[४] ॥४०॥
शरीरागारहृद्व्योम-गुहायां बुद्धिभार्य्यया ।
व्यज्यमानस्तया सार्द्धं स्वपन्निव गुहाशयः ॥४१॥
त्रिगुणात्मकमायां स्वां सान्निध्यात् परिणामयन ।
मायीति कथ्यते चात्मा तत्कृतानृतवेषधृक् ॥४२॥
खान्येकादश भूतानि पञ्चैतानि तु षोडश ।
पुंसः कलास्तत्त्वतस्तु निरंशत्वात् स निष्कलः ॥४३॥
अहंशब्दः स्वामिवाची स्वामी साक्षी तु चेतसः ।
अतोऽहमिति शब्देन चिन्मात्रं प्रोच्यते बुधैः ॥४४॥

---

१. शान्ति० २१०।३७

२. शान्ति० ३५१।६

३. हंसविषये इदं द्रष्टव्यम्—कठ० २।२।२ इत्यत्र हंसः शुचिषदित्यादिर्मन्त्रः पठ्यते । अत्राह शंकराचार्यः—"यद्यप्यादित्य एव मन्त्रेणोच्यते तथाप्यात्मस्वरूपत्वमादित्यस्येत्यङ्गीकृतत्वाद् ब्राह्मणव्याख्यानेऽप्यविरोधः" । इति । असौ वा आदित्यो हंसशुचिषदिति ब्राह्मणवाक्येन आदित्यो मन्त्रार्थतया व्याख्यात इति दृश्यते । शंकरव्याख्यानमध्यात्मदृशा । आह भट्टभास्करः—"अध्यात्ममधिदैवमधियज्ञं चाधिकृत्येमं मन्त्रं व्याचक्षते···अध्यात्मे तावत् हंस आत्मा···अथादिदैवे हंस आदित्यः ···अथाधियज्ञे हंसो रथो हन्ति पृथिवीमिति (तै० सं० भाष्यम्) ।

४. उक्तं च स्कन्दपुराणे—हकारेण बहिर्याति सकारेणा विशेत् पुनः । हंस हंसेत्युमुं मन्त्रं जीवो जपति सर्वदा । षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः । एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा इति (द्र० योगचिन्तामणि पृ० १३-१४) ।

सर्वेश्वरः[1] सर्ववेत्ता सर्वकर्त्ताऽद्वयः पुमान् ।
सामान्यादुच्यते यद्वद् राजा सर्वनराधिपः ॥४५॥
आत्माऽद्वैतस्य सूत्रेण जातिमात्रेण वर्णनात्[2] ।
प्रलये हि विजातीय-द्वैतशून्यत्वमात्मनाम् ॥४६॥
असङ्गत्वान्नित्यशुद्धो नित्यबुद्धश्च चित्त्वतः ।
नित्यमुक्तस्तथा नित्य-निर्दुःखत्वात् पुमान् मतः ॥४७॥
इत्यादिगुरुशास्त्रोक्त-दिशा स्वानुभवेन च ।
वैधर्म्यादात्मनोऽनात्म-विवेकः क्रियतां बुधैः ॥४८॥
परिच्छेदचतुष्केण पुम्प्रकृत्योः सुविस्तरात् ।
वैधर्म्यगण उक्तोऽयं ध्यायिनामाशु[3] मुक्तिदः ॥४९॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे आत्मवैधर्म्य-गणपरिच्छेदः ।

---

## षष्ठः परिच्छेदः

विवेकमेव सद्युक्त्या मत्वा तदनुभूयते ।
राजयोगं[4] यथा कुर्य्यात् समासेन तदुच्यते ॥१॥
अशक्तो राजयोगस्य हठयोगेऽधिकारवान् ।
वासिष्ठे हि वसिष्ठाय भुसुण्डेनैवमीरितम्[5] ॥२॥

---

१. चिदात्मा न स्वरूपत ईश्वरः, ईश्वरतायुक्तान्तःकरणोपाधिविशिष्ट आत्मैव ईश्वरः इति सांख्यीयं दर्शनम्, अतोऽत्र भिक्षुर्भ्रान्त एव ।

२. द्र० सांख्यसूत्रम्—नाद्वैतश्रुतिविरोधो जातिपरत्वात् (१।१५४)

३. ध्यानयोगपरायणाः खलु सांख्याः, यथोक्तम्—आत्मध्यानं परं केचित् सांख्यतत्त्वार्थवेदिनः (नरसिंह० ६४।४) इति । कपिलः मात्रे सविशेषं ध्यानयोगं प्रोवाचेति उक्तं देवीभागवते (८।३।१८) ।

४. योगः खलु मन्त्र-लय-हठ-राजभेदेन चतुर्धेति आगमिनः, यथोक्तम्—योगो हि बहुधा ब्रह्मन् भिद्यते व्यवहारतः । मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगकः (योगतत्त्वोपनिषद्) । राजयोगस्वरूपमाह शिवानन्दः—"न तत्र किञ्चिद् वेद्यं संप्रज्ञायते इति असंप्रज्ञातः समाधिः । अयं निर्बीज इति निर्विकल्प इति निरालम्ब इति राजयोग इति चोच्यते ॥

५. भुसुण्डः खलु योगाचार्य इति विज्ञायते—"योगाचार्यैः भुसुण्डप्रभृतिभिः मन्त्र-लय-हठ-राज-भावना-सहज-योगसंप्रदायभेदेन…" इति ब्रह्मयोगि-व्याख्यानात् (योगोपनिषद् ५।३) ।

ज्ञानावृत्ती राजयोगे प्राणायामासने हठे[1] ।
मुख्ये तेऽङ्गतयाऽन्योऽन्यं सेव्ये शक्त्यनुसारतः ॥३॥
विषयेऽनन्तदोषा ये श्रुतिस्मृतिसमीरिताः ।
त आदौ परिद्रष्टव्याश्चित्तस्थैर्याय योगिभिः ॥४॥
कामबीजान्यनन्तानि सम्प्ररोहन्ति यद्धृदि ।
तत्राटवीनिभे ज्ञान-पुण्यशस्यं न वर्द्धते ॥५॥
दोषदृष्ट्यग्निसन्दग्धे कामबीजे तु चेतसि ।
गुरुशास्त्रहलैः कृष्टे सुक्षेत्रे तद्विवर्द्धते ॥६॥
सत्येष्वसत्तां प्रचुरां तथा रम्येष्वरम्यताम् ।
सुखेषु प्रचुरं दुःखं पश्यन् धीरो विरज्यते ॥७॥
ब्रह्मलोकोऽपि नरको विनाशामेध्यपूरितः[2] ।
युक्तश्च स्वाधिकैरन्यैस्त्रैगुण्यादपि दुःखयुक् ॥८॥
तत्रत्यैरपि मुक्त्यर्थं यत्यते जन्मभीरुभिः ।
अतो ज्ञेयः समासेन लोकः सर्वोऽपि दुःखयुक् ॥९॥
इदं मे स्यादिदं मा स्यादितीच्छाव्यथितं मनः ।
स्वभावात् तेन विज्ञेयं दुःखं चित्तेन सङ्गतिः ॥१०॥
सुखं सुषुप्तिः परमा दुःखं विषयवेदनम् ।
सुखदुःखसमासोऽयं किमन्यैर्बहुभाषितैः ॥११॥
तस्मादनर्थानर्थाभान् परीक्ष्य विषयान् सुधीः ।
उत्सजेत् परमार्थार्थी बालरम्यानहीनिव ॥१२॥

---

१. एवं सत्यपि रागद्वेषादिशून्येन साधकेनैव हठयोगोऽभ्यसनीय इति पूर्वाचार्याः । उक्तं च सुन्दरदेवेन हठसंकेतचन्द्रिकायाम्—अयं हठयोगः साधकेन कामसंकल्पहीनेन समाहितमनसाऽभ्यसनीय इति । उक्तं च योगतत्त्वोपनिषदि—यदा तु राजयोगेन निष्पन्ना योगिभिः क्रिया ॥ तदा विवेकवैराग्यं जायते योगिनी ध्रुवम् । (१२९-१३०) ।

२. ब्रह्मलोक-स्वर्गदोषमधिकृत्य उक्तं महाभारते—स्वर्गकामो यजेतेति श्रूयते सततं श्रुतिः । फलं प्रकल्प्यापूर्वं हि ततो यज्ञः प्रवर्तते ॥ अत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमाः । न तत्राप्यस्ति सन्तोषो दृष्ट्वा दीप्तां परश्रियम् ॥ कृतस्य कर्मणः स्वर्गे भुज्यते कर्तृभिः फलम् । न चान्यत् क्रियते कर्ममूलोच्छेदेन भुज्यते ॥ सुखव्याप्तमनस्कानां सहसाभ्यागतापदम् । संज्ञामोहश्च पततां रजसा च प्रधर्षणम् ॥ प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् । आब्रह्मभवनादेते दोषा ब्रह्मन् सुदारुणाः । स्वर्गभाजः प्राप्नुवन्ति तस्मात् स्वर्गं न कामयेत् (द्र० मोक्षकाण्ड पृ० ७९) ।

इत्यादिकानन्तदोष-दृष्ट्या रागस्य तानवे ।
मायाविवेकतः शुद्धमात्मानं चिन्तयेत् सदा ॥१३॥
इदं तदिति निर्देष्टुं गुरुणाऽपि न शक्यते ।
उदासीनस्यात्मतत्त्वं स्वयमेव प्रकाशते ॥१४॥
बुद्धिबोधात्मको बुद्धि-साक्षी बुद्धेः परो विभुः ।
कूटस्थोऽहं चिदादित्य इत्येकाग्रोऽनुचिन्तयेत् ॥१५॥
वृत्तिबोधो घटच्छिद्रमिव नाऽयल्प इक्ष्यते ।
वस्तुतो वृत्तिबोधोऽहं पूर्णो व्योमवदक्षयः ॥१६॥
अन्तर्यद् दृश्यते सर्वं तद् बुद्धेर्वृत्तिरुच्यते ।
तेभ्यो दुःखात्मकेभ्योऽहं साक्षात् तद्वीक्षिता पृथक् ॥१७॥
कर्मकर्तृविरोधो हि वृत्त्या वृत्तिप्रकाशने[1] ।
वृत्तिधाराकल्पने च गौरवादिति निश्चितम् ॥१८॥
हर्षशोकभयक्रोध-लोभमोहमदैस्तथा ।
द्वेषाभिमानकार्पण्य-निद्रालस्यस्मरादिभिः ॥१९॥
धर्माधर्मैश्च सम्पूर्णा बुद्धिर्दुःखमयी तु मे ।
आत्मानं दर्शयत्येव भास्करायेव रोगिणः[2] ॥२०॥
अहं सर्वगतं शान्तं परमात्मघनं शुचि ।
अचिन्त्यचिन्मात्रनभो विश्वदर्पणमक्षयम् ॥२१॥
निरञ्जनं निराधारं निर्गुणं निरुपद्रवम् ।
निर्विशेषं सजातीयात् समस्तार्थावभासकम् ॥२२॥
ब्रह्मविष्णुमहेशाद्याः स्थावरान्ताश्च चेतनाः ।
अवैधर्म्यात्मकाभेदादहमित्यनुचिन्तयेत् ॥२३॥
अहमन्ये च पुरुषाः समचिद्व्योमरूपिणः ।
अत आत्मैक एवाहमिति श्रुतिषु गीयते ॥२४॥
इति पश्यन् स्वभोगैश्च योगी विश्वं प्रपूजयेत् ।
आत्मयागोऽप्ययं प्रोक्तः श्रुत्यक्तः[3] साङ्ख्ययोगिनाम् ॥२५॥
"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति"[4] ॥२६॥

---

१. सांख्य सू० ६।४९ द्र०
२. तु० आरोग्यं भास्करादिच्छेदिति वाक्यम् ।
३. प्राणाग्निहोत्रोपनिषदि शरीरयज्ञविवरणं द्र० ।
४. मनु १२।९१

इत्येवं मनुनाऽध्यात्मयोगो ज्ञानाङ्गमीरितः ।
तस्मादभयदानेन[१] स्वभोगाद्यर्चनेन च ।
सम्मानयन् भूतजातमात्मानमनुचिन्तयेत् ।।२७।।
ब्रह्मविष्णुशिवादीनां भोगे रागश्च हीयते ।
तेषां स्वसाम्यदृष्ट्याऽतः साम्यं योगी विचिन्तयेत् ।।२८।।
उत्पत्तौ प्रलये चैव सर्वावस्थासु सर्वदा ।
सर्वेषामेकरूपत्वे द्रष्टू रागादिकं कुतः ।।२९।।
विष्णवादयो महैश्वर्यं भुञ्जाना अपि नाधिकाः ।
मत्तोऽतोऽलं तदैश्वर्यैरविवेकजनप्रियैः ।।३०।।
गुणकर्मादिभिः किञ्चिन्निरीक्ष्याधिकमात्मनः ।
तदर्थं यतते लोको नाहं पश्यामि मेऽधिकम् ।।३१।।
तथा न्यूनं न पश्यामि यदतिक्रमशङ्कया ।
देवा दैत्यजयायेव यतिष्ये तज्जयाशया ।।३२।।
अहं यथा तथैवान्ये आब्रह्मा नारका जनाः ।
दृश्यन्ते स्वात्मवत् प्रेम्णा पितृभ्रातृसुतादिवत् ।।३३।।
क ईश ईशितव्यो वा कः श्रेष्ठः कोऽधमोऽपि वा ।
अभिन्ने भेददृष्ट्या स्यान्मृत्योर्भयमिति श्रुतिः[२] ।।३४।।
चिद्व्योमस्वेकरूपेषु ईशानीशादिरूपकः ।
रूपभेदो ह्यसन् सर्वः स्फटिके रूपभेदवत् ।।३५।।
धियां रूपैः पुमानेको बहुरूप इवेयते ।
वृकचर्मादिरूपाद्यैर्मायीव बहुरूपधृक् ।।३६।।
मामालिङ्ग्य निराकारं विविधाकारधारिणी ।
मायैवैका हि नृत्यन्ती मोहयत्यखिला धियः ।।३७।।
पुंसां भेदो बुद्धिभेदादम्बुभेदाद् यथा रवेः ।
व्योम्नश्च छिद्ररूपेण भेदः कुम्भादिभेदतः ।।३८।।
अतः शुद्धो बुद्धमुक्तः सर्वदा सर्वगोऽव्ययः ।
अहमन्ये च तत्राहो शत्रुमित्रादिधीर्मृषा ।।३९।।
ब्रह्मणीशे हराविन्द्रे सर्वभूतगणे तथा ।
उत्तमाधममध्यत्व-विभागो मायया मृषा ।।४०।।

---

१. सर्वभूताभयप्रदानं खलु योगिनामेकं मुख्यं कर्मेति पूर्वाचार्याः । 'सर्वभूताभयप्रदानेन शरणमुपागतः खल्वहं योगधर्मे' इति व्यासभाष्यम् (२।३३) अत्रानुसन्धेयम् । द्र० शान्ति० २४४।२८; २७८।२२; विष्णु० ३।९।३६; व० ध० सू० १०।१-२ च ।

२. द्वितीयाद् वै भयं भवतीति श्रुतेः । ते मृत्योर्यन्ति विततस्य पाशमिति च ।

त्रिगुणात्मकमायायास्त्रैविध्यादात्मनोऽपि हि ।
उत्तमाधममध्यत्व-त्रैविध्यं नैव हि स्वतः ॥४१॥
यथा देहे तथाऽन्यत्र चित्प्रकाशोऽयमव्ययः ।
व्यक्तताऽव्यक्ततामात्र-भेदो ह्यन्तरबाह्ययोः ॥४२॥
एवमन्येऽपि पुरुषा बद्धमुक्ताविशेषतः ।
ईशानीशाविशेषाच्च पुरुषार्थो न मेऽस्त्यतः ॥४३॥
महानिद्रैव मे साध्वी दुःखभोगहरा प्रिया ।
अप्रिया मूढचित्तानामसाध्वी धीहतात्मनाम् ॥४४॥
चिदादर्शे मयि धियो यद्यपि प्रतिबिम्बनम् ।
तत्त्वतो नैव दोषाय तथाऽपि त्याज्यमेव तत् ॥४५॥
स्वभावादस्य हेयत्वं स्वानुभूत्या हि सिध्यति ।
यथा कोऽपि परस्यापि वैरूप्यं न दिदृक्षति ॥४६॥
स्वामिन्यारोप्यात्मदोषान् साध्वीयमनुतप्यते ।
निर्दोषं स्वामिनं दृष्ट्वा निर्दोषा स्यात् पतिव्रता ॥४७॥
एवमस्या रूपभेदेऽप्येकरूपोऽस्मि सर्वदा ।
भुञ्जानो वाऽप्यभुञ्जानस्तां मदर्थामनन्यगाम् ॥४८॥
यथैकरूपतोपाधि-योगायोगदशास्वहो ।
आदर्शस्यामलस्यैव चिन्नभोदर्पणस्य मे ॥४९॥
दृश्यबुद्धिगता दोषाः साक्षात् तद्द्रष्टरि प्रभौ ।
न सन्ति मयि मोहाद्या भास्करे भास्यदोषवत् ॥५०॥
दुःखैर्बद्धा स्वमात्मानं त्यक्त्वा मद्भावमागता ।
मुच्यते दुःखबन्धाद् धीर्न मे मोक्षो न बन्धनम् ॥५१॥
कूटस्थासङ्गचिद्व्योम्नि धीदुःखप्रतिबिम्बनम् ।
योऽन्यो बन्धो भोगरूपः सोऽपि चिद्दर्पणे मृषा ॥५२॥
जाग्रदादित्रयावस्था-साक्षी ताभिर्विवर्जितः ।
अहं पूर्णश्चिदादित्य उदयास्तविवर्जितः ॥५३॥
दर्पणे मुखवद् विश्वं मयि बोधे न तात्त्विकम् ।
विभुत्वेऽपि च बाह्यान्तः सुषुप्त्यादावदर्शनात् ॥५४॥
मयि वाऽन्यत्र वा पुंसि केवलानुभवे विभौ ।
भाति यत् तद्विवर्त्तो धी-प्रतिबिम्बात्मकत्वतः ॥५५॥
शुक्तौ रजतवद् विश्वमतो मयि न दोषकृत् ।
मरीचौ तोयवत्[1] तद्वद् व्योमादौ नगरादिवत्[2] ॥५६॥

---

१. मरीचितोयदर्शनविषये वात्स्यायनभाष्यं १।१।४ द्र० ।

२. व्योमनगरम्-गन्धर्व नगरम् ; आह शंकराचार्यः—स्वप्नेमायामरीच्युदकगन्धर्व-

कालत्रयेऽपि नास्त्येव मयि विश्वं सनातने ।
अन्यत्रास्त्वथवा माऽस्तु बुद्ध्यादौ मम तेन किम् ॥५७॥
मयि सर्वं यथा व्योम्नि सर्वत्राहं यथा नभः ।
न सर्वं मयि सर्वत्र नाहं चालेपतः खवत् ॥५८॥
अत एवाविभागाख्याभेदेन क्षीरनीरवत् ।
ज्ञानात्मकमिदं विश्वं गायन्ति परमर्षयः[1] ॥५९॥
जगन्मम मदर्थत्वान्मच्छरीरसुखादिवत् ।
यथा मम तथाऽन्येषां ममैवेति धियो भ्रमः ॥६०॥
वस्तुतस्तु न कस्यापि किमपि व्यभिचारतः ।
स्वामित्वस्याध्रुवत्वेन पान्थस्याऽवासगेहवत् ॥६१॥
एकं चिन्मात्रमस्तीह शुद्धं शून्यं निरञ्जनम् ।
सूक्ष्मात् सूक्ष्मतरं तत्र न जगन्न जगत्क्रिया ॥६२॥
दृश्यते सर्वदृश्याढ्या स्वस्वबुद्धिपरम्परा ।
चिन्मण्डलमहादर्शे प्रतिबिम्बमुपागता ॥६३॥
क्वचिद् व्यक्तं क्वचित् सूक्ष्मं नभः सर्वत्र तिष्ठति ।
यथा तथा चिदाकाशं धादेशेऽन्यत्र च स्थितम् । ॥६४॥
चिदाकाशमयं विश्वं यतोऽतो धीरितस्ततः ।
भ्रमन्ती तत्र तत्रैव भासतेऽर्के घटादिवत् ॥६५॥
धर्माधर्मौ जन्ममृत्यू सुखदुःखादि चाखिलम् ।
जाग्रत्यपि मृषा स्वप्न इव जन्मादिकं मम ॥६६॥
दृश्ययोगवियोगाभ्यां चितौ जन्मविनाशधीः ।
अभिव्यक्त्यनभिव्यक्ति-दोषाभ्यां शशिनो यथा ॥६७॥
महासुषुप्तौ भवजन्मृत्युदुःस्वप्नधाराः क्षणभङ्गुराः धियः ।
पश्याम्यहं ताभिरलिप्तरूपो घनैरुपेतैर्विगते रवेः किम् ॥६८॥
इत्येवं सततं ध्यायन्नेकाग्रमनसा सुधीः ।
साक्षात्करोत्यात्मतत्त्वं वागगोचररूपतः ॥६९॥
स्वरूपं निर्मलं शान्तं मनस्त्यजति चेत् क्षणम् ।
तदैव दृश्यसंस्कार-शेषात् सङ्क्षुभ्यतीन्द्रियम् ॥७०॥
उत्थितानुत्थितांस्तत्र इन्द्रियारीन् पुनः पुनः ।
विवेकेनैव वज्रेण हन्यादिन्द्रो गिरीनिव ॥७१॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे राजयोगप्रकारपरिच्छेदः ॥

---

नगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्तीति (शारीरक २।२।२८) ।

१. तु० ज्ञानस्वरूपममलं निर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् (विष्णु० १।२।६) ।

## सप्तमः परिच्छेदः

एवमात्मानुभविनो जीवन्मुक्तस्य[1] लक्षणम् ।
स्पष्टं वक्ष्ये भवेद् येन ज्ञानाज्ञानपरीक्षणम् ॥१॥
श्रवणान्मननाद् वाऽपि अन्यथाऽत्मज्ञताभ्रमात् ।
कुर्य्याद् गुरुमविद्वांसं स्याच्चाज्ञो ज्ञाभिमान्यपि ॥२॥
नैश्वर्य्यानागतज्ञत्वादिकं ज्ञानस्य लक्षणम् ।
तद्दतेऽपि हि कैवल्यं योगभाष्यकृतेरितम्[2] ॥३॥
श्रौतस्मार्त्तानि वाक्यानि ज्ञानिनो मोक्षभागिनः ।
लक्षकाण्येव लिख्यन्ते विश्वासातिशयाय वै[3] ॥४॥
यत्र सर्वाणि भूतानि आत्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥५॥
यः सर्वत्रानभिस्नेहस्तत् तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥६॥
न विस्मरति सर्वत्र यथा सततगो गतिम् ।
न विस्मरति निश्चेत्यं चिन्मात्रं प्राज्ञधीस्तथा ॥७॥
नोदेति नास्तमायाति सुखे दुःखे मुखप्रभा ।
यथापूर्वस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥८॥
यो जागर्त्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासना बोधः स जीवन्मुक्त उच्यते ॥९॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥१०॥
यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते ॥११॥
अपि शीतरुचावर्के अत्युष्णेऽपीन्दुमण्डले ।
अप्यधःप्रसरत्यग्नौ जीवन्मुक्तो न चान्यधीः ॥१२॥

---

१. जीवन्मुक्तिः सांख्यैरभ्युपगम्यते । तथा च सूत्रम्—जीवन्मुक्तश्च (२।७८) । क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवतीति व्यासभाष्यम् (४।३०) ।

२. द्र० ३।५५ भाष्यम् ।

३. एतत् परिच्छेदान्तर्गता बहवः श्लोका योगवासिष्ठे, उपनिषत्सु गीताया मन्यत्र च दृश्यन्ते; तथाहि—नोदेतीतिश्लोकः (८) योगवासिष्ठे ३।९।६, वराहोपनिषदि (२२)च; यो जागर्तीति नवमः श्लोकः योगवासिष्ठे(३।९।७), वराहोपनिषदि(२३) च; रागद्वेषादीति दशमः श्लोकः योगवासिष्ठे,(३।९।८) वराहोपनिषदि (२४) च; यस्येति एकादशः श्लोकः योगवासिष्ठे (३।९।९) वराहोपनिषदि (२५) च; पञ्चमःश्लोक ईशोपनिषदि (६), षष्ठःश्लोको गीतायाम् (२।५७) ।

चिदात्मन इमा नित्यं प्रस्फुरन्तीह शक्तयः ।
इत्यस्याऽऽश्चर्य्यजालेषु नाभ्युदेति कुतूहलम् ॥१३॥
परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ।
तदेवाऽस्वादयत्यन्तर्नरसङ्ग[1]रसायनम्[2] ॥१४॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥१५॥
यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी ।
गम्भीरश्च प्रसन्नश्च गिराविव महाह्रदः ॥१६॥
परानन्दरसाक्षुब्धो रमते स्वात्मनाऽत्मनि ।
सर्वकर्मपरित्यागी नित्यहृष्टो निरामयः ॥१७॥
न पुण्येन न पापेन नेतरेणापि लिप्यते ।
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी च स सम्राडिव राजते ॥१८॥
वर्णधर्माश्रमाचार-शास्त्रमन्त्रनयेप्सितः ।
निर्गच्छति जगज्जालात् पञ्जरादिव केशरी ॥१९॥
वाचामतीतविषयो विषयाशादशोक्षितः ।
कामप्युपगतः शोभां शरदीव नभस्तलम् ॥२०॥
निःस्तोत्रो निर्नमस्कारः पूज्यपूजाविवर्जितः ।
संयुक्तो वा वियुक्तो वा सदाचारनयक्रमैः ॥२१॥
एतावदेव खलु लिङ्गमलिङ्गमूर्त्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
तद् यस्य यन्मदनकोपविषादलोभ-
मोहापदामनुदिनं निपुणं तनुत्वम् ॥२२॥
तुर्य्यविश्रान्तियुक्तस्य प्रतीपस्य भवार्णवात् ।
न कृतेनाकृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ॥२३॥
तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा ।
ज्ञानसम्प्राप्तिसमये मुक्त एवामलाशयः ॥२४॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासङ्क्षये चेतःक्षयो मोक्ष इति श्रुतेः[3] ॥२५॥

---

१. वरसंग, परसंग (पाठा०) ।

२. योगवासिष्ठ ५।७४।७३;

३. मोक्षे चित्तं स्वयोनावुपशाम्यतीति सत्कार्यवाददृष्ट्याऽभ्युपेयमेव । यथाह—"यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति" इति (मैत्रायणी १।२।३) ।

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव[1] ॥२६॥
अनाप्ताखिलशैलादि प्रतिबिम्बे हि यादृशी ।
स्याद् दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥२७॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ।
स्यात्तादृशी केवलता स्थिते द्रष्टर्य्यवीक्षणे[2] ॥२८॥
चिन्मात्रं चेत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यनिलयं यदनाधि निरामयम् ॥२९॥
न शून्यं नापि चाकारं न दृश्यं न च दर्शनम्[3] ।
अनाख्यमनभिव्यक्तं तत् किञ्चिदवशिष्यते ॥३०॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे जीवन्मुक्तिपरममुक्त्योः परिच्छेदः ।

इति साङ्ख्यसारस्योत्तरभागः ।
सांख्यसारः समाप्तः ॥

---

१. २६ श्लोकः योगवासिष्ठे ३।९।१४

२. २८ श्लोकः योगवासिष्ठे ३।४।५८, महोपनिषदि (५४) च ।

३. अतएव वृत्तिज्ञातृत्वहीनः पुरुषोऽविज्ञातेत्यपि कथयितुं शक्यते, अतएव विष्णुरविज्ञातेत्युच्यते (विष्णुसहस्रनामभाष्यम् ४८२ नाम) ।

श्रुतिस्मृतिपुराणादिशास्त्रवाक्यसमाश्रिता ।
टिप्पणी सांख्यसारस्य तोषाय विदुषां भवेत् ॥

# साङ्ख्यसूत्र-शब्दानुक्रमणी

अथेह प्रस्तूयते सांख्यसूत्रगतानां शब्दानामनुक्रमणी। अस्यां सूच्यां न-तु-वा-एवमित्येतत्सदृशानि पदानि अनावश्यकत्वात् परित्यक्तानि। यत्र शब्दानामादौ सर्वनामपदं ( यथा—तत्सिद्धिः ५।६ इत्यत्र ) संख्यापदं ( यथा द्वाभ्याम्—५।१० ), लक्षकं पदं ( यथा २।१५ सूत्रे विपरीतेति शब्देन अधर्मादीनां ग्रहणं भवति ) वा विद्यते, तत्र विवक्षितस्य शब्दस्य संयोजनं कृत्वैव ( आवश्यकस्थने ) तत् पदं वर्णक्रमानुसारेण सूच्यां स्थापितम्, येन इयं विषयज्ञानोपयोगिनी अपि स्यात्। समासस्थले क्वचित् पदानि पृथक् कृतानि, सूत्रानुगतवचन-विभक्ती च संयोजितानि, वर्णक्रमानुसारेण च स्थापितानि। अनुस्वार-विसर्गौ पूर्वस्वरानुगतौ इति मत्वा शब्दक्रमः स्थापितः। शास्त्रोपयोगदृष्ट्या सर्वे शब्दाः संकलिता इति निवेद्यते।

त



द

---

शब्दानुक्रमणी सांख्यसूत्राणां या विनिर्मिता ।
गवेषकोपकाराय तया तुष्यतु शंकरः ॥

द्वितीयं परिशिष्टम्

# सांख्यसूत्रसूची

## ( वर्णक्रमानुसारिणी )